# DHVANYĀLOKA BY ĀNANDAVARDHANA

AND

# LOCANA BY ABHINAVAGUPTA

WITH

## KAUMUDĪ BY UTTUṄGODAYA

AND

## UPALOCANA BY KUPPUSVĀMI SĀSTRI

UDDYOTA ONE


EDITED BY

THE LATE MAHAMAHOPADHYAYA

PROF. S. KUPPUSWAMI SASTRI, M.A., I.E.S.,

SASTRARATNAKARA T. V. RAMACHANDRA DIKSITAR

*Principal, Madras Sanskrit College,*

AND

DR. T. R. CHINTAMANI, M.A.

*Senior Lecturer in Sanskrit, University of Madras.*



PUBLISHED BY

THE KUPPUSWAMI SASTRI RESEARCH INSTITUTE

MADRAS

1944

ॐ

# ध्वन्यालोकः

# श्रीमदानन्दवर्धनकृतः

## श्रीमदभिनवगुप्तपादकृतलोचनेन

श्रीमदुत्तुङ्गोदयकृतकौमुद्या

श्रीमत्कुप्पुस्वामिशास्त्रिवर्यकृतेन उपलोचनेन च

संवलितः

प्रथमोद्द्योतः


महामहोपाध्याय

## एस्. कुप्पुस्वामिशास्त्रिभिः

शास्त्ररत्नाकर टि. वि. रामचन्द्रदीक्षितैः

टि. आर्. चिन्तामणिभिश्च

संपादितः



श्रीकुप्पुस्वामिशास्त्रि रिसर्च् इन्स्टिट्यूट् द्वारा

प्रकाशितः

---

मुद्रणाधिकारः स्ववशस्थः]     १९४४     [मूल्यम्—अष्टौ रूप्यकाणि

# PUBLISHER'S NOTE

It was in the year 1927 in the course of one of the many edifying conversations that I used to have with the late Mahāmahopādhyāya Professor S. Kuppuswami Sastriar that I casually suggested to him the publication of a good edition of the Dhvanyāloka with the Locana and with a proper and understandable commentary on them. He readily fell in with the idea and I undertook to be the publisher of it. The work was begun immediately. The Madras Law Journal Press was requested to print the book and they were kind enough to accede to our request. The work went on for sometime vigorously and the first and second parts of the Dhvanyāloka and the Locana, with the Kaumudī of Uttuṅgodaya and the Upalocana of Prof. Kuppuswami Sastriar were published in 1932 and 1936. But afterwards owing to various circumstances, one of which was the illhealth of the Professor, the publication of the last part was delayed very much and the lamented demise of the Professor took place before its completion. It is a matter of keen regret to me and to the others concerned in this work. I am glad that we are able to publish the book as a memorial volume. Very great sorrow has been felt throughout India at the great loss sustained by the world of scholars in the passing away of the learned Professor and it is fitting that this work which embodies a very important part of his labours as a scholar should be published in his memory. The Dhvanyāloka is a standard authoritative classic on Sanskrit rhetoric. But it was not studied very much by scholars in Southern India. It is mainly due to Professor Kuppuswami Sastriar that the work was prescribed as a text book for the Siromani and Sanskrit Honours examinations of the Madras University. Now it has come to be studied very largely and to be appreciated by all scholars and students of the Alankara sastra. The Professor himself began to teach it to the students in the Presidency College. As a result of his scholarship and of his experience in teaching this work for nearly twenty years, he became a great authority on the book and with great industry and patience he brought together the proper readings and emendations of the text hitherto available to us. The present edition is the outcome of his labours as a teacher of this book to successive generations of students and of his scholarship and industry. It is sure to be of immense benefit to the students who study the book and to all scholars in the field of Sanskrit rhetoric.

In spite of careful scrutiny and proof reading a few errors have crept in. As there will be further delay if an Errata list is to be prepared and published, we have been obliged to omit it. We crave the indulgence of our readers for this omission. We are not also publishing a critical introduction as mentioned in the preface.

We are all very grateful to Sri R. Narayanaswami Iyer, proprietor of the Madras Law Journal Press, for his great kindness in allowing this work to be published as a memorial volume and printing it free of cost and making a gift of the proceeds of the publication to the Kuppuswami Sastriar Research Institute that has been started in commemoration of the late Professor's great services to Sanskrit learning.

K. Balasubramania Aiyar, B.A., B.L.,
*Advocate,*
*Managing Editor,*
*Journal of Oriental Research, Madras.*

# PREFACE

This edition of the Dhvanyāloka with the Locana is based on the following manuscripts :—

क. ख. ग. represent the manuscripts utilized by the editor of the work in the Nirnayasagar Press, Bombay.

घ. This is a paper ms. of the Locana, now deposited in the Government Oriental Mss. Library, Madras.

ङ. This is a palm leaf ms. of the Locana in Malayālam characters, belonging to the Kuḍalur Mana, now on loan in the Govt. Oriental Mss. Library.

च. This is another palm leaf ms. in Malayālam characters, deposited in the Govt. Oriental Mss. Library, Madras.

त. This is a palm leaf ms. of the Locana in grantha characters in the Sarasvatī Mahal Palace Library, Tanjore.

The edition of the Kaumudī is based on the copy of the work, now in the Govt. Oriental Mss. Library. This copy has been collated with two other manuscripts : They are :—

का. This ms. is from Kottakal.

कू. This is form Kuḍalur.

त. This is a ms. from Tripunithura.

This is the first fasciculus of the work. It will be published in parts. Further parts will follow in due course.

A critical introduction and the necessary indexes will be published along with the last part.

श्रीः

# श्रीमदानन्दवर्धनाचार्यविनिर्मितो
# ध्वन्यालोकः

## श्रीमहामहेश्वराचार्याभिनवगुप्तविरचितं
## लोचनम्

केरलीयसहृदयशिखामणिश्रीमदुत्तुङ्गोदयराजकृता

कौमुदी

महामहोपाध्याय विद्यावाचस्पति ब्रह्मश्री

कुप्पुस्वामिशास्त्रिप्रणीतम्

उपलोचनं च.

कौमुदी

या सा व्यञ्जकभेदेन बहुधैका विभाव्यते ।
काव्यार्थसारभूतां तामाद्रिये संविदः[दं] पराम् ॥ १ ॥

विश्वाविर्भावविश्राणननिपुणनिजोन्मेषमन्तर्विचित्रा-
न्भेदानव्यक्तमाभासयदभिगमयद्व्यक्तभावं च भूयः ।
प्रत्यक्षार्थानुवेधप्रकटितमहिम स्पष्टमन्तस्सामिन्धा-
मन्धीभावं निरुन्धात्किमपि निरुपमं धाम सारस्वतं वः ॥ २ ॥

नवरसमयमन्यद्विश्वमन्यव्यपेक्षाविरहितमपरोक्षं शश्वदुन्मीलयन्ती ।
कविसहृदयसंसन्मानसाम्भोजहंसी विहरतु हृदि नित्यं वाङ्मयी देवता वः ॥३॥

यत्प्रज्ञाशिल्पियन्त्रैस्स्फुटघटितविवेकात्मसोपानपङ्क्तिः
प्राप्तोर्ध्वोर्ध्वाधिरोहास्स्थितमुपरि बुधा विद्यते [विन्दते] वस्तुतत्त्वम् ।

१. त. यत्न.

## कौमुदी

वाग्देवीलास्यशिक्षाक्रमपरिकलनापूर्वरङ्गायमाणा-
नाद्यानाचार्यवर्याननुदिनमिह तान्भामहाद्यान्प्रपद्ये ॥ ४ ॥

पूर्वैरसंचरितमुद्ध[द्धृ]तकण्टकं सत्काव्यार्थवर्त्म यदुपज्ञमदः प्रवृत्तम् ।
आनन्दवर्धनमनुत्तममन्वितार्थनामानमेनमहमन्वहमानतोऽस्मि ॥ ५ ॥

ध्वनिसमयरहस्यवस्तुतत्त्वप्रथनपटिष्ठगरिष्ठवाक्प्रपञ्चान् ।
अभिमतगुरु[सुर]पादपान् गुरूंस्तानभिनवगुप्तपदाभिधानुपासे ॥ ६ ॥

विद्यास्वस्तरवे नमोऽस्तु गुरवे तस्मै कृपाम्भोधये
शिष्याज्ञाननिशान्धकारनिवहप्रध्वंसतिग्मांशवे ।
यत्कारुण्यकटाक्षपातकणिकानौकाश्रितैरश्रमा-
त्तीर्णोऽस्माभिरुदीर्णनीतिसलिलो ध्वन्यर्थतन्त्रार्णवः ॥ ७ ॥

काव्यालोकार्थसंयोजितमभिनवगुप्ताह्वयाचार्यपादै-
रात्मीयं लोचनं यत्सुनिशितधिषणैरप्यनामृष्टसारम् ।
तत्सारोद्ग्राहिणीं सम्प्रति विवृतिमहं संविधातुं समीहे
विद्वांसस्तत्परास्तत्परगुणसुखिनस्सन्तु सन्तोषवन्तः ॥ ८ ॥

ख्यातिं नेह प्रतिष्ठां जगति गमयितुं न प्रकृष्टां विदुष्टा-
माविष्कर्तुं निजां वा विवृतिविरचना प्रस्तुता वस्तुतो नः ।
तीर्थेनानेन काव्यामृतसरसि मनाङ्मङ्क्तुकामोऽस्मि तस्मा-
न्मन्तुं मा मन्तुमन्तं ननु दधत मनो हन्त मा मा महान्तः ॥ ९ ॥

आशंसिता रसिकलोकचकोरवृन्दैराविर्भवन्त्युदयतोऽमृतगोरुदारा ।
आचन्द्रतारकमियं नवकौमुदीव प्रीतिं दधातु जगतां विवृतिर्मदीया ॥ १० ॥

अथ सकलमहाजनबहुमतमहिमा महामाहेश्वरपरमेश्वरः परमेश्वर एव जगदनुग्रहकृतपरिग्रहविग्रहविशेषः श्रीमानभिनवगुप्ताचार्यः श्रीमदानन्दवर्धनाचार्यविरचितं काव्यालोकं व्याकृतमपि पूर्वैरनुन्मीलिताकूतसारसर्वस्वम् अत एवाव्याकृतकल्पं मन्वानः सन्नुपसन्नजनोपचिकीर्षया स्वयं व्याचिकीर्षुश्चिकीर्षितप्रबन्धकीर्तिप्रतिष्ठात्मकप्रयोजनप्रस्तावकतया समा-

लोचनम्

अपूर्वं यद्वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात्सारयति[1] च ।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-
त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते[2] ॥

कौमुदी

सादितसमग्रपुरुषार्थसाधनमविच्छिन्नार्यजनाचारपारम्पर्यागतमधिक्रियमाणाभिमतदेवतासतत्त्वानुस्मरणस्तुतिनमस्कारलक्षणमङ्गलमादितोऽनुसंदधानः श्रोतॄणामपि तत्कर्तव्यतानियमावबोधनार्थं ग्रन्थे निवेशयति—**अपूर्वं यद्वस्त्विति** । अत्र च क्रमेणापूर्ववस्तुप्रथयितृत्वजगत्सारयितृत्वविशिष्टभासयितृत्वात्मकविशेषणत्रयसमर्पकैस्त्रिभिः यद्वृत्तवाक्ये विशिष्टगुणसङ्कीर्तनरूपस्तुतिलक्षणं मङ्गलमाचरितम्; तत्कविसहृदयाख्यं सरस्वत्यास्तत्त्वमित्यनेन तत्त्वानुस्मरणलक्षणम्, अखिलप्रतिष्ठास्थानभूतनिजहृदयायतनस्थिरीकरणरूपत्वात्तस्य; 'विजयते' इत्यनेन पुनर्नमस्कारलक्षणम् । एवं मानसवाचिककायिकभेदभिन्नं प्रबन्धारम्भसम्भावितं मङ्गलं त्रिविधमिहाचार्येणानुसंहितम् । यद्यपि 'य एते वृक्षास्तान्पश्य' इत्यादाविव यद्वृत्ताभिहितधर्मान्तरविशिष्टधर्मिविशेषपरामर्शकत्वं तच्छब्दस्य स्थितम्, तथापि तन्त्रावृत्त्यन्यतराश्रयेण पारमार्थिकसरस्वतीतत्त्वानुसन्धानानुरूपत्वमविरुद्धमेव; प्रसिद्धार्थत्वस्य सर्वनामस्वारस्यायातस्य हातुमशक्यत्वात् । यदाहुः—"सर्वनाम प्रसिद्धार्थं प्रसाध्यार्थविघातकृत्" इति । तथानुभूतार्थस्य परामर्शकत्वमपि "ते लोचने" इत्यादाविव तच्छब्दस्य सुप्रसिद्धम् । अनुभूतत्वं च तत्त्वस्य सारस्वतस्य सकलसुकविसहृदयचक्रवर्तिनोऽस्य स्वहृदयायतनसततोदयमानप्रतिभाभिधानपरवाग्देवतानुग्रहभाजनत्वादतिस्पष्टमेव । यद्यपि विशेषजयकर्तृविशेषसमर्पक-

उपलोचनम्

परस्परसमास्वादप्रथमानसतत्त्वयोः ।
कविताबुधयोर्योगं नमामि शिवयोर्यथा ॥ १ ॥

विनोपलोचनेनालं न विवेक्तुं हि लोचनम् ।
निगूढार्थास्ततस्सोऽयं न मुधा स्यात्परिश्रमः ॥ २ ॥

अथ "सरस्वत्यास्तत्त्वं कविसहृदयाख्यम्" इति लोचने । अत्र ध्वन्यमाना अर्थविशेषा आस्वाद्यन्तां "परस्परसमास्वाद" इत्यादिपद्ये उपलोचनस्योपक्रमे ।

१. घ. स्रावयति. २. क. ख. ग. विजयतात्,

कौमुदी

तत्परतयैव तदित्यादिपदचतुष्टयमिह विधेयांशवाक्ये विनिवेशितम्, तथाप्यन्यार्थोपात्तवद्व्यादावन्यार्थत्ववत्तत्त्वानुस्मरणरूपमङ्गलार्थत्वमप्यविरुद्धमेव। ननु विजयकर्तृत्ववचनमप्यपूर्ववस्तुप्रथयितृत्वादिवद्विशिष्टगुणसङ्कीर्तनरूपा स्तुतिरेव, "उत्कर्षप्राप्तिरायोऽर्थः" इति जयतेरुत्कर्षार्थत्वप्रसिद्धेः; तेन नमस्काररूपमङ्गलाचरणस्यात्रानुपलब्धिरेव इति चेत्—न; स्तुतेस्त्रिपाद्यैव कृतत्वात्; विजयकर्तृत्वोक्तिरपि यदि स्तुतिमात्रपर्यवसायिनी आस्थीयेत, तदापेक्षितानभिधानानपेक्षिताभिधानदोषापत्तिरपरिहार्या; करणीयस्य नमस्कारस्याकृतत्वात्; स्तुतिरूपत्वे चापूर्ववस्तुप्रथयितृत्वादिवदनुवादकोटिविनिवेशेनैव[1] भाव्यम्; न तु विधेयांशविनिवेशः। तस्मादिदमर्थमेतत्[2]—जयतेस्तावदुत्कर्षार्थत्वं प्रसिद्धम्; तस्य च विशेषानुपसंहारे सति सर्वप्रतियोगिक[त्व]सिद्धेः सर्वोत्कर्षाभिधानमुखेन तदविनाभाव[वि]नमस्काराक्षेपात् सरस्वतीतत्त्वकर्मकं नमस्काररूपं महामङ्गलं 'विजयते' इत्यनेनोपक्षिप्तमिति। ननु साक्षादेव नमस्कारकरणौचित्ये किमर्थमुत्कर्षद्वारेणार्थात्तत्करणम्? न च विश्वोत्कर्षस्य नमस्कारहेतुत्वात्तन्मुखं तत्करणमिति वाच्यम्, नमस्कारे हेतुनिरूपणस्यानुचितत्वात्; तन्निरूपणपरत्वे वा पृथगेव नमस्कारवचनेन सम्भाव्यम्। तस्मादुत्कर्षाक्षेपलब्धनमस्कारपर्यन्तीभूयैव पर्यवस्यतीत्यनया वस्तुस्थित्योत्कर्षमात्राभिधानेन नमस्कारप्रतीतेः परिपूर्णायाः स्वयमप्रत्यूहमाविर्भावादिह तन्मात्राभिधानम्; आक्षेप्याक्षेपकभावश्च तावन्मात्रपरमार्थ एव, न त्वविनाभावरूपव्याप्त्यनुसन्धानलक्षणः; नमस्कारमात्रोपक्षेपे तु पूर्वभूमिभूतोत्कर्षपरामर्शादिनमस्कारपर्यन्तरूपैकघनत्वापन्नप्रतीतिधाराप्रतिलम्भान्निरतिशयनमस्काररूपमङ्गलाचरण[णा] सिद्धिरिति विशेषः। तदियमत्र वाक्ययोजना—तत् अपूर्ववस्तुप्रथयितृत्वविशिष्टभासयितृत्वविशिष्टम् अथ च स्वविज्ञानक्रमोपारूढं सकललोकवेदागमविद्वदनुभवप्रसिद्धम्, सरस्वत्याः लौकिकवैदिकादिभेदभिन्नसकलशब्दप्रपञ्चाभिमानिन्याः परचैतन्यस्वरूपिण्या देवतायाः, तत्त्वं पारमार्थिकं स्वरूपमुत्कृष्टम्, विजयते विश्वस्मादुपरि वर्तते; तद्व्यतिरिक्तस्य समस्य जगतः तदनन्तर्भूतस्य [तदन्तर्भूतस्य] च स्वात्मनस्तन्निमज्जितस्वरूपतया साक्षात्तदेवाहं भवामि इति यावत्; नमस्कारस्य नमस्कार्यदेवतास्वरूपतादात्म्यसम्पादनसारत्वात्। अत्र शब्दविग्रहत्वेन सरस्वत्याः प्रसिद्धेः तद्रूपस्यापारमार्थिकत्वेनोत्कर्षशालितया[3] परामष्टुमशक्यत्वात्तन्मात्रस्य विजयकर्तृत्वाभिधानमघटमानमेव स्यादिति तत्त्वपदेन तदीयपराभिधानपरमार्थस्वरूपग्रहणमिह कृतम्। ननु रूपान्तरस्यापारमार्थिकत्वादेव सरस्वतीशब्दवाच्यत्वविरहात्कथं सरस्वत्या इति भेदनिर्देशः? सत्यम्—तस्याप्यविद्यादशायां तच्छब्दवाच्यत्वेन प्रसिद्धत्वात्तद्व्युदासाय तद्ग्रहणम्। अथवा—'पुरुषस्य चैतन्यम्' 'राहोः शिरः' इतिवत् व्यपदेशिवद्भावो व्याख्येयः। इत्थं पर-

१. का. -कोऽभिनिवेशेनैव. २. का. तस्मादित्थमेतत्. ३. त. चापार.

कौमुदी

देवतासतत्त्वानुस्मरणाभिवन्दनरूपं मङ्गलमाचरितम् । अथ तस्यैव प्रतिपाद्यत्वेनाधिक्रियमाणत्वोद्घाटनाय यद्वृत्तवाक्य एव तथाभावसमुचितं किञ्चिद्विशेषणं ददाति—**कविसहृदयाख्यमिति** ॥ वस्तुतो हि कविसहृदयशब्दौ तदीयविशिष्टचैतन्यवाचकावेव, न कार्यवाचकौ यथा "उत्तमयुवप्रकृतिः" इत्यादौ । तच्चैतन्याभिव्यक्तत्वादेव सरस्वतीतत्त्वस्यापि तदाख्यत्वम् । तेन शब्दार्थात्मककाव्यशरीरोपहितत्वं तत्त्वस्योपदर्शितम् । तत्रापि विशिष्टशब्दात्मकभागरूपत्वमपूर्ववस्तुप्रथयितृत्वादिविशेषणसामर्थ्यात्सिध्यति । ननु काव्यात्मकत्वं कविशब्दोपादानेनैव सेत्स्यति, किमर्थं सहृदयपदोपादानमिति चेत् ; सहृदयकर्तृकविशिष्टविचारक्रियागोचरीभूतस्यैव काव्यस्य मुख्यतया काव्यरूपत्वादिति ब्रूमः । अत एव वचनम्—"कविरेपि विदग्धोऽसौ सूक्तिमुद्राविचारकः" इति । तथा चाचार्येणैव "या व्यापारवती रसान् रसयितुम्" इत्यत्र श्लोके "ते द्वे अप्यवलम्ब्य" इति समानकार्य[र्या]निर्वर्तकत्वेन समुचि[च्चि]तस्यैव दृष्टिद्वयस्य विश्वनिर्णयने हेतुत्वं अपिशब्देनोक्तम् । काव्यं चैवेह लक्षणप्रतिपादनद्वारेण तद्विशिष्टतया प्रधानत्वेन प्रतिपाद्यमिति तस्याधिक्रियमाणत्वं व्यक्तमेव । यदि वा कविसहृदयशब्दौ तद्व्यापारविषयकाव्यपरतया अत्र प्रयुक्तौ, विशिष्टकाव्यकरणविचारसारत्वात्कविसहृदयत्वसिद्धेः । यदि वा कवीनां सहृदयानां च विजयकर्तृताभिप्रायमिदं विशेषणम्, तेषामपि काव्यारम्भे नमस्कार्यत्वात् । अथवा चिरन्तनलक्षणकारविवक्षयेदम् ; सहृदयानामपि कवित्वविशेषसम्पत्तेरावश्यकत्वात् । यदि वा कविशब्देन सर्वेऽपि कवयः सहृदया गृहीताः; सहृदयशब्देनानन्दवर्धनाचार्यः, ततश्च देवतात्मत्वे गुरुनमस्कारोऽप्यनुसंहितो भवति ; सर्वत्राप्यत्राभेदोपचारोऽवसेयः । अथवा कविसहृदययोराभीक्ष्ण्येन ख्यानं स्फुरणं यस्येति कविसहृदयाख्यम् ; अस्मिंस्तु प्रकारे नोपचारः, किन्तु मुख्यमेव तदात्मत्वमिति विशेषः ॥

ननु सरस्वतीतत्त्वस्य परमा[परा]त्मकत्वस्याबाध्यत्वेन पारमार्थिकत्वात् विश्वोत्कृष्टत्वमस्तु ; काव्यात्मनस्तस्य तु तत्कथं ? न हि तत्त्वस्येव [ अ ]तत्त्वस्योत्कर्षोऽवकल्पेत, अवस्तुरूपत्वादिति विजयकर्तृत्वं तस्यासमञ्जसमित्याशङ्क्य विश्वकर्तुः प्रजापतेरस्याधिक्यं दर्शयितुमाह—**अपूर्वमित्यादि** ॥ यत् विशिष्टं सरस्वतीतत्त्वं 'कमलमनम्भसि' इत्यादिकं कर्तृ अम्भोऽधिकरणकमलादिरूपपूर्वसिद्धवस्तुविरुद्धं तद्विपरीतानम्भोऽधिकरणकमलादिकरणरूपं वस्तु निरुपाख्यरूपनृशृङ्गादिविलक्षणमर्थम्, कारणकलाम् उपादानादिकारणलेशव्यपेक्षाम् अन्तरेण, प्रथयति विस्तारयति, सविस्तारं निर्मिमीते ; "यद्वस्तु प्रथयति" इत्येतावत्युक्ते विरिञ्चिव्यतिरेको विवक्षितो न सिध्येत्, वस्तुप्रथयितृत्वस्य तस्मिन्नप्यविशिष्टत्वात् इत्यपूर्वग्रहणम् । अनेनाभिनवत्वमाश्चर्यकारित्वं च तन्त्रेणावृत्त्या वा

१. का. काव्य.  २. त. कवे.

कौमुदी

गृह्यते । ननु अपूर्वत्वं वस्तुनो यदि केनचिद्रूपेण विवक्षितम्, तदा व्यतिरेकासिद्धिः । तादृशवस्तुप्रथयितृत्वस्य विरिञ्चेऽपि सुघटत्वात्; अथ सर्वात्मना तत्, "कमलमनम्भसि" इत्यादावपि दुर्घटम्; तत्कथमनेनैव व्यतिरेकसिद्धिरित्यत उक्तम्—**विना कारणकलामिति** ॥ ननु कारणकलां विना यन्निर्माणं तद्गन्धर्वनगरादिकल्पत्वात् सहृदयजनानादरणीयमित्यत उक्तम्—**वस्त्विति** ॥ आस्वाद्यतासारत्वमत्र वस्तुत्वं तेन नानादरणीयत्वशङ्कावकाश इति भावः । सकललक्ष्यव्यापिताभिप्रायेणापूर्वप्रथयितृत्वाभिधानमिति शङ्का मा भूदिति कविप्रौढोक्तिमात्रसिद्धविषयत्वख्यापनाय चेदं वस्तुग्रहणम् । उत्तरपादप्रकटयिष्यमाणस्यात्राप्यपरिसङ्ख्यानमभिप्रेत्य प्रथयतीति विस्तारसाहित्यं निर्माणस्य दर्शितम्; तस्य समुचितविभावादिसम्यग्योजनेन रसाभिव्यञ्जनसामर्थ्यसम्पादनादन्यस्यानिरूपणात्, इतरथा तदुक्त्यानर्थक्याच्च निर्माणस्य विस्ताराविनाभावात् । अत्रापूर्वमिति, कारणकलां विनेति च निर्माणसाम्ये सति सारस्वतस्य तत्त्वस्य विरिञ्चापेक्षयाधिक्यप्रतीतेः व्यतिरेकालङ्कारो व्यङ्ग्यः । उक्तं हि-"उपमानाद्यदन्यस्य व्यतिरेकः स एव सः" इति । नये तत् [नन्वेतत्] अपूर्ववस्तुप्रथयितृत्वं कविप्रौढोक्तिमात्रनिष्पन्नार्थकाव्यैकनियतं सत् न कृत्स्नकाव्यवर्ति विवक्षितविरिञ्चव्यतिरेकसमर्थनायालमित्याशङ्क्य सकललक्ष्य[1]वर्तिविशेषणान्तरमुपक्षिपति—**जगदिति** ॥ अत्र यदिति पदं पूर्ववाक्यादनुकृष्य योजनीयम् । वस्तुशब्दस्याप्यापाततोऽनुषङ्गशङ्काकलङ्कसङ्क्षालनाय सारीकरणस्य पूर्वसिद्धापूर्वसिद्धसकलवस्तुसाधारण्यसंसूचनाय जगच्छब्दप्रयोगः । यत्कविसहृदयाख्यं सरस्वतीतत्त्वं ग्रावप्रख्यं निसर्गतो नीरसं सत् जगद्गतमपूर्वसिद्धं पूर्वसिद्धं च सकलं वस्तु निजगोचरं सारयति सारं रसात्मक[2]स्थिरांशसहितं करोति । एतच्च समुचितविभावादिसम्यग्योजनक्रमेण रसाभिव्यञ्जकत्वसम्पादकत्वरूपं[3] सारयितृत्वं सकलसत्काव्यनिर्विवादनिवेशितया स्फुटतरोपलम्भमेव । कथङ्कारं पुनर्नीरसस्य सतः सरसीकरणम्? न ह्यसदेव सदन्यरूपतया विपरिवर्तयितुं शक्यम्; "न हि स्वभावो भावानां व्यावर्तेत" इति न्यायादित्यत्राह—**निजरसभरादिति** ॥ निजः आत्मीयः काव्यसम्बन्धी यो रसः शृङ्गारादिस्तस्य भरोऽतिशयः ततो हेतोः । एतदुक्तं भवति—सुकुमारमतीनां रसास्वादमुखेन व्युत्पत्तिं सम्पिपादयिषोः स्वयमास्वाद्यमानरसामृतभरितहृदयमहाह्रदस्य सुकवेर्मुखारविन्दाद्विनिष्यन्दिता काव्यरूपा वाणी स्वसौभाग्यविशेषमहिम्नार्थानपेक्षयैव रसं व्यञ्जयन्ती स्वगोचरस्यार्थस्यापि रसव्यञ्जकत्वं सम्पादयतीति । इत्थं विशेषणद्वयेन सरस्वतीतत्त्वस्य विरिञ्चापेक्षया व्यतिरेक आधिक्यलक्षणः साधितः ।

१. का. 'सकललक्ष्य' इत्यस्मिन् स्थाने 'कलङ्कसंक्षालनाय सारीकरणस्य' इति दृश्यते.

२. का. सारात्मक. ३. का. संवादकत्वरूपं.

## कौमुदी

अथ तमेवाभ्युच्चयहेतुप्रदर्शनेन द्रढिमानमानेतुं विशेषणान्तरं ददाति—**क्रमादिति** ॥ अत्रापि यच्छब्दानुषङ्गो द्रष्टव्यः । चकारो भासयतीत्यत्र पूर्वस्मादाकृष्य सम्बन्धनीयः । प्रख्या प्रकृष्टा ख्यानं प्रतिभात्मकं; प्रकर्षश्च[1] विशिष्टव्यापारशालित्वम्; यद्वक्ष्यति—"या व्यापारवती" इत्यादि । उपाख्या वचनमभिधानलक्षणम् । प्रख्या चोपाख्या च प्रख्योपाख्ये तयोर्यः क्रमात्प्रसरः । प्रथमं हि प्रख्या, तदनन्तरमुपाख्येति क्रमः । तेन प्रसरणसुभगं हृद्यं यथा भवति तथा यत्कविसरस्वतीतत्त्वं पूर्वसिद्धानपूर्वसिद्धानप्यर्थान् भासयति । अत्र च प्रख्योपाख्याप्रसरस्य न विशिष्टभासनमात्रे हेतुत्वं विवक्षितम्; किन्तु अपूर्ववस्तुनिर्माणे सरसतापादने च । अतश्च विभागेन पूर्वत्रापि योजना द्रष्टव्या, यत्प्रख्योपाख्याप्रसरेणापूर्वं वस्तु प्रथयतीत्यादि । अत्र चोदाहरणं पूर्ववाक्यार्थोदाहरणीकृतमेव "कमलमनम्भसि" "इदं रुणद्धि" इत्यादिकमेव । प्रौढोक्तिनिमित्तार्थे तावदपूर्वप्रथनं सरसीकरणं सुभगत्वं च त्रयं समुदितमस्त्येव । स्वतःसम्भव्यर्थे तु सारणाविशिष्टभासनद्वयमेव । अत्रापि स्वप्रख्योपाख्याविषयस्य सुभगत्वं सम्पादयितुमसमर्थात् प्रजापतेर्व्यतिरेको व्यङ्ग्यतयावभासत एव ।

आद्यस्यापूर्वमित्यादिपद्यस्य निरवद्यया ।
अर्थतत्त्वमतिस्पष्टमष्टश्लोक्याधुनोच्यते ॥ १ ॥

परात्मकं सरस्वत्यास्तत्त्वं काव्यात्मतां गतम् ।
इष्टदेवतयौचित्यात्प्रतिपाद्यतयेह च ॥ २ ॥

आदावुत्कर्षशालित्वकथनेन नमस्कृतेः ।
अर्थाक्षेपमभिप्रेत्य नमस्कार्यतयोदितम् ॥ ३ ॥

नूतनं वस्तु चित्रं च हेतुलेशानपेक्षया ।
कुर्वत्काव्यं[2] जगत्स्रष्टुरुत्कृष्टं तदतादृशम् ॥ ४ ॥

नीरसानि दृषत्साम्यमासेदुंषि निसर्गतः ।
सकलान्यपि वस्तूनि सरसीकुरुते यतः ॥ ५ ॥

ततोऽप्यतादृशः स्रष्टुस्तत्तत्त्वं व्यतिरिच्यते ।
कविप्रज्ञाभिधानात्मप्रख्योपाख्याक्रमोद्गमात् ॥ ६ ॥

१. का. प्रकर्ष.    २. का. कुर्वन्काव्यं.

कौमुदी

अपूर्ववस्तुनिर्माणं सरसीकरणं तथा ।
सुभगत्वेन चाभासः स्तूयते तत् [त्रयमेतत्]समुच्चितम् ॥ ७ ॥

कविप्रौढोक्तिसिद्धार्थे काव्ये स्पष्टं प्रतीयते ।
पूर्वसिद्धार्थकाव्ये तु सरसीकारभासने ॥ ८ ॥

सम्भाव्येते उभे एव वस्तुनः प्राक्प्रसिद्धितः ।
इत्थं त्रिपाद्या तत्त्वस्य द्रुहिणाधिक्यवर्णनात् ।
प्रसाध्योत्कर्षमत्यन्तमुक्ता विजयकर्तृता ॥ ९ ॥

अपरा योजना—तत् सरस्वत्याः काव्यमीमांसात्मिकायां वाच्यातिरिक्तं काव्यशरीरविशेषहेतुरात्मस्थानीयोऽर्थः ध्वन्यात्मा ; स च वस्तुतो मुख्यनायकचित्तवृत्तिरूपा क्रोडीकृतसकलवेद्यवर्गा निरर्गलरसास्वादमयी संविदेवेत्यभिप्रायेण **विजयत इति** ॥ तादृशस्तस्यालौकिकस्य तत्त्वस्य ताथाविध्ये तत्सद्भावे च सत्कवि[स]हृदयानुभव[1] एव प्रमाणमित्युक्तम्— **कविसहृदयाख्यमिति** ॥ कविसहृदययोराभीक्ष्ण्येन न्यग्भावितवाच्यार्थतया ख्यानं स्फुरणं यस्येति व्यधिकरणो बहुव्रीहिरयम् । ये पुनर्वाच्यादस्य पृथग्भावमेव तावन्न विस्पष्टमुट्टङ्कयन्ति ते तु न कवयः सहृदया वेति भावः । ध्वनिशब्दवाच्यस्य तत्त्वस्य किं रूपमित्यपेक्षायां स्वरूपतो निर्देष्टुमशक्यत्वात् तदनुप्राणितकाव्यशरीरधर्मकाभिमतापूर्ववस्तुप्रथयितृत्वाद्युपलक्षणेन दर्शयति—**अपूर्वमित्यादिना** ॥ तस्य तादृशात्मत्वोपयोगिविशेषणसमर्पणमुखेन जयतिनोक्तं विश्वोत्कर्षमुपपादयति—**अपूर्वमिति** ॥ आत्मा हि चैतन्यप्रकाशात्मतया स्वसन्निधिविशेषवशे[न] कृत्स्नं वस्तुजातमप्रकाशात्मकमपि प्रकाशात्मकं करोति ; तद्वदिदं तत्त्वमपि कारणकलां हेतुलेशमपि विना स्वमहिम्नैव वस्तु काव्यात्मकमपूर्वं लोकशास्त्रव्यतिरिक्तविशेषान्तरविशिष्टतयाभिनवं करोति; अतो विशेषहेतुत्वादात्मत्वेन व्यवस्थाप्यत इत्यर्थः । अथ तस्य समस्तसारभूतत्वोपयोगिविशेषणमाह—**जगदिति** ॥ निज आत्मीयः, रसः रसनमास्वादः, तस्य भरोऽतिशयस्ततो हेतोः, ग्रावप्रख्यं नीरसतयानास्वाद्यमपि, सारयति सारं रस्यमानतापन्नं करोति । अथ तस्य विशिष्टचतुर्वर्गोपायव्युत्पत्त्युपयोगिविशेषणं ददाति—**क्रमादिति** ॥ सुभगत्वमानन्दमात्रात्मकत्वम् । अन्यत् पूर्ववत् ।

आद्येन तावत्काव्यात्मशरीरोज्जीवकत्वतः ।
विशेषहेतोरात्मत्वं ध्वन्यर्थस्योपदर्शितम् ॥ १ ॥

१. का. 'सत्कविसहृदयानुभवे च' इत्यधिकांशो दृश्यते । स च लेखकप्रमादायात इति त्यक्तः ॥

लोचनम्

भट्टेन्दुराजचरणाब्जकृताधिवासहृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम् ।
यत्किञ्चिदप्यनुरणन्स्फुटयामि काव्यालोकं स्वलोचन[1]नियोजनया जनस्य ॥

कौमुदी

ततस्समस्तसारत्वादात्मसात्कृतविश्वता ।
विशेषणेन कथिता द्वितीयेन रसात्मनः ॥ २ ॥

प्रख्योपाख्याप्रसरणं व्याप्तृ[2]तिर्व्यञ्जनात्मिका ।
ततो रसव्यञ्जनतस्तन्मया[यी]भावयुक्तितः ॥ ३ ॥

विश्वानन[न्द]करत्वेन पुमर्थत्वमथोदितम् ।
विशेषणत्रयस्यार्थ इत्थं सम्यङ्[न्]निरूपितः ॥ ४ ॥

अथ कृतस्य मङ्गलाचरणस्य करिष्यमाणप्रबन्धाङ्गभावं सम्भावयन् शुश्रूषूणां मनः-समाधानार्थं चिकीर्षितं प्रतिजानीते, विषयप्रयोजनसम्बन्धाधिकारिलक्षणमनुबन्धचतुष्टयं च निरूपयति–**भट्टेन्दुराजेति** ॥ स्फुटयामीत्यनेनैवास्मदर्थपरिस्फूर्तौ सिद्धायामपि अहमिति वचनं आत्मनोऽसन्दिग्धाविपर्यस्तस्फुटतरकाव्यालोकार्थतत्त्वावबोधशालित्वासूचनेन एतच्छास्त्र-व्याख्यानसामर्थ्यपारिपूर्ण्यमासूत्रयितुम् । 'अनुरणन् विवृणोमि' इति वक्तव्ये 'स्फुटयामि' इति वचनं प्राचीनैरेव व्याख्यानैरस्यानर्थक्यमाशङ्क्यमानमपसारयितुम् । प्राचीनानि खलु व्याख्यानानि न काव्यालोकतात्पर्यावसानभूमिगतार्थसतत्त्वगोचराणि । तथात्वं चोत्तरत्र तत्र तत्रान्तरे स्पष्टालक्ष्यमेव । इदं तु पूर्वभूमिविनिवेशितदुक्तार्थमार्गोपजीवनेनोर्ध्वभूमिसुगूढ-विवक्षितार्थतत्त्वस्फुटीकरणपरिमि[रमिति] तैरस्य नानर्थक्यमित्यर्थः । वस्तुतोऽभिधेयगतं सदपि स्फुटीभवनमिहाभेदोपचारा[द]भिधायकग्रन्थगतत्वेन निर्दिष्टम्; अत एव च नेत्रनियोजनमुखेन प्रकाशस्य समुचितसामग्रीसंविधानेन स्फुटीकरणलक्षणार्थान्तरावभासोत्पत्तिः । नन्वात्मीय-मनःप्रणिधानविशेषाश्रयेणैव काव्यालोकार्थतत्त्वावगमोपपत्तौ[3] कुतो भवदीयस्फुटीकरणा-काङ्क्षा शुश्रूषूणामित्याशङ्क्य, तादृशामधिकारिविशेषाणां विरलविरलत्वात्, तदपेक्षया वा सत्य-प्यानर्थक्ये तेभ्योऽर्वाञ्चो ये काव्यालोकार्थतत्त्वमवबुभुत्समानाः स्वयमेव चावधारयितुमपारीणा-

उपलोचनम्

'भट्टेन्दुराज' इत्यादिलोचनद्वितीयपद्यादवगम्यते—श्रीमद्भट्टेन्दुराजस्यान्तेवसद्भिराचार्याभिनव-गुप्तपादैरध्यगायि ध्वन्यालोक इति ॥

१. क ग. सुलोचन.　　२. कृ. व्याप्तृतिः.　　३. त. उपगमोपपत्तौ.

कौमुदी

स्तादृशामेव च लोकेषु बाहुल्येन सम्भवात् तदपेक्षया फलवानेवास्मत्प्रयत्न इत्याह-**जनस्येति** ॥ केनोपायविशेषेण भवतः काव्यालोकार्थस्फुटीकरणसंरम्भः, यदभावात्प्राचां तदा[द]निर्वाहः—इत्याकाङ्क्षायाम्, अनन्यसाधरणोपायविशेषसम्पत्तिमात्मनो दर्शयति—**स्वलोचननियोजनयेति**॥ स्वमात्मीयम्, अथ च स्वत एव सिद्धं यल्लोचनम्, लोच्यते दृश्यते साक्षात्क्रियतेऽर्थो येनेति लोचनं चक्षुः; विचारजनितस्य तत्त्वावधारणस्य साक्षात्कारप्रायत्वादिह मनो लोचनत्वेनाध्यवसितम्। तेन विशिष्टगुरुदेवताशास्त्रसहजप्रसादविशेषमु[समु]पबृंहितशक्तित्वं मनसो दर्शितम्, तादृशस्य मनसो नियोजना नितरां प्रमादालस्यादिप्रतिबन्धकविधूननेन समीचीनतया योजना काव्यालोकार्थतत्त्वविषयव्यापारणा[1]या तया हेतुना। एतदुक्तं भवति—विशिष्टमनःप्रणिधानलक्षणोपायावष्टम्भादेवायमारम्भः, तदभवाद्धि प्राचां निबन्धॄणां तादृशस्फुटीकरणसामर्थ्याभाव इति। वक्ष्यति च ग्रन्थान्ते स्वयमाचार्यः—"आनन्दवर्धनविवेकविकासिकाव्यालोकार्थतत्त्वघटनादनुमेयसारम्। यत्प्रोन्मिषत्सकलसद्विषयप्रकाशि व्यापार्यताभिनवगुप्तविलोचनं तत्॥" इति। विशिष्टमनोव्यापारसम्पत्तिमभिधाय तदुचितवचनव्यापारसम्पत्तिमप्याह—**अनुरणन्निति** ॥ विशिष्टघण्टानादस्थानीयानन्दवर्धनाचार्योक्त्यनुस्वानरूपत्वं स्वोक्तेरभिदधतानेन तद्वदेव ग्रन्थस्य व्याख्यानरूपस्यापि लक्षणग्रन्थकल्पत्वम्, अत एव पूर्वव्याख्यातिशायित्वं च दर्शितम्। **यत्किञ्चिदपी**त्यनेन"वक्तुं शक्योऽर्थविस्तारो न विना विस्तरं गिराम्" इत्युक्त्यनुसारेण सम्यक् स्फुटीकरणनान्तरीयकतया [आया]तं ग्रन्थविस्तारदोषमपाकरोति। विस्तृतस्याप्यर्थस्यात्र न वितत्य वर्णनं क्रियते, अपि तु यत्किञ्चिदेवात्यन्तबुभुत्सितमज्ञानसंशयविपर्ययग्रस्तमित्यर्थः। अपिरयम् एवार्थे, अल्पाभिधानस्फुटीकरणविरोधद्योतको वा, हृद्यश्रुत इत्यत्र वान्वेतु। तेन च स्वात्मनो निर्दोषश्रुतिशालित्वेन कृतार्थस्य सतोऽपि कारुण्यातिशयेन परार्थोद्यमिता द्योत्यते। असाधारणव्याख्यानसामर्थ्यप्रकटनेनात्मन औद्धत्यशङ्कापाकरणार्थं भट्टेन्दुराजेति विशेषणम्। गुरोर्निरुपपदनामग्रहणानौचित्यात्पूज्यवाचिनो भट्टशब्दस्य प्रयोगः। नामग्रहणं तस्य निरतिशयप्रसिद्धिद्योतनेन तदधिगतश्रुतवैदुष्यज्ञापनार्थम्। "यथा खनन् खनित्रेण नरो वार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥" इति स्मृतेर्गुरुशुश्रूषाया एव विद्याप्राप्तावन्तरङ्गत्वद्योतनार्थं **चरणाब्जकृताधिवासेति** ॥ चरणयोरब्जौपम्यप्रदर्शनं तद्विषयभक्त्यतिशयप्रदर्शनार्थम्; अत एव कृतः, न कारितः, तेन भक्तेरहेतुकत्वमुक्तम्; अधि इत्यनेनाव्यवहितत्वम्, विशिष्टगुरुशुश्रूषाप्रसादिताद्गुरुवर्यादधिगतत्वात्[2] श्रुतस्य हृद्यत्वम्, अखिलविद्वज्जनश्लाघाभाजनत्वम्; कृताधिवासस्य वस्तुनो हृद्यत्वम्

१. कु. विषयाप्यावरणा- २. कु. अधिगतात्.

लोचनम्

स्वयमव्युच्छिन्न[1]परमेश्वरनमस्कारसम्पत्तिचरितार्थोऽपि[2] व्याख्यातृश्रोतृणा[3]मविघ्नेन[4]ाभीष्टव्याख्याश्रवणलक्षणफलसम्पत्तये समुचिताशीःप्रकटनद्वारा[5] परमेश्वरसांमुख्यं करोति वृत्तिकारः

कौमुदी

अधिवासनं च सुरभिलसरसीरुहसाधनकमिति रूपकालङ्कृतस्यार्था[6]न्तरस्य च प्रतीतिः। स्वनामग्रहणम् अवगताप्तभावानां श्रोतृणामेतच्छास्त्रव्याख्यानयोग्यतावधारणेन प्रवृत्त्युत्पादनार्थम्। अत्र चास्फुटं सत्काव्यालोकार्थतत्त्वं विषयः स्फुटीकृतः। तदेव प्रयोजनम्। सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावादिलक्षणः। जनस्येत्यधिकारी। तदेवमनुबन्धचतुष्टयवत्त्वादारम्भणीयत्वमस्य सिद्धम्, इति ॥

अथाप्राप्तकाष्ठाभियुक्तभावेतरनिबन्धनकारसाधारण्यापादनमुखेन तादृशोऽस्य ग्रन्थकर्तुरनुत्कर्षप्रतीतिप्रसञ्जकतया प्रबन्धारम्भापेक्षितप्रयोजनसाधकसमुचिताशीर्लक्षणमङ्गलाचरणमात्ररूपतां स्वेच्छाकेसरिण इत्याद्यश्लोकस्यापाततः प्रतीयमानां प्रत्याचक्षाणः प्रकृतोपयोगिप्रयोजनपर्यवसितां प्रवर्त्यपुरुषाप्रवृत्तप्रवर्तनारूपताम्, अत एव व्याख्येयतां च प्रख्यापयन्नादौ तस्य तात्पर्यं तावदाह—**स्वयमव्युच्छिन्नेति** ॥ चरितार्थ इत्यनेन निरङ्कुशमात्मनो निराशंसत्वं दर्शयता स्वाभिलषितप्रयोजनकमङ्गलाचरणरूपताशङ्का व्युदस्यते। यस्या-

उपलोचनम्

'परमेश्वरसाम्मुख्यं करोति वृत्तिकारः' इति लोचने। वृत्तिकारकारिकाकाराद्वैतवादिनो वयं न सहामहे वृत्तिकारकारिकाकारद्वैतं कैश्चिदौपाधिकं भेदमतादृशं भावयद्भिरध्यस्यमानम्; न वा तत् सहेरन् कौमुदीकाराः, ये कारिकोपक्रमे मङ्गलमकृत्वा वृत्तौ तत्करणम् सूत्रस्थानीयकारिकासु मङ्गलस्य नावसरः वृत्तावेव तस्यावकाश इत्येवमुपपादयन्तः, कारिकाकारवृत्तिकारयोरभेदमेवाभिप्रयन्ति; नापि तदनुमन्येरन् लोचनकाराः, यैः खलु नाट्यवेदविवृतौ चतुर्दशाध्याये अन्यत्र च "सुप्तिङ्वचन-" इत्यादिकां "रूपकादिरलङ्कारः" इत्यादिकां च ध्वनिकारिकामानन्दवर्धनसूक्तितया परामृशद्भिः वृत्तिकारिकाकर्तृभेदचित्रकलनाभित्तिर्व्यभेदि। नापि वा तदनुमोद्येतानन्दवर्धनाचार्यैः; ते हि द्वितीयोद्योते "आक्षिप्त एवालङ्कारः" इत्यादिकारिकावृत्तौ भट्टोद्भटशङ्काविशेषनिरासपरतया 'आक्षिप्तः' इति पदं व्याचक्षाणाः सुविशदममन्यन्त कारिकातः प्राचीनतां भट्टोद्भटस्य; भट्टोद्भटस्यात्यन्तसंनिहित एव काले समभूवन्नानन्दवर्धनाचार्याः; तेष्वाचार्येषु कारिकाकाराणां नामाप्यपरिशेष्य कबलीकरणे सामर्थ्यमनधिरोपयद्भिराधुनिकैः कारिकाकारवृत्तिकारद्वैतवादं समर्थयितुं न सर्वथा पार्यते। अस्य विषयस्य प्रपञ्चनमेतद्ग्रन्थमुद्रणावसाने प्रकाशयिष्यमाणे उपोद्घाते भविष्यति ॥

१. क. ख. ग.—अविच्छिन्न; २. क. ग. 'अपि' नास्ति. ३. घ. श्रोतृणामपि अवि- ४. ग. अविच्छिन्न. ५. क. ख. ग. घ. ङ—द्वारेण. ६. का. चार्थान्तरस्य.

कौमुदी

नेकजन्मसम्पादितसमग्रसुचरितपरम्परापरिपाकसच्छास्त्राचार्यप्रसादनिजमानसोन्मेषविशेषसमुपजनितपरमार्थज्ञानवैराग्यभक्तिश्रद्धापूर्वकपरमेश्वरोपासनाप्रकर्षसाध्यः परमानन्दस्वलक्षणपारमेश्वरस्वरूपतादात्म्यलक्षणो मोक्षाख्यः परः पुरुषार्थोऽपि हस्ततलावस्थित इव स्वसंसिद्धो वर्तते, तस्य तदपेक्षयात्यन्तमर्वाचीनानि प्रबन्धारम्भोचितानि फल्गूनि[1] प्रयोजनानि सिध्यन्तीति किमु वक्तव्यमेतदित्यर्थः। परमेश्वरनमस्कारसम्पत्तीत्यनेन तत्तादृशसाधनविशेषसमासादितात्मलाभत्वाच्चरितार्थत्वस्य पारिपूर्ण्यमुपवर्णितम्। निरङ्कुशैश्वर्यशाली परमात्मोपाख्यो विश्वसारः परमेश्वरः, तद्विषयो नमस्कारः तदेकीभावभावना तत्स्वरूपानुस्मरणपरम्परारूपोपासना, तस्याः सम्पत्तिः भक्तिश्रद्धादिसमुपजनितः प्रकर्षः। ननु परमेश्वरनमस्कारसम्पत्तौ सत्यामपि विवक्षितरूपस्य चरितार्थ[त्व]स्यास्मदादिष्वनुपलम्भात्कथं तस्यास्तद्धेतुत्वमित्यतो विशिनष्टि—**अव्युच्छिन्नेति**॥ यद्यपि नमस्कारशब्दितोपासना नाम विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहसम्पादनलक्षणा प्रसिद्धा, तथापि देशकालादिनिमित्त उपासनाया उपास्योपासकादिभेदसहिष्णुतालक्षणश्च व्युच्छेदः, उक्तविधफलपर्यन्ततापरिपन्थी इहाव्युच्छिन्नेति नञा निषिध्यते। अत एवेह वेः नानार्थस्य निर्देशः; इतरथा अनुच्छिन्नेत्येवावक्ष्यत्। स्वयमिति ग्रन्थकर्तुरात्मनो निर्देशः; स च चरितार्थत्वस्य साक्षात्स्वसम्बन्धिप्रयोजननैराकाङ्क्ष्यविषयत्वप्रदर्शनार्थः; स्वातन्त्र्यलक्षणकर्तृत्वनिर्देशाच्चैतदेवोपोद्बलितम्। यदि वा व्युच्छेदप्रसक्तौ सत्यां[2]तद्विरोधिविशिष्टप्रयत्नावष्टम्भेन तदनवतारसम्पादनशङ्कां स्वयमिति स्वपदेन "स्वयं दासास्तपस्विनः" इत्यादाविव परनिवृत्त्यर्थमात्रपरेण परिसञ्चष्टे; विशिष्टोपासनाप्रकर्षप्रसादादेव व्युच्छेदकहेतूपनिपाते जाग्रत्यपि प्रयत्नान्तरानपेक्ष्यैव व्युच्छिन्नतानवताराभिप्रायेयमुक्तिः। नन्वेवं ग्रन्थकर्तुः सं[स्व]प्रयोजनविशेषविरहे सत्याशीर्वचनस्य निरवकाशत्वात् प्रमत्तगीतप्रायत्वप्रसक्तिरिति शङ्का चरितार्थत्वे सत्यचरितार्थत्वविशेषं सूचयता अपिशब्देन निरस्यते। साक्षात्स्वसम्बन्धिप्रयोजनसिद्ध्यर्थमाशीर्वचनावकाशासम्भवेऽपि परम्परया स्वसम्बन्धिप्रयोजनसिद्ध्यर्थतया तदवकाशसम्भवान्नोक्तदोष इति भावः। अथ किंलक्षणम् तत्प्रयोजनमपि, यदर्थोऽयमाशीःप्रकटनाद्वारकः प्रयास इत्यत्रोक्तम्—**व्याख्यातृश्रोतृणामविघ्नेनाभीष्टव्याख्याश्रवणलक्षणफलसम्पत्तय इति**॥ अवधीरितावधिविशेषदेशकालव्यापिव्याख्यानश्रवणसन्तानसम्पादनहेवाकिव्याख्यातृश्रोतृजनपरम्परापरिप्रापितप्रकृष्टप्रतिष्ठो हि प्रबन्धः प्रथीयांसं प्रचयं प्राप्नुवन् प्रबन्धप्रणेतुरनासादितदेशकालपरिच्छेदोपप्लवपवित्रतरकीर्तिमयनिरामयदिव्यशरीरीभूय भूयसे तावदभ्युदयफलाय कल्पत इति; न केवलं व्याख्यातृश्रोतृणामेवाभीष्टत्वमुक्तफलस्य, किन्तु

१. का. बहूनि. २. कू. तद्विषय.

कौमुदी

जातेष्ट्याद्यधिकार इव पुत्राद्यभीष्टायुरादिफलस्य पित्रादेः, प्रबन्धकर्तुरपि वस्तुतो भवति ; अत एव चरितार्थोऽपि इत्यपिशब्दः । ननूक्तफलस्यापि स्वसम्बन्धिप्रयोजनत्वाद्विशिष्टपरमेश्वरनमस्कारसम्पत्त्यैव निष्पत्तिसम्भवे निरर्थकोऽयं प्रयास इत्याशङ्क्य तत्फलस्य साक्षात् परमा[परा]त्मसम्बन्धित्वात् तत्कर्तृकपराशिवसांमुख्यसापेक्षतां तत्सम्पत्तेरासूचयितुं व्याख्यातृश्रोतृणामिति निर्देशः । निसर्गत एव परानुगृहयालुहृदयस्याचार्यस्य विशेषतः सर्वेषामेव परमेश्वरसांमुख्यसम्पादनेनौचित्ये किमिति विशिष्य व्याख्यात्रादेरेवोच्यत इति शङ्काव्युदासार्थं च व्याख्यानश्रवणलक्षण[फल]सम्पत्तय इत्युक्तम् ; प्रबन्धारम्भे व्याख्यानादेरपेक्षितत्वात्तत्प्रयुक्तौचित्यानुसारिणी तद्विशेषोक्तिरित्यर्थः । 'इष्टलक्षणं फलम्' इत्युक्तदिशा फलत्वोपपत्त्यर्थमुक्तम्—**अभीष्टेति** ॥ अभीष्टत्वस्य व्याख्यातृश्रोतृसम्बन्धित्वपक्षे व्याख्यातृणां व्याख्यानलक्षणमभीष्टं फलम्, श्रोतृणां श्रवणलक्षणम् । वृत्तिकारसम्बन्धित्वपक्षे तु द्वयोरपि पुत्रादिगतायुरादिन्यायेन समुच्चयेनैवाभीष्टत्वमिति द्रष्टव्यम् । ननु उक्तोभयविधफलसम्पत्तेर्दृष्टरूपपुरुषप्रयत्नसामग्रीमात्रसम्पाद्यतया हेत्वन्तरानपेक्षत्वेन तादर्थ्येन तेषां परमेश्वरसांमुख्यकरणविषयः प्रयासो निष्फल इत्यत्रोक्तम्—**अविघ्नेनेति** ॥ वेदशास्त्राद्यव्युत्पाद्यावश्यव्युत्पाद्यसुकुमारमानसराजकुमारप्रायव्युत्पाद्यपुरुषाणां हृदयानुप्रवेशेन चतुर्वर्गोपायव्युत्पत्तिलक्षणविशिष्टप्रयोजनकाव्यलक्षणप्रतिपादकप्रबन्धप्रणयनप्रारम्भस्यास्य महीयसः 'श्रेयांसि बहुविघ्नानि' इति न्यायेन विघ्नबहुलत्वात्, कथमपि प्रारब्धपरिसमाप्तिसम्भवेऽपि व्याख्यानादिद्वारेणैव प्रचयप्राप्तेस्तत्प्रतिबन्धकविघ्नस्य कर्तृगतकल्मषनिबन्धनस्य सम्भावितत्वात्तन्निवर्तनेन तत्फलसम्पत्तेः परमेश्वरसांमुख्यहेतुकत्वाद्युक्तं तत्करणमिति भावः । ननु परमेश्वरकर्तृकव्याख्यात्रादिकर्मकत्राणाशीर्वचनमात्रस्यात्रोपलभ्यमानत्वात् तत्सांमुख्यकरणपरत्वोक्तिरनुपलम्भपराहतैवेत्याशङ्क्याह—**समुचिताशीःप्रकटनद्वारेति** ॥ प्रबन्धारम्भे ह्याशिषः समुचितत्वं प्रसिद्धमेव । अथवा प्रसिद्धत्राण[1]वैलक्षण्येनात्र विवक्षितस्य त्राणविशेषस्य समनन्तरमेव वक्ष्यमाणत्वात् तदभिप्रायैव समुचितत्त्वोक्ति [क्तिः । ] द्वारेति तन्मात्रपर्यवसायित्वाभाव उक्तः । परमेश्वरसांमुख्यविरहे तेषां तत्कर्तृकत्राणकर्मत्वासम्भवात् तत्सम्भवे च त्राणस्याप्यप्रार्थितलभ्यत्वान्न तन्मात्रमेव पर्यवसानभूमिः, किन्तु तद्धेतुभूतसांमुख्यकरणपरत्वमेव, तस्यैव विश्रान्तिधामत्वादिति भावः । अल्पाक्षरत्वादिविशेषणविशिष्टसूत्रस्थानीयकारिकाग्रन्थारम्भे श्रोतृव्याख्यानियोजनार्थपर्यवसिताशीर्वचनपरश्लोकविनिवेशनस्याघटमानताम् आक्षेपसमाधानादिप्रपञ्चनेन कारिकार्थाविष्करणरूपवृत्तिग्रन्थप्रस्तावे तत्सम्भावनां चाभिसन्धाय वृत्तिकार इति कर्तृविशेषनिर्देशः ।

१. का. कू. 'त्राण' इति नास्ति.

कौमुदी

शिवस्मृतिकृतार्थोऽपि[1] परार्थं दुःखलात्मनः ।
इत्यन्यत्र त्वभिनवभारत्यां स्वोक्तया दिशा ॥ १ ॥

स्वेच्छेत्यादौ प्रयुक्ताया आशिषः स्वार्थताक्षतेः ।
सिद्धं पारार्थ्यमाचार्यः स्वयमित्यादिनोक्तवान् ॥ २ ॥

परसामान्यविश्रान्तिर्व्याख्यात्रादौ तु या पुनः ।
विशेषे सा प्रकरणसामर्थ्यैकनिबन्धना ॥ ३ ॥

परानुगृहयालुत्वं स्वाभाव्येन महीयसाम् ।
परार्थोद्योगिताहेतुस्तेन स्यान्नो[2]कृतार्थता ॥ ४ ॥

जाग्र[जग]ज्जनानुग्रहजृम्भमाणपरार्थयत्नस्य यथा परस्य ।
तदात्मनस्तत्स्मरणानुभावात्कृतार्थता स्वात्मनि तद्वदस्य ॥ ५ ॥

व्याख्यातृश्रोतृनिर्वर्त्यव्याख्यानश्रवणाध्वना ।
प्रबन्धः प्रचितो लोके प्रबन्धृकृतिगोचरः[3] ॥ ६ ॥

इयता ग्रन्थकारस्य परानुग्रहगोचरः ।
उत्साहसम्पदः स्थेमा कश्चिदुत्सूत्रितः स्फुटम् ॥ ७ ॥

आशीर्मात्रावसायित्वमस्य श्लोकस्य भाति यत् ।
आमुखे तद्व्युदासार्थं द्वारेत्यन्यार्थतोक्तिकृत् ॥ ८ ॥

व्याख्यात्राद्याभिमुख्योक्तिस्तथा स्यादसमञ्जसा ।
आशिषो द्वारतामात्रमन्यत्राप्येवमीक्ष्यताम् ॥ ९ ॥

सूर्योदयादिविषया निषेधोक्तिर्यथान्यगा ।
तथेशत्राणविध्युक्तिरत्र नेयान्यगामिनी ॥ १० ॥

सांमुख्यमाभिमुख्यं यत्परमेश्वरकर्मकम् ।
व्याख्यात्रादेस्तत्करणमत्र तात्पर्यगोचरः ॥ ११ ॥

विश्रान्तिधाम्नो ह्यर्थस्य वाक्यार्थत्वं व्यवस्थितम् ।
वाक्यार्थत्वमतोऽर्थस्य यथोक्तस्य सुनिश्चितम् ॥ १२ ॥

१. का. हि.   २. कू. 'न कृतार्थता'.   ३. कू. 'प्रबन्धस्मृतिगोचरः'.

ध्वन्यालोकः

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।**
**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥**

लोचनम्

**स्वेच्छेत्यादिना**[1] । मधुरिपोर्नखा वो[2] युष्मान् श्रोतृव्याख्यातॄन्[3] त्रायन्ताम् । तेषामेवात्र[4]

कौमुदी

एवं तात्पर्यकथनलक्षणं व्याख्याप्रकारं स्वयमव्युच्छिन्नेति ग्रन्थेन प्रदर्श्य परिशिष्टं तत्प्रकारजातं प्रकटयिष्यन् प्रथमं वक्ष्यमाणवाक्यव्यङ्ग्यार्थविशेषप्रदर्शनोपयोगितया कर्त्रादिविशेषणान्वयावगमस्य कर्त्राद्यन्वयावगमं विनानवगमात् क्रियाकारकपदानामन्वयं तावदाह—**मधुरिपोर्नखा वस्त्रायन्तामिति** ॥ "बहुवचनस्य वस्नसौ" इति विहितस्य युष्मदादेशस्यानेकार्थवृत्तितयाऽत्रापेक्षितकर्मकारकोपस्थापकद्वितीयाबहुवचनान्ततां विवक्षितां प्रदर्शयितुं स्थानिनो युष्मच्छब्दस्य प्रयोगः । ननु अस्मदर्थरूपत्वानाक्रान्तार्थसामान्यमात्रसमर्पकस्य युष्मच्छब्दस्यापेक्षितकर्मकारकविशेषानुपस्थापकत्वात् विशिष्टवाक्यार्थप्रतीत्यसिद्धिरिति शङ्कां विशेषपर्यवसायितामस्य दर्शयन् परिहरति—**श्रोतृव्याख्यातॄनिति** ॥ तत्पर्यवसाने युक्तिमाह—**तेषामेवेति** ॥ यथा 'सर्वे ब्राह्मणा भोजयितव्याः' इत्यत्र न जगदुदरवर्तिविप्रसामान्यमात्रविषयः सर्वशब्दः अप्रकृतत्वादशक्यार्थोपदेशत्वप्रसक्तेश्च ; किन्तु निमन्त्रितकतिपयविशेषविषय एव ; एवं युष्मच्छब्दोऽपि सम्बोधनसमानविषयत्वात् व्याख्यानश्रवणयोग्यग्रन्थकरणसन्निधिबलात् सम्बोधनयोग्यान् व्याख्यात्रादीनेव गोचरयति, नान्यसामान्यमात्रम्, प्रकृतहान्यादिप्रसक्तेरित्यर्थः । ननु सम्बोधनयोग्यत्वमसिद्धो हेतुः, सम्बोधनस्यैवात्रानुपलम्भात् । आभिमुख्यकरणं हि सम्बोधनं नाम । यदाहुः—"सिद्धस्याभिमुखीकारमात्रं सम्बोधनं विदुः । सिद्धाभिमुख्यो ह्यर्थात्मा क्रियायां विनियुज्यते ॥" इति । तच्च नात्रावगम्यते, तद्विषयशब्दा-

उपलोचनम्

सहृदयचूडामणिर्भावककविराचार्यानन्दवर्धनः समुचिताशीरूपं मङ्गलमातनोति 'स्वेच्छा' इत्यादिना आलोकोपक्रमे । अत्र नैकश्येन बहूनि रुक्षाण्यक्षराणि प्रायुङ्क्त भावककवीनां वरिष्ठोऽयम् ; तत्कथम् ? सर्वथा साम्प्रतमेतत् औचितीपरमाचार्यस्य, यदित्थमेव ध्वन्यमानो वीररसस्साधिष्ठमनुगृह्येत ; वर्ण्यमानानां नृसिंहनखानां चानुगुण्यं भवेच्छब्दानाम् ; प्रतिवादिदन्तिकलहोन्मुखस्यास्य ध्वनिपथकण्ठीरवस्य गर्जितलीलामनुकुर्यादिदं मङ्गलाचरणम् ॥

१. क. ख.-स्वेच्छेति.
२. ग. घ. ङ. 'वः' इति नास्ति.
३. क. ख. ग. घ. ङ. 'व्याख्यातृश्रोतॄन्'.
४. क. ख. घ. ङ. अत्रेति नास्ति.

लोचनम्

सम्बोधनयोग्यत्वात् । सम्बोधनसारो हि युष्मदर्थः । त्राणं चाभीष्टफललाभं[1] प्रति साहायकाचरणम्[2]; तच्च तत्प्रतिद्वन्द्विविघ्नापसारणादिना भवतीति इयदत्र त्राणं विवक्षितम् ।

कौमुदी

भावात्; अतः कथमसिद्धमसिद्धेन साध्यत इत्याशङ्क्य शब्दाभावेऽपि तदवगमसिद्धेर्न विरोध इत्याह—**सम्बोधनसारो हि युष्मदर्थ इति** ॥ सम्बोधनमेव सारः स्थिरांशो जीवितस्थानीयो यस्य स तथोक्तः, यथैकान्तेन प्रत्यगर्थमात्रपर्यवसितोऽस्मदर्थः न तथा परागर्थमात्रव्यापी युष्मदर्थः, भवदर्थाभावप्रसक्तेः । यदाहुः—"अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः भवदर्थस्त्वन्यथेति तद्योगे प्रथम उक्तः" इति । किन्तु जडो वा पूर्णचन्द्रादिः अजडो वा देवदत्तादिर्भावो यदा सम्बोधनेनाभिमुख्यमानीयते, तदा तादृगवस्थावच्छिन्नः सन् स भावो युष्मच्छब्दार्थीभावमनुभवन्नेव स्वाभाव्यवशात् क्वचिदेव कार्यान्तरे विनियुज्यते; अत एव यत्र सम्बोधनविभक्तिस्तत्र युष्मदर्थयोगान्मध्यमप्रयोग एव क्रियते, यत्रोच्यते[यत उच्यते] 'युष्मदर्थशरणा हि सम्बुद्धिः' इति । तेन विशेषणत्वविशेष्यत्वविशिष्टत्वादिवत्सम्बोधनरूपविशिष्टबोधविषयत्वावस्थासम्बन्धनिबन्धनस्य युष्मदर्थस्य सम्बोधनाधीनात्मलाभत्वात् तद्विषयविभक्त्यभावेऽपि युष्मदर्थसामर्थ्यादेव सम्बोधनावभासनात् न तद्योग्यत्वहेत्वसिद्धिरिति भावः । ननु त्राणं नामोपस्थितागामिविपदपनुत्त्यनुत्पत्तिपरिपालनलक्षणं प्रसिद्धम्; तच्चात्र व्याख्यात्रादावप्रसक्तम्, तेषां तत्तादृशविपत्प्रसङ्गाभावात् । अतः त्रायन्तामिति त्राणप्रार्थनानुरोधेन तद्योग्यविपन्नजनतामात्रपरामर्शक एव युष्मच्छब्दः किं न गृह्यत इत्याशङ्क्य व्याचष्टे—**त्राणं चेति** ॥ चकारः शङ्काच्छेदकः । अभीष्टं फलं व्याख्यानश्रवणलक्षणम् । ननु पुरुषान्तरापेक्षधनादिलाभ इव दृष्टरूपस्वप्रयत्नसम्पत्तिमात्रसामग्रीसाध्ये यथोक्तफललाभे कथं परमेश्वरकर्तृकसहायकर्मसम्पादनसम्भव इत्यत्राह—**तच्चेति** ॥ तत्साहायकाचरणं च भवत्येव, न तु न भवतीति योजना । कथमित्याह—**तत्प्रतिद्वन्द्वीति** ॥ तस्याभीष्टफललाभस्य प्रतिद्वन्द्विनः प्रतिस्पर्धिनः प्रतिबन्धकभूता ये विघ्नाः, अभीष्टार्थप्राप्तिं विघ्नन्ति प्रतिबध्नन्तीति विघ्नशब्दवाच्या आभ्यन्तरा अप्रतिपत्त्यादयः बाह्याश्च प्रसिद्धाः, तेषामपसारणेन, आदिशब्देनार्थतत्त्वविषयमनीषासमुन्मेषादेः सङ्ग्रहः ॥ **इयदिति** ॥ विघ्नापसारणादिमुखेनानुकूल्याचरणमिति यावत् । यथा प्रदीपादेः वनितावदनारविन्दावलोकनमहोत्सवरसास्वादादावन्धतमसविधूननमुखेन नयनादेस्तत्समर्थाचरणवर्त्मना साहायकाचरणसम्भवः, तद्वदत्रापि प्रतिबन्धकसमुत्सारणादिना सहायकृत्यनिर्वहणस्य नानुपपत्तिः । अत्राणरूपे चात्र

१. क. ख. अभीष्टलाभं. २. क. ख. साहाय्यकाचरणं. ३. कू. 'न सह्यते'.

लोचनम्

नित्योद्योगिनश्च[1] भगवतः असंमोहाध्यवसाययोगित्वेनोत्साहप्रतीतेर्वीररसो ध्वन्यते । नखानां

कौमुदी

भगवन्नखकर्तृकसाहायकाचरणकर्मणि त्राणशब्दप्रवृत्तिरभीष्टप्राप्तिप्रतिकूलनिबर्हकत्वलक्षणसादृश्यनिबन्धनेति भावः । इदानीमेतच्छास्त्रप्रतिपाद्ये वस्त्वलङ्काररसविषयत्वभेदेन त्रिविधेऽपि ध्वनौ रसध्वनेरेव मूर्धाभिषिक्तत्वम्; इतरयोः पुनः सर्वथा तत्पर्यन्तत्वेन तद्गुणभाव एवेति वक्ष्यमाणमर्थं बुद्धौ कृत्वा वाक्ययोजनासमनन्तरं तत्र रसध्वनिं तावद्योजयति—**नित्योद्योगिन इति** ॥ नित्योद्योगिन इति पदेन, मधुरिपोः प्रपन्नार्तिच्छिद इत्यादिपदानां फलितोऽर्थः उक्तप्रकाररसध्वन्यवकाशप्रदानेन तदुपयोगितया व्यवस्थित इति दर्शयति । उद्योगस्य वीररसस्थायिभूतस्योत्साहात्मकस्य नित्यत्वम्, तस्यासङ्कुचितविषयत्वात् । भगवत इत्यनेन च अनित्योद्योग्यस्मदादिव्यावृत्त्या तस्य तत्तादृशोत्साहविशेषशालित्वसम्भावना दर्शिता । भवतु नित्योद्योगित्वम्; तथापि कथं वीररसध्वननम्, तत्स्थायिभूतोत्साहप्रतीतिमन्तरेण तद्ध्वननासम्भवात्—इत्याशङ्क्य मधुरिपोरित्यादिपदैर्विशिष्टोत्साहशालित्वस्य स्फुटतरमेव गम्यमानत्वात्तत्प्रतीत्यभावशङ्का निर्मूलेति दर्शितम्--**उत्साहप्रतीतेरिति** ॥ तत्प्रतीतिर्वा कुतो हेतोरित्यत उक्तम्—**असंमोहाध्यवसाययोगित्वेनेति** ॥ मधुपदोपसङ्गृहीतसकलभुवनकण्टकजननिरनुबन्धनिबर्हणहेवाकनित्यबद्धपरिकरत्वं तावन्मधुरिपोरित्यनेन प्रख्याप्यते । प्रपन्नार्तिच्छिद इत्यनेनापि भगवदेकशरणभावभाजनभूतप्रह्लादप्रभृतिकमहापुरुषपरिपालनपरत्वं प्रकटीकृतम् । एवं चासंमोहेन हेतुना योऽध्यवसायस्तेन वा, असंमोहश्चाध्यवसायश्चासंमोहाध्यवसायौ ताभ्यां वा योगः सम्बन्धः । तद्वत्तायाः स्फुटतरमेव गम्यमानत्वादुत्साहः प्रतीतिपथमवतरत्येव, प्रतीतावपि विप्रतिपद्यमानं प्रत्याययितुं शपथोक्तेरेव शरणीकरणीयत्वात् । तथा हि—अवश्यमेव हि मयाऽमी जनाः सर्वथैवानुग्राह्याः, एतत्परिपन्थिनोऽपि मयैकान्ततो निबर्हणीया इति येयमतिपरिनिश्चितरूपा तत्त्वविषया बुद्धिः, सैवोत्साहस्य हेतुरिति प्रायशो लोकेऽपि सुप्रसिद्धमदः । एतच्चात्र श्लोके भगवद्गोचरतयापि प्रतिभासत एवेति, तादृशोत्साहस्थायिकवीररसध्वननोक्तिर्युक्तैवेत्यर्थः ॥

इदानीमितरयोर्ध्वन्योरप्राधान्येनैव ध्वनित्वमिति दर्शयन् इतरपदेषु तद्योजनं कुर्वाणो नखा इति कर्तृविभक्तौ तावत् वस्तुध्वनिं घटयति—**नखानामिति** ॥ अत्र हि करणभूतेष्वेषु नखेषु कर्तृत्वाभिधाने मुख्यार्थबाधा तावत् सुप्रतिपादैव, अचेतनत्वादनीशितृत्वादेश्च । यद्यपि स्वातन्त्र्यं नाम गुणभावाविवक्षया प्राधान्यलक्षणं वैवक्षिकं व्याख्यातम्,

१. क. ख. ग. 'च' नास्ति.

लोचनम्

प्रहरणत्वे, प्रहरणेन च रक्षणे कर्तव्ये नखानामव्यतिरिक्तत्वेन करणत्वात्, सातिशयशक्तिता[1]

कौमुदी

देवदत्तः पचति, स्थाली पचतीति समशीर्षिकयैव चोदाहृतम्, तथापि प्रयोगप्राचुर्यानुविधायित्वाल्लक्षणकरणस्य, मुख्यतयेवामुख्यतयापि प्रयोगस्य बहुलमुपलम्भात् अखिलतदनुगामितया लक्षणाभिधानस्य न्याय्या[य्यता]भिप्रायमेवैतत्। परमार्थतो हि नाचेतनानां कर्तृत्वम्; उक्तं हि—"नाचेतनस्य कर्तृत्वहानेः" इति। तेन नखानां त्राणकर्तृत्वाभिधानमसम्भवत्स्वार्थमिति स्थाली पचतीत्यादिवत् कर्तृत्वोपचारः तस्य सातिशयशक्तित्वसूचनार्थ इत्यर्थः। नखानां त्राणक्रियां प्रति कथितनीत्या कर्तृत्वाभावेऽपि कथं करणत्वमपीत्यत उक्तम्— **नखानां प्रहरणत्वेनेति [त्व इति]** ॥ प्रहरणत्वं हीदं प्रहर्तृविशेषापेक्षं तदनपेक्षं वास्तु; द्वयमपि ह्यत्र प्रकृतार्थोपपादनोपयोगितया सुघटमेव। तत्र यदा केसर्यादिप्रहर्तृविशेषसम्बन्धित्वेन योज्यते, तदा नखानामेव प्रहरणत्वात् तेषां प्रहरणत्वसम्भवाच्चेत्ययोगान्ययोगव्यवच्छित्त्या व्याख्येयम्; तदनपेक्षया प्रहरणत्वमात्रविवक्षायां पुनरयोगव्यावृत्तिमात्रविषयतयैव। न हि खड्गादिभिरेवैकान्ततः प्रहरणैर्भवितव्यमिति नियतमदः। यद्यदेव प्रहरणक्रियानिष्पत्तौ समर्थं तस्य तस्यापि भवत्येव तत्। मानुषसम्बन्धिनामपि हि तेषां केषांचिदपि प्रहरणत्वमुपलब्धचरमेव। अत एव हि वक्ष्यति—"नखानां हि छेदकत्वमुचितम्" इति। नखानां खड्गादिवत्प्रहरणरूपत्वेऽपि कथं त्राणक्रियां प्रति करणत्वमित्यपेक्षायां विशिष्टप्रहरणपरिग्रहस्यैव स्वपरान्यतरपारिपन्थिपराकरणपरम्परया तत्परित्राणप्रयोजनतां प्रकटयन् तत्र करणतां सम्भावयति—**प्रहरणेन च रक्षणे कर्तव्य इति** ॥ प्रहरणत्वे तावत् प्रसिद्धे खड्गादिवत्त्राणेऽपि करणत्वं नासम्भावनागोचरमित्यर्थः। तथाप्यबाह्यत्वात् कथं खड्गादिसमानयोगक्षेमं करणत्वममीषामित्याशङ्क्य साधकतमत्वस्यैव करणत्वात्, तस्य चेह सम्भवात् न करणत्वानुपपत्तिः। बाह्यत्वाबाह्यत्वे पुनस्तदवान्तरद्वैविध्यमात्रापादनसमर्थे; न तु करणत्वशरीरानुप्रवेशेन तत्स्वरूपलाभतदलाभप्रतिलम्भके इत्याशयेनोक्तम्—**अव्यतिरिक्तत्वेन करणत्वादिति** ॥ शरीरादपृथग्भूतं तदेकदेशभूतमव्यतिरिक्तम्, तद्भावेन व्यवस्थितं यत्करणं तद्भावादिति योजना ॥ **सातिशयशक्तितेति** ॥ इतरकारकवर्गापेक्षया हि कर्तुः तत्प्रयोक्तृतया क्रियानिष्पत्तौ स्वातन्त्र्यसमुल्लासात् सातिशया शक्तिः; तत्र करणे कर्तृत्वव्यपदेशः तद्वदेव सातिशयशक्तित्वमस्यासूचयन् त्राणक्रियानिष्पत्तौ निष्प्रतिबन्धप्रवृत्तितालक्षणगुणोत्कर्षप्रतिपत्तये सम्पनीपत्स्यत इत्यर्थः। न केवलं सातिशयशक्तित्वमेव कर्तृत्वव्यपदेशस्य याव-

१. ग. त. 'शक्तता'.

लोचनम्

कर्तृत्वेन सूचिता। ध्वनितश्च परमेश्वरस्य व्यतिरिक्तकरणापेक्षाविरहः[1]। मधुरिपोरित्यनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः। कीदृशस्य मधुरिपोः? स्वेच्छया केसरिणः[2];

कौमुदी

दन्यदपीत्याह—**ध्वनितश्चेति**॥ तदपेक्षाविरहध्वननौचित्यं सूचयितुं परमेश्वरस्येत्युक्तम्। व्यतिरिक्तकरणापेक्षायां हि प्रसज्येतैवास्मदादिवदनीशितृत्वम्; न च तदुचितं निरङ्कुशैश्वर्यशालिन इत्यर्थः॥

ननु त्रायन्तां भगवत इत्येतावदुक्तावपि विवक्षितार्थप्रतिपत्तिसिद्धौ किमर्थं मधुरिपोरिति; प्रत्युत नैर्घृण्याद्यापत्त्यानीशितृत्वापादकत्वादसमञ्जसं चेति शङ्कां परिहरन् तत्रापि ध्वनिं योजयति—**मधुरिपोरित्यनेनेति**॥ अनुपयुज्यमानार्थेनेति भावः। व्यञ्जित इति वक्तव्ये सति उक्त इति वचनमभिधाव्यापारगोचरवत् प्रकटप्रतिपत्तिकत्वं व्यङ्ग्यार्थस्य प्रदर्शयितुम्। यद्यपि मधुरिपुपदमभिधाव्यापारबलात् धर्मिणं संज्ञिनमेव केवलमवगमयति, तथापि तदवगममात्रस्यान्यतोऽपि; लभ्यमानत्वादनुपयोगबाधितत्वात्ततो व्युत्थाय स्वेच्छाकेसरिण इति विशेषणानुग्रहपवित्रितेन व्यञ्जनाख्येन व्यापारेण धर्मभूतमुक्तमर्थं प्रत्याययति। यथा निजचरणैकशरणजगदुपद्रवकारित्वात् हिरण्यकशिपुः अस्य निबर्हणीयपदवीमधिशेते, तथा मधुनामधेयो दानवोऽपि; एवमन्येऽपि ये ये विश्वलोकवित्रासविधायिनः ते ते सर्वेऽपीति सार्वकालिकजनत्रासापसारणोद्यमित्वलक्षणधर्मान्तरपरिणतं संज्ञिरूपं धर्मिणं मधुरिपुशब्दः प्रत्याययतीत्यर्थः। भगवतो विशिष्टशरीरसम्बन्धाभ्युपगमेऽस्मदादिसमानयोगक्षेमत्वप्रसक्तिः; अनभ्युपगमे तदेकनियतनखकर्तृकत्राणाशिषोऽसमीक्षिताभिधानत्वापत्तिरित्यभिप्रायेणाह—**कीदृशस्येति**॥ एतत्परिहर्तुं विशेषणं पातयति—**स्वेच्छाकेसरिण इति**॥ कर्मनिबन्धनदेह-

उपलोचनम्

"स्वेच्छया केसरिणः" इति लोचने। यदि तावानभिनिवेशोऽर्थविशेषस्य स्वेच्छापदेनाभिव्यञ्जने, तदा समासनिगीर्णस्वेच्छाकः स्वेच्छाकेसरी महिमभट्टहस्तनिपातितस्य राजानककुन्तलाभिमानभाजनस्य अम्बिकाकेसरिणस्तपस्विनो दशां कथं नानुभवेत्? स्यादेवम्, यदि तथात्र विधेयमविमृष्टं स्यात्; किं तु अम्बिकाकेसरीत्यत्र केसरिणि मुख्यविशेष्ये अम्बिकासम्बन्धो विधेयतया विवक्षितः; प्रकृते परं नखेषु विशेषणतया प्रयुक्ते मधुरिपौ विशेषणीभूतस्य केसरिणः कर्मपारतन्त्र्यादिव्यवच्छेदमात्रपर्यवसायि स्वेच्छापदं न विधेयाविमर्शस्यास्पदम्॥

१. ख. कारणापेक्षा. २. ग. स्वेच्छाकेसरिणः

लोचनम्

न तु कर्मपारतन्त्र्येण, नाप्यन्यदीयेच्छया ; अपि तु विशिष्टदानवहननोचिततथाविधेच्छापरिग्रहौचित्यादेव स्वीकृतसिंहरूपस्येत्यर्थः । कीदृशा नखाः ? प्रपन्नानामार्तिं ये छिन्दन्ति । नखानां हि छेदकत्वमुचितम् ; आर्तेः पुनश्छेद्यत्वं नखान्प्रत्यसंभावनीयमपि तदीयानां नखानां

कौमुदी

सम्बन्धास्मदादिसाम्यापत्तिशङ्कापङ्कसङ्क्षालनार्थमिच्छापदव्यवच्छेद्यं दर्शयति—**न तु कर्मपारतन्त्र्येणेति** ॥ अस्य स्वीकृतसिंहरूपस्येत्युपरितनेन सम्बन्धः, एवमुत्तरत्रापि । तथापि स्वामीच्छाप्रवृत्तभृत्यादिवदन्येच्छावशासादितविग्रहवत्त्वसम्भावनादनीशितृत्वतादवस्थ्यमिति शङ्काशिथिलनार्थं स्वशब्दव्यावर्त्यमाह—**नापीति** ॥ ननु तादृशविग्रहविशेषावलम्बनस्य स्वेच्छामात्रनिबन्धनत्वमसम्भवि, नित्यमेतदवलम्बनानवलम्बनयोरन्यतरापत्तौ कदाचिदेव तादृशदेहपरिग्रहानुपपत्तिप्रसङ्गात् । तद्धेतुभूतेच्छाया अपि निर्हेतुत्वे नित्यसत्त्वासत्त्वान्यतरप्रसङ्गादित्याशयेनाह—**अपि त्विति** ॥ हेतुविशेषमुद्घाटयन् उत्तरमाह—**विशिष्टेति** ॥ इतरदानवहननाद्विशिष्टं यद्दानवस्य हिरण्यकशिपुनाम्नो हननं कर्म तत्रोचितोऽनुरूपो यः, तथाविधाया नरहरिविग्रहावलम्बनरूपेष्यमाणविषयत्वेन अन्यादृश्या विशिष्टाया वा, इच्छायाः परिग्रहः स्वीकारः । तदौचित्यादेव हेतोः, इष्यमाणक्रियानिर्वर्तन एव हीच्छायाः परिग्रह औचित्यवान् भवति । प्रपन्नार्तिच्छिद इत्येतन्नखानामेव, न मधुरिपोर्विशेषणमित्याशयेनाह—**कीदृशा नखा इत्यादि** ॥ यद्यपि आर्तिहेतुभूतदुरितनिबर्हणेन तत्कार्यभूतार्तिनिवर्तकत्वं भगवद्गतं भगवन्नखेष्वारोप्य नखानां प्रपन्नार्तिच्छित्त्वमिह विवक्षितम् ; तथापि प्रौढिम्ना छिदिधातोः मुख्यार्थावलम्बनेन नखानामार्तेश्च छेत्तृत्वछेद्यत्वौचित्योपपादनार्थं नखानां तावच्छेदकत्वं नानुचितमित्याह—**नखानां हीति** ॥ हिः प्रसिद्धौ; न हि दृष्टेऽनुपपन्नं नामेति भावः । पुनःशब्देनार्तेरमूर्तत्वेन नखच्छेद्यत्वानौचित्यशङ्कोत्थितिमनुजानाति । अत एवाह—**नखान् प्रत्यसंभावनीयमिति** ॥ नखकर्तृकच्छेदनक्रियाकर्मत्वस्य मूर्तवस्तुष्वेव दृष्टत्वादतादृश्या आर्तेस्तदसंभावना अपिशब्देन सूचिता । तर्ह्यसंभावितत्वादयुक्तैवार्तेश्छेद्यत्वोक्तिः; नेत्याह—**तदीयानामिति** ॥ तदीयानां नखानां यत्स्वेच्छानिर्माणं तदौचित्याल्लौकिकनखसाधारण्यसंदृष्ट्या तावत् भगवत्संबन्धिनो नखा न खिलीकारपात्रीकर्तव्याः । ते हि भगवता विशिष्टप्रयोजनोद्देशप्रवृत्तनिजेच्छानिर्मितशरीरत्वेनाप्रतिघभगवत्प्रभावविष्फारायमाणत्वात् क्वचिदप्यप्रतिबध्यमानसामर्थ्यसंपन्ना मूर्तवस्तुनिर्विशेषममूर्तमपि स्वाच्छन्द्येन छेत्तुमुत्सहन्त

१. क. ख. 'हननोचितात् तथाविधेच्छापरिग्रहौचित्यादेव'; ग.........'परिग्रहादेव.'

लोचनम्

स्वेच्छानिर्माणौचित्यात्संभाव्यत[1] एवेति यावत् । अथवा त्रिजगत्कण्टको हिरण्यकशिपुर्विश्वस्य क्लेशाकारक[2] इति स एव वस्तुतः प्रपन्नानां भगवदेकशरणस्थितीनां जनानामार्तिकारित्वान्मूर्तैवार्तिः ; तं विनाशयद्भिरार्तिरेवोच्छिन्ना भवतीति परमेश्वरस्य तस्यामप्यवस्थायां[3] परमकारुणिकत्व[4]मुक्तम् । किं च ते नखाः किंगुणाः?[5] स्वच्छेन स्वच्छतागुणेन नैर्मल्येन ; स्वच्छमृदुप्रभृतयो

कौमुदी

एवेति नानुपपन्नं किञ्चिदित्यर्थः । यद्वा नारसिंहस्य विग्रहस्य स्वेच्छामात्रपरिगृहीतत्वात्तत्सम्बन्धिनखानामनितरनखसाधारणं छेत्तृत्वं नासम्भावनया निरासार्हमित्यर्थः । ननु नखानां यत् छेदकत्वं तच्चेल्लौकिकमेवामीषामनुज्ञायेत, तदा आर्तिच्छेदकत्वमाञ्जसमघटमानमापद्येत; अथ स्वेच्छानिर्माणौचित्ययुक्त्या तदुपपाद्येत, तल्लौकिकनखच्छेदकत्वौचित्यपरित्यागप्रसक्तिरित्यभिप्रायेण विधान्तरेणोपपादयति--**अथवेति** ॥ स हिरण्यकशिपुरेव वस्तुवृत्तावमर्शे क्रियमाणे सति प्रपन्नानां प्रह्लादप्रभृतीनां मूर्ता परिच्छिन्नपरिमाणविशेषवती, न पुनरमूर्ता, लोकप्रतीता काचिदार्तिः । नन्वेतत्प्रसिद्धिविरुद्धम् ; आर्तिर्हि नाम मानसी पीडा प्रसिद्धा ; तस्याः कथमुक्तलक्षणमूर्तात्मकत्वमित्यत्राह--**आर्तिकारित्वादिति** ॥ लाङ्गलं जीवनमितिवत् तत्कारिणि ताद्रूप्यव्यपदेशोऽयमित्यर्थः ॥ **आर्तिरेवेति** ॥ न तु हिरण्यकशिपुरिति । अत एवाह--**विनाशयद्भिरिति** ॥ हिरण्यकशिपुरूपप्राणभृत्प्राणवियोजनलक्षणप्रयोजनाभिसन्धिनैव हि नायं भगवतो व्यापारः; अपि तु विशिष्टनिजभक्तजनतानुग्रहहेवाकितयैव; तच्छलेन जगदार्तिछेदनमेव वस्तुतः सदपि तत् अतात्त्विकदृशा जनेन दनुजसार्वभौमनिबर्हणरूपतया परिकल्प्यते ; अत एवानाक्रान्तहृदयस्थानमपि नैर्घृण्यमस्मिन्नारोप्यते; मर्यादास्थापनप्रवृत्तराजकर्तृकदण्डनीयदण्डनव्यापारवत् ; "तान्येव भावोपहतानि कल्कः" इति दर्शितरीत्या[6] तु लोकार्तिछेदनमात्रमेव ; प्रत्युत लोकोत्तरकारुणिकत्वातिशयकृतमेव तत् । अनेनैवाभिप्रायेणाह--**तस्यामपीति** ॥ अतिदारुणं यथा तथा हननरूपायामिति; तत्तादृक्षहननप्रवृत्तौ तथाविधकारुण्यपारतन्त्र्यविरोधार्थः अपिशब्दः ॥ **उक्तमिति** ॥ 'प्रपन्नार्तिच्छिदः' इति पदेन द्योतितमिति यावत् । अथ प्रशस्यमाना देवता प्रपन्नाय प्रसेदुषी प्रेप्सितं फलं प्रयच्छतीति विश्वासातिशयात् तदीयगुणविशेषवर्णनपरतया वितीर्णं विशेषणं व्याकर्तुमवतरणिकां करोति--**किं चेति** ॥ न केवलं ते नखाः प्रपन्नार्तिच्छिद एव यावद्विशेषणान्तरविशिष्टा अपीति समुच्चयार्थोऽत्रावगन्तव्य इत्यर्थः । विग्रहप्रदर्शकवाक्यावसानवर्तिनो भिसन्तस्य

१. क. ख. 'सम्भावित.' २. क. ख. 'विश्वस्योत्क्लेशक इति.' ग. 'विश्वक्लेशकरण एवेति.'
३. ग. 'अपि' इति नास्ति. ४. क. ख. 'परम' इति नास्ति. ५. क. ख. त. 'ते किंगुणाः.'
६. क. दिशा.

लोचनम्

हि मुख्यतया भाववृत्तय एव; स्वच्छायया च वक्रहृद्यरूपया[1] आकृत्या आयासितः खेदित इन्दुर्यैः । अत्रार्थशक्तिमूलेन[2] ध्वनिना बालचन्द्रत्वं ध्वन्यते । आयासनेन[3] तत्सन्निधौ चन्द्रस्य विच्छायत्व-

कौमुदी

यच्छब्दस्य 'ते नखाः स्वच्छस्वच्छायायासितेन्दवः' इति परिकल्पितशेषेण तच्छब्देन सम्बन्धः । स्वच्छस्वच्छायापदयोः समानाधिकरणप्रवृत्तितया कर्मधारयसमासाङ्गीकारेण विग्रहमामुखप्रतिपन्नमल्पप्रयोजनत्वादवधीरयन्नाह—**स्वच्छेनेति** ॥ स्वच्छपदस्य स्वाच्छय-गुणकद्रव्यनिष्ठतया प्रचुरप्रयोगत्वात्तत्प्रतिपत्त्यपनुत्त्यर्थमाह—**स्वच्छतागुणेनेति** ॥ तमेव गुणं धर्मिणः सकाशान्निष्कृष्य स्पष्टतया प्रदर्शयितुं नैर्मल्येनेति पर्यायोपादानम् । स्वच्छपदस्य स्वाच्छयगुणपरतया व्याख्यानं प्रयोगप्रसिद्ध्यननुरोधित्वादचतुरश्रमाशङ्क्य लाघविकत्वादपर्यवसिते वाक्ये गर्भवाक्योत्पादनेन परिहरति—**स्वच्छेति** ॥ **मुख्यतयेति** ॥ धर्मिणि पुनरर्थक्रियासामर्थ्यसमन्वयाद्धर्मसमवायाच्चामुख्यतयैव ; अत एव हि गुणशब्द-त्वममीषां प्रसिद्धम्; "मुख्यामुख्ययोर्मुख्ये संप्रत्ययः" इति च स्थितिरिति भावः ॥ **भाववृत्तय इति** ॥ भावो भवितुर्धर्मिणो धर्मः स्वच्छत्वप्रभृतिः; तस्मिन्नेव वृत्तिर्वर्तनं येषां ते तथोक्ताः । छायाशब्दोऽत्र न शोभावाचक इत्याह—**आकृत्येति** ॥ आकृतिः सन्निवेश-विशेषः । तमेव प्रदर्शयति—**वक्रहृद्यरूपयेति** ॥ एतच्च वक्ष्यमाणध्वनिप्रदर्शनोपयोगितयो-क्तम् । आयासशब्देनातिप्रयत्नवाचिनात्र तज्जन्यः खेदो लक्ष्यत इत्याह—**खेदित इति** ॥ आयासमनुभवामीत्यादिवत् खेदार्थत्वं प्रयोगबलादवसीयत इति भावः । इह वस्तुध्वनिमुत्सू-त्रयति—**अत्रेति** ॥ स्वच्छस्वच्छायायासितेन्दव इत्यस्मिन् विशेषण इत्यर्थः । अर्थः स्वच्छायाया-सितत्वरूपः । तस्य अवक्रहृद्याकृतौ पूर्णचन्द्रे अनुपपत्तेरयं स्वच्छायायासितेन्दुशब्दः इन्दु-शब्दवाच्यस्य बालेन्दुतां व्यञ्जनव्यापारेण प्रतिपादयतीत्यर्थः । स्वच्छायातुलितेन्दव इति तुलितादिपदोपादानं विनायासितपदस्य ग्रहणं वस्तुध्वन्यन्तरप्रयुक्तमित्याह—**आयासने-नेति** ॥ **तत्सन्निधाविति** ॥ तच्छब्दः प्रकृतनखपरामर्शकः; सान्निध्यं च वास्तवायोगादारोपित-मवगन्तव्यम् । अथवा उभयानुगतहृद्यत्वादिसमानधर्मसंबन्धात् तद्द्वारको वास्तव एव सान्निधिरस्तु ; धर्मसम्बन्धनिबन्धनायाः प्रत्यासत्तेरखिलतीर्थिकसंप्रतिपन्नत्वात् । आयासितो हि कुतश्चिद्धेतोः परिम्लानच्छायः अत एवानुस्मरणीयशोभत्वादनुशोचनीयो भवति—इति सर्वालङ्कारेषु व्यङ्ग्यतयान्तर्लीनत्वेन स्थितातिशयोक्तिरपि अत्रौचित्येन निबध्यमाना व्यङ्ग्यत्वेन

१. ख. 'चक्र.' २. क. ख. ग. 'शक्त्यनुरणनमूलेन.' ३. क. ख. 'आयासेन.'

लोचनम्

प्रतीतिरहृद्यत्वप्रतीतिश्च ध्वन्यते; आयासनकारित्वं च नखानां सुप्रसिद्धम्; नरहरिनखानां तेच्च लोकोत्तरेण रूपेण प्रतिपादितम्। किं च तदीयां स्वच्छतां कुटिलिमानं चावलोक्य बालचन्द्रः स्वात्मनि खेदमनुभवति--तुल्येऽपि स्वच्छकुटिलाकारयोगे अमी प्रपन्नार्तिनिवारण-कुशलाः, न त्वहम्--इति व्यतिरेकालङ्कारो ध्वनितः। किं चाहं पूर्वमेक एवासाधारणवैशद्य-हृद्याकारयोगात्समस्तजनाभिलषणीयताभाजनमभूवम्, अद्य पुनरेवंविधा नखा दश बालचन्द्रा-

कौमुदी

प्रदर्शितेत्याशयेनाह—**आयासनकारित्वं चेति**॥ णिजर्थोऽत्राविवक्षितः प्रमादपाठो वा; आयासकारित्वं प्रहरणत्वनिरूपणात् सुप्रसिद्धमिति सकलजनोपभोगपुरातनीभूतमित्यर्थः॥ **लोकोत्तरेणेति**॥ अहो नु खल्वित्याश्चर्यबुद्धिभाजनीभूतेनेत्यर्थः। एवं रसवस्तुध्वनी प्रदर्श्य संप्रत्यलङ्कारध्वनिं योजयति—**किंचेति**॥ न केवलं रसवस्तुध्वनी एव यावतालङ्कार-ध्वनिरपीत्यर्थः। व्यतिरेकालङ्कारस्य **भामहेन** सोदाहरणं लक्षणमुक्तम्—"उपमानवतार्थेन यद्वि-शेषनिदर्शनम्। व्यतिरेकं तमिच्छन्ति विशेषापादनाद्यथा॥ सितासिते पक्ष्मवती नेत्रे ते ताम्रराजिनी। एकान्तशुभ्रश्यामे तु पुण्डरीकासितोत्पले॥" इति। **मङ्कुकेन** तु—"भेद-प्राधान्य उपमानादुपमेयस्य आधिक्ये विपर्यये वा व्यतिरेकः" इति। स्वात्मनि स्वस्यैवात्मनि मनसि परेषामविदितं अन्तरेव निगूढतयानुभवतीत्यर्थः। अनुभवप्रकारमेवाह—**तुल्येऽपीति**॥ नन्वन्येऽपि तावन्न प्रपन्नार्तिछेदनकुशलाः, नखानामेव तथाभावात् भावानां विचित्रशक्तित्वात्; तद्भवतान्यैरिव तदभावान्न मनः खेदनीयमित्याशङ्क्य तुल्यत्वे सति न्यूनत्वमेव खेदहेतुरिति दर्शयितुं तुल्यत्वे सतीति साम्यमुक्तम्; उपमानादुपमेयस्य आधिक्यमुक्तम् 'अमी प्रपन्नार्ति-इति' इति। अनेन 'प्रपन्नार्तिच्छिदः' इति विशेषणस्य ध्वननव्यापारोत्थाने सहकारित्वं दर्शि-तम्। इतिशब्दः तन्त्रेण 'अनुभवति' इति 'ध्वनितः' इति चानेन संयोजनीयः। लोक-सिद्धालङ्कारसमानयोगक्षेमतया पृथक्पृथक् चारुत्वहेतूनामप्यलङ्काराणां सङ्घटनाकृतचारुत्वा-न्तरोपलम्भात् पृथक् पर्यवसानं विनैवालङ्कारान्तरत्वेन चिरन्तनालङ्कारकारैर्विचार्य निर्धा-रितो यः सङ्करालङ्कारः, तमप्यत्र योजयति—**किं चेति**॥ **पूर्वमिति**॥ एतदवधावतीते काल इत्यर्थः। एक एवेत्येवकारो द्वितीयसत्ताव्यवच्छेदार्थः। असाधारणं यद्वैशद्यं स्वाच्छ्यगुणः हृद्यश्च वक्ररूप आकारस्ताभ्यां योगात् संबन्धात्॥ **समस्तेति**॥ विवेच-कानामविवेचकानां चेत्यर्थः। किमतस्तत्राह—**अद्य पुनरिति**॥ पुनःशब्दो

१. क. ख. ग. 'आयासकारि.' २. क. ख. घ. ङ. त. 'तच्च' इति नास्ति.
३. क. ख. ग ङ. त. 'व्यतिरेकालंकारध्वनिः.' ४. क. ख. 'नखाः' इति नास्ति.

लोचनम्

काराः संतापार्तिच्छेदकुशलाश्चेति तानेव[1] लोको बालेन्दुबहुमानेन पश्यति, न तु मामित्याकलयन्बालेन्दुरविरतमायासमनुभवतीवे[2]त्युत्प्रेक्षापह्नुतिध्वनिरपि । एवं वस्त्वलङ्काररस[3]भेदेन

कौमुदी

विशेषे; अद्येत्यनेनात्मसौभाग्यस्य पुरातनीभूततयानादरणीया[णीयता]स्पदत्वं सूचयता नखसौभाग्यस्याभिनवत्वादत्यन्ताभिलषणीयत्वं प्रत्याख्यते ॥ **एवंविधा इति**—'स्वच्छस्वच्छायायासितेन्दवः' इति विशेषणोपदर्शितविशेषशालिन इत्यर्थः ; एवंविधत्वमेव च बालचन्द्राकारत्वहेतुतया योज्यम् ॥ **बालचन्द्राकारा इति** ॥ 'वयं बालचन्द्राकारा भवामः' इति नखानां तथाविधाभिमानगडुलहृदयत्वानुकरणनिष्यन्दिनिजेर्ष्यानिर्भरो निर्देशः । अद्वितीयतया वर्तमानस्य द्वितीयसत्तामात्रमेव तावदनुतापातिरेकहेतुः; इह तु प्रत्युत तादृशेषु दशसङ्ख्येष्वहमहमिकया जागरूकेषु कियान् मनसि खेद इति वैधात्र्यपि वक्त्रपरंपरा वक्तुं न पारयतीत्याशयेनोक्तम्—**दशेति** ॥ प्रपन्नार्तिच्छिद इति विशेषणस्यास्मिन्नपि ध्वनौ सहकारित्वं न विघटत इति सूचयति—**सन्तापार्तिच्छेदकुशलाश्चेति** ॥ "न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा" इति प्रयोगात् देहदाहः सन्तापः, तदुच्छेदकुशलत्वमेव चन्द्रमसः; नखानां तु न तावन्मात्रमेव, प्रपन्नानामाध्यात्मिकादिनिखिलार्तिच्छेदकत्वमपीति तेषां स्वात्मापेक्षया उत्कर्षविशेष इत्यर्थः । इतिर्हेतौ ; यतोऽभिनवत्वेन निसर्गत एव च विशिष्टाकारशालित्वम् , यतश्च तादृशां तेषां बहीयस्त्वम् , बहूनामपि तेषां तादृशां तथाविधात्मपरिभूतिफलार्थमैकमत्यापत्त्यैकसन्धीभावः, यतो वा स्वगुणस्वीकरणेनाभ्यधिकगुणान्तरग्रहणहेवाकि. [कि ता], ततो हेतोः ॥ **बालेन्दुबहुमानेनेति** ॥ बालेन्दौ समुचितो यो बहुमानः गौरवातिरेकसमुपबृंहिता कापि प्रतिपत्तिः; तया सह तान्नखानेव लोकः पश्यति ; एवकारसामर्थ्यसिद्धमपि परिपूर्णनिजहृदयमहाह्रदभरितभूरितरखेदातिशयसलिलपरिवाहनिष्यन्दायमानवाग्विलापरूपतया स्वयंप्रसृतम् , अतपित [अत एव] निवारणाक्षमतया प्रवृत्तमर्थमाह—**न तु मामिति** ॥ इतिः प्रकारे ; अविरतमच्छेदेन प्रवहद्रूपम् ; अथवा अविरतमनुभवतीति । आयासं खेदमयशःप्ररोहसमुपजनितम् "संभावितस्य चाकीर्तिर्मरणादतिरिच्यते" इति दर्शितदिशा संभावनास्पदीभावमनुभवत एव सतो लोकनिन्दावादभाजनीभावस्य सातिशयखेदकारित्वात् ॥ **उत्प्रेक्षापह्नुतिरिति** ॥ उत्प्रेक्षापह्नुत्योरनुग्राह्यानुग्राहकभावेन वर्तमानयोः पृथगेव चारुत्वान्तरप्रतीतिहेतुभावेन एकीभावमापद्यमानयोर्ध्वनिरिति यावत् ;

१. ग. 'एवं.' २. क. ख. 'इत्युत्प्रेक्ष्यते इत्युत्प्रेक्षापह्नुति'. ग. 'इव' इति नास्ति.
३. ग. 'रस' इति नास्ति.

लोचनम्

त्रिधा ध्वनिरत्र श्लोके अस्मद्गुरुभिर्व्याख्यातः ॥

कौमुदी

उत्प्रेक्षार्थापह्नुतिरिति तु व्याख्यानम् उत्प्रेक्षाया ध्वनिविषयबहिर्भावप्रसक्तेर्नातीवास्माकं हृदयमनुरञ्जयति । अतश्चानुग्राह्यानुग्राहकभावलक्षणः सङ्करालङ्कारोऽवगन्तव्यः । "अध्यवसाये व्यापारप्राधान्य उत्प्रेक्षा" "विषयापह्नवेऽपह्नुतिः" इति लक्षिते उत्प्रेक्षापह्नुती इहानुग्राह्यानुग्राहकभावेन वर्तेते । बालेन्दोरविरतायासानुभवोत्प्रेक्षा हि स्वव्यावृत्त्या नखविषयनखत्वनिषेधपूर्वकबालेन्दुत्वविधिरूपलोकप्रतीतिविषयस्वप्रतिपत्तिनिबन्धनेति विषयापह्नवलक्षणापह्नुतिबलादेवात्मानं लभते ; यथा—"प्रवातनीलोत्पलनिर्विशेषम्" इत्यत्र सन्देहालङ्कारो व्यङ्ग्योपमालङ्काराधीनात्मलाभः तद्वदिति । प्रदर्शितमलङ्कारध्वनिं प्राग्दर्शितरसवस्तुध्वनिभ्यां सङ्कलय्य निगमयन् तत्प्रदर्शनेन सप्रभेदस्य सकलध्वनिप्रपञ्चस्य शास्त्रप्रतिपाद्यस्य अस्मिन्नाद्यश्लोक एव प्रदर्शितप्रायत्वमभिप्रेत्याह—**एवमिति** ॥ ननु श्रोतृव्याख्यातॄणां परमेश्वरसांमुख्यकरणपरतया कृते श्लोके किमिति वक्ष्यमाणध्वनियोजनं प्रयत्नेन कृतमित्याशङ्क्य श्रोतृमनःसमाधानार्थं काव्यलक्षणस्यापि काव्यरूपत्वे लक्ष्यकाव्यानुरूप्यप्रदर्शनार्थं चेत्याशयेनोक्तम्—**अत्रेति** ॥ आद्ये काव्यात्मके चेत्यर्थः । उक्तध्वनियोजनस्य स्वकपोलकल्पितत्वेनानादरणीयत्वशङ्कापनुत्त्यर्थमुक्तम्—**अस्मद्गुरुभिरिति** ॥ अविच्छेदेनास्माकं

उपलोचनम्

"एवं वस्त्वलङ्काररसभेदेन त्रिधा ध्वनिरत्र श्लोकेऽस्मद्गुरुभिर्व्याख्यातः"—इति लोचने । वस्तुतस्तु ध्वनिमार्गमनुसरतां सहस्रशाखीभवति ध्वनिः ; तथा हि—नारायणं प्रपन्नस्य श्रीमतः प्रह्लादस्य परिपन्थिनो नारायणनास्तिकस्य हिरण्यकशिपोर्यादृशी गतिः, तादृश्येव ध्वनिभक्तपरिपन्थिनां ध्वनिनास्तिकानामिति ; अनया दिशा सुदूरं ध्वनिपथानुधावनं सहृदयानुद्वेजयेत्कदाचिदित्यतोऽवगन्तुं शक्यते ध्वनेरतिव्याख्या न साम्प्रतमिति ॥

स्यादेतत्—कथमत्र रसध्वनिः? भगवद्विषयत्वात् भाव एवाङ्गी रसवदलङ्कारः पर्यवस्येदिति । अत्रैवमञ्जने प्रतिविधीयते—प्रतिपन्नभगवत्तन्मयीभावः खलु महाकविराशिषं प्रयुङ्क्ते । तदेव स्वेच्छेत्यादिवाक्यं भजनीयभगवद्विषयं चेद्वर्ण्येत, भिद्येत । भगवत्तन्मयीभावश्च स्वयं सूत्रकृदवस्थायां मङ्गलाकरणादपूर्वप्रस्थानकर्तृत्वाच्च सिद्धः—इति । अत्रेदमाकूतम्—नमस्क्रियामनादृत्य नः-पदं विहाय वः-पदं प्रयुज्य आशीरूपं मङ्गलमाचरन्तो महाकवयः भक्तेर्भावस्य अङ्गतां सम्पाद्य रसध्वनिं निर्वोढुमभिलषन्तीति ॥

लोचनम्

अथ प्राधान्येनाभिधेयस्वरूपमभिदधत्, अप्रधानतया प्रयोजनप्रयोजनम्,

कौमुदी

गुरुपरम्पराप्रणाड्या प्राप्तो यः ध्वनियोजनाप्रकारः, अथ च मद्गुरुणा भट्टेन्दुराजेनैवास्माकं साक्षादेव स्वमुखेन समर्पित इति नानादरणीयत्वशङ्काकलङ्कावकाश इत्यर्थः ॥

ननु ध्वनिस्वरूपं लक्षयितुं प्रारभमाणेन कारिकाकारेण, लक्षणाधीनत्वाल्लक्ष्यसिद्धेः तत्स्वरूपलक्षणाभिधाने कर्तव्ये, तदवधीरणया प्रथमं तद्विषयविमतिहेतुकसहृदयमनःप्रीतिहेतुकतत्स्वरूपाभिधानविषयस्योद्यमप्रकटनमनर्थकमिवावभाति; सामर्थ्यलभ्यत्वादस्यार्थस्याभिधानानपेक्षत्वात्; विमतिविषयत्वस्य हि तत्सतत्त्वाभिधानहेतुत्वं सुप्रसिद्धमेव; स्वरससुन्दरार्थप्रतिपत्तेः प्रीतिहेतुत्वं चानुक्तगम्यमेव; अतः "काव्यस्यात्मा" इत्याद्यकारिकारम्भोऽनर्थक इति शङ्कां निवारयितुं तावदाह—**अथ प्राधान्येनेत्यादिना** ॥ अथशब्दोऽयमारम्भार्थः, काव्यालङ्कारग्रन्थस्यात्रैव व्याख्यातुं प्रारब्धत्वात्। कारिकाग्रन्थव्याख्यानं तावदिहारब्धं वेदितव्यमित्यर्थः। अत एव मङ्गलार्थो वास्तु। न तावद्यथोक्तहेतुफलकध्वनिस्वरूपविधानप्रतिज्ञामात्रपरैषा कारिका; किं तर्हि श्रोतृजनप्रवृत्त्यर्थमपेक्षितविशिष्टविषयाद्यनुबन्धवत्त्वप्रकटनार्थेति नानर्थक्यशङ्कावकाश इत्याह—**प्राधान्येनेति** ॥ अभिधेयम् अस्मिन् शास्त्रे प्रतिपाद्यध्वनिस्वरूपात्मकम् अनन्यलभ्यतया विषयशब्दाभिधेयम्; न खल्वस्माच्छास्त्रादन्यतस्तल्लाभ इत्यनन्यलभ्यत्वम्, तल्लक्षणत्वाद्विषयत्वस्य; तदेतत्प्राधान्येन प्रधानतयानेन वाक्येनाभिधीयते; "तत्स्वरूपं ब्रूमः" इति विशिष्टवाक्यार्थत्वेन प्रतिपादनात् प्रधानत्वम्। न चाभावादिवादिविप्रतिपत्तिप्रभेदोपन्यासस्य ध्वनिस्वरूपाभिधानस्य तद्धेतुकत्वकथनस्य चानर्थक्यमाशङ्कनीयम्; विप्रतिपत्तिविषयत्वं हि सन्देहापादकत्वेन प्रसिद्धम्; तच्चानभिधेयत्वापादकासन्दिग्धत्वव्युदासेन विषयत्वोपपादकमिति तस्यापि नानर्थक्यमिति भावः। ननु भवत्वेवं विषयसमर्पकत्वेन तदुपपादकत्वेन वा सार्थकत्वम्; तथापि "सहृदयमनःप्रीतये" इत्यंशस्यानर्थक्यं तदवस्थम्; न च तस्य प्रयोजनसमर्पणप्रणाड्या सार्थकत्वम्, प्रीतेर्ध्वनिस्वरूपाभिधानप्रयोजनत्वाभावात्; अभिधानस्य ह्यभिधेयज्ञानमेव प्रयोजनं नान्यत्—इत्याशङ्क्य, तस्य प्रयोजनसमर्पकत्वाददोष इत्याह—**प्रयोजनप्रयोजनमिति** ॥ सत्यम् अभिधानस्याभिधेयज्ञानमेव प्रयोजनम्; न तु तस्य प्रयोजनलक्षणमस्ति, सुखप्राप्त्यादेरन्यतरस्यैव प्रयोजनत्वात् ज्ञानस्य स्वतस्ताद्रूप्याभावात्; अतो ज्ञानजन्यायाः प्रीतेः स्वत एव प्रयोजनभूताया इह तदभिधानप्रयोजनत्वं

लोचनम्

तत्संबन्धं प्रयोजनं च[1] सामर्थ्यात् प्रकटयन् आदिवाक्यमाह--**काव्यस्यात्मेति** ॥ काव्यात्म-

कौमुदी

दर्शितमिति तस्यापि नानर्थक्यमित्यर्थः । न चैवं सति वाक्यभेदापत्तिरित्याशयेन **अप्रधान-तयेत्युक्तम्** । विषयस्य वाक्यार्थीभावेन प्रधानतया प्रतिपादनम्; प्रयोजनस्य तु पदार्थी-भावेनाप्रधानतया ; विशिष्टप्रतिपादकवाक्याद्विशेषणप्रमितिन्यायेनाप्राधान्येऽपि तत्प्रतिपादक-त्वमविरुद्धमेवेति भावः । अत्र च "अभिदधत्" इत्यस्यानुषङ्गो द्रष्टव्यः । भवत्वेवं विषय-प्रयोजनलाभः; तथापि शास्त्रादौ सम्बन्धाभिधानस्यावश्यकत्वात्तदनिर्देशादपरिपूर्णार्थमेतत् वाक्यमित्याशङ्क्य शब्दतस्तदनिर्देशेऽपि अर्थतस्तल्लाभाददोष इत्याह—**तत्सम्बन्धं [प्रयोजनं] चेति** ॥ तच्छब्देनाभिधेयप्रयोजने एव परामृश्येते ; ते च ध्वनिस्वरूपसहृदयमनःप्रीतिलक्षणे ; ध्वनिशास्त्रयोस्तावदभिधानाभिधेयभावलक्षणः सम्बन्धः ; प्रीतिशास्त्रयोः पुनः साध्यसाधन-भावरूपः ; एतच्चोपरिष्टात् स्वयमेव वक्ष्यति ; प्रयोजनं ध्वनिस्वरूपज्ञानरूपम् ; **सामर्थ्यात्** इत्यनेन वाक्यभेदप्रसङ्गं परिसञ्चष्टे ॥ **आदिवाक्यमिति** ॥ अत्रादिशब्देनाभिधेय-प्रयोजनादिप्रतिपादकत्वमस्य समुचितमेवेति दर्शितम् । कारिकापदमवधीर्य वाक्यपदं प्रयुञ्जा-नस्यायमभिसन्धिः । मुख्यतया हि 'क्रियते अनेन ज्ञप्तिः' इति लक्षणतया प्रसिद्धोऽसाधा-रणभूतः कश्चिद्धर्मः कारिका; उपचारात्तु तत्समर्पकसुखग्राह्यार्थः श्लोकोऽपि कारिकेत्युच्यते; तत्रास्य श्लोकस्य लक्ष्यभूतध्वनिस्वरूपज्ञापकत्वेनौपचारिकमपि कारिकात्वं नास्ति ; किन्तु ग्रन्थारम्भापेक्ष्यमाणविषयाद्युपस्थापकत्वेन तद्बहिर्भूतत्वमेव ; अत एवास्योपोद्घातत्वेनैवात्र सङ्गतिरिति वाक्यरूपत्वम् अवश्यवाच्याभिधेयादिवाचकत्वम्; अत एव "यत्रार्थः शब्दो वा" इत्यतः प्राक्तनानां वाक्यरूपत्वमेवावसेयम् , औपोद्घातिकी सङ्गतिश्च । अथवा आदौ प्रतिपाद्यं वस्तुजातमादिशब्देन गृह्यते; तद्विषयं वाक्यमादिवाक्यम् ; विषयादेस्त्वादौ प्रतिपाद्यत्वं प्रेक्षावच्छ्रोतृजनप्रवृत्त्यङ्गत्वेन सर्वत्र सुप्रसिद्धमेव । तदाहुः न्यायविदः— "प्रयोजनादीनां शास्त्रादौ परिकीर्तनं प्रेक्षावतां प्रवृत्त्यङ्गम्" इति । अत एव श्रोतृजन-सुखप्रतिपत्त्यर्थाभिधानकर्तृत्वार्थविषयवाक्यशब्दप्रयोगः ॥

ननु स्वतःप्राप्तासङ्कुचितार्थप्रवृत्तेर्बुधशब्दस्यावबोद्धव्यनिखिलवस्त्ववबोधशालिवि-द्वन्मात्राभिधायकत्वावधीरणेन काव्यतत्त्वमात्रविद्विषयतया वृत्तिकारस्य व्याख्यानं किं-निबन्धनमित्याशङ्क्य 'अनेकार्थविषयः शब्दः प्रकरणादिभिर्विषयविशेषे नियम्यमानः तद्बुद्धि-जनकतां प्रतिपद्यते' इति न्यायमाश्रित्य, न बुधशब्दमात्रसमुद्भिन्नोऽयमर्थः, अपि तु अवबोधस्यावबोद्धव्यवस्तुपरिच्छेद्यत्वात्तद्विशेषगवेषणायां प्रकरणादिबलात् काव्यात्मतत्त्व-

१. ग. 'तत्संबन्धि प्रयोजनं च.' त. 'तत्संबद्धप्रयोजनं च.'

ध्वन्यालोकः

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।**

बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिसंज्ञितः[1] परम्परया यः[2] सम्य-

लोचनम्

शब्दसंनिधानाद्बुधशब्दोऽत्र काव्यात्मावबोध[3]निमित्त इत्यभिप्रायेण विवृणोति—**काव्यतत्त्वविद्भिरिति** ॥ आत्मशब्दस्य तत्त्वशब्देनार्थं विवृण्वानः सारत्वमपर[4]शब्दवैलक्षण्यकारित्वं च

कौमुदी

विषयत्वपर्यवसानमभिप्रेत्य विद्वद्विशेषवाचकतया बुधशब्दव्याख्यानमिदं वृत्तिकृत इति नान्येषां बुधत्वपरिसङ्ख्यानाभिप्रायापत्तिदोष इत्याह—**काव्यात्मेति** ॥ तर्हि काव्यात्मविद्भिरित्येवालम्, अवबोधपरिच्छेदस्य तावतैव सुसम्पादत्वात्; अथात्मशब्दव्याख्यानाभिप्रायेण तत्त्वशब्दः वक्तव्यः[म्] तर्हि तत्प्रयोजनमित्यत आह—**आत्मशब्दस्येति** ॥ अर्थं विवृण्वान इत्यनेन आत्मशब्दस्य व्याख्यानार्थत्वमस्योपवर्णितम् । न च निष्प्रयोजनमित्युक्तम्—**सारत्वमिति** ॥ आत्मेवात्मा इत्यात्मगुणयोगनिमित्तोऽत्रात्मशब्द इत्येतदर्थप्रतिपत्तिरत्र प्रयोजनम्; तद्गुणश्च सारत्वादिः; आत्मनो हि सारत्वं विशेषहेतुत्वं च प्रसिद्धम्; तद्वदस्यापि सारत्वमुत्कृष्टत्वलक्षणम्; अपरेभ्यः शब्देभ्यः शब्दप्रतिपाद्येभ्यो वाच्यादिभ्यः स्वस्य यद्वैलक्षण्यम् स्वस्माद्वा तेषाम्, तत्करोतीति तथा तद्भावश्च विद्यत इत्यात्मशब्दप्रवृत्तिनिमित्तं दर्शयितुं तत्त्वशब्देनात्मशब्दव्याख्यानमित्यर्थः । अत्र वृत्तौ ध्वनिसंज्ञितः काव्यस्यात्मेत्युक्तम् । न तु ध्वनिः काव्य-

उपलोचनम्

"काव्यस्यात्मा ध्वनिरिति बुधैः"इति कारिकायाम् । अत्र इतिशब्दस्य शब्दस्वरूपपरतया व्याख्यानमनादृत्य क्रमभेदेन वाक्यार्थपरामर्शकतया व्याचक्षाणानां लोचनकाराणामयमभिसन्धिः—यदि इतिशब्दः शब्दपरोऽभविष्यत्, "ध्वनिसंज्ञितोऽर्थः" इति वृत्तौ आचार्यो नावक्ष्यत्; 'ध्वनिशब्दः काव्यस्यात्मा' इत्येवावक्ष्यत् इति ॥

१. क. ख. ग. 'ध्वनिरिति संज्ञितः' २. क. ख. ग. 'समाम्नातः समाख्यातः'
३. क. ख. घ. 'अवबोधकनिमित्तः' ४. क. ख. ग. ङ०. त.–'शब्द'-

ध्वन्यालोकः

**गाम्नातपूर्वः सम्यक् आ समन्तात् आम्नातः प्रकटित ः, तस्य सहृदयजनमनःप्रकाशमान-**

लोचनम्

दर्शयति। इतिशब्दः स्वरूपपरत्वं[3] ध्वनिशब्दस्याचष्टे। तदर्थस्य विवादास्पदीभूततया [5]निश्चया-भावेनार्थत्वायोगात् । एतद्विवृणोति—**संज्ञित इति** ॥ वस्तुतस्तु न तत्संज्ञामात्रेणोक्तम् । अपि त्वस्त्येव ध्वनिशब्दवाच्यं प्रत्युत समस्तसारभूतम्। न ह्यन्यथा बुधास्तादृशमामनेयुरित्यभि-

कौमुदी

स्यात्मेति; तत्र को हेतुः ? एवं हि सति ध्वनेः काव्यात्मत्वं प्रतिपिपादयिषितमभिहितं भवेत् इत्याशङ्क्य—ध्वनिशब्दात्परतः प्रयुक्तस्य इतिकरणस्य व्याख्यानमिदम् ; न चैवं ध्वनेः काव्यात्मत्वानभिधानप्रसक्तिः संज्ञोपलक्षिततत्त्वविशेषेणार्थस्य संज्ञिन एवात्मत्वाभिधान-पर्यवसानात् इत्यभिप्रायेणाह--**इतिशब्द इति** ॥ **आचष्ट इति** ॥ आख्यातवत् स्फुटमवगमय-तीति यावत् । सर्वशब्दानां शब्दस्वरूपपरत्वमर्थपरत्वं चास्तीति समये अत्र इतिकरण-योगात् ध्वनिशब्दोऽयं ध्वनिशब्दस्यैव स्वतःप्रधानतया प्रतिपादकः अर्थस्य त्वप्रधानतयैव, तदवच्छिन्नार्थप्रतिपादकश्चेत्येवं इतिशब्दप्रयोगबलादवगम्यत इत्यर्थः । ननु ध्वनिरूपस्यार्थ-स्यैव काव्यात्मत्वात् इतिशब्दयोगेऽपि केवलार्थस्यैव काव्यात्मत्वमभिधानीयमित्यत्राह— **तदर्थस्येति** ॥ **अर्थत्वायोगादिति** ॥ निश्चयात्मकज्ञानगोचरीभूतस्यैव मुख्यतयार्थशब्द-वाच्यत्वम्; न तु सन्देहरूपज्ञानविषयीभूतस्येत्यर्थः । इयता ध्वनिरितिकारिकाखण्डो व्याख्यातः। व्याख्याते त्वस्मिन्नर्थे वृत्तिग्रन्थमवतारयति--**एतद्विवृणोतीति** ॥ नन्वेवं कारिका-ग्रन्थाक्षरगमनिकाङ्गीकारेण व्याख्याने सति तस्य सहृदयमनःप्रकाशमानस्यापीति समनन्तरग्रन्थविरोधः, तत्र ध्वनिलक्षणस्यार्थस्य सहृदयसाक्षिकत्वाभिधानात् इत्याशङ्क्याह— **वस्तुतस्त्विति** ॥ यद्यपि संज्ञाप्रधानतयैव ध्वनिलक्षणं वस्तु काव्यात्मत्वेनाभिहितम्, तत्तु न परमार्थतः ; किन्तु अश्रद्धोपहन्यमानमानसजनबुद्ध्यनुरोधार्थमापातत एव ; परमार्थतस्तु ध्वनिशब्दाभिधेयं शब्दस्वरूपान्निष्कृष्टस्वरूपं किञ्चिदर्थान्तरमस्त्येव ; न च तदस्तीत्ये-तावदेव। किं तर्हि अङ्गित्वेनाङ्गस्थानीयेभ्यो वाच्यादिभ्योऽर्थेभ्य उत्कृष्टरूपमेव ; तच्च तत्स्व-रूपाभिज्ञाभियुक्ताम्नानप्रमाणबलादवगम्यत इत्यर्थः ॥

१. क. ख. ग. 'सम्यगासमन्तादाम्नातः प्रकटित :' इति नास्ति। त. 'सम्यग्य आम्नातपूर्वः सम्यगासमन्तात् म्रातः प्रकटित .' २. त. 'मनसिं प्रकाशमान' ३. घ. 'स्वरूपपरः' ४. ग. 'तत्तदर्थस्य' ५ क. ख. 'निश्चयाभावेऽर्थतत्त्वायोगात्' ग. 'निश्चयायोगात्'

लोचनम्

**प्रायेण** विवृणोति—**तस्य सहृदयेत्यादिना** ॥ एवं तु युक्ततरम्—इतिशब्दो भिन्नक्रमो वाक्यार्थपरामर्शकः, ध्वनिलक्षणोऽर्थः काव्यस्यात्मेति यः समाम्नात इति[1] । शब्दपदार्थकत्वे[2] हि ध्वनिसंज्ञितोऽर्थ इति का सङ्गतिः । एवं हि ध्वनिशब्दः काव्यस्यात्मेत्युक्तं भवेत्, 'गवित्ययमाह' इति यथा । न च विप्रतिपत्तिस्थानमसदेव, प्रत्युत सत्येव धर्मिणि धर्ममात्र-

कौमुदी

ननु एवं तर्हि ध्वनिरितीति ध्वनिशब्दात् परतःप्रयुक्तेतिशब्दावगतस्वरूपपरत्वदौर्घ-व्यप्रसक्तिरित्याशङ्क्य प्रकारान्तरेण वृत्तिकृदभिप्रायस्थं व्याख्यानमुट्टङ्कयति—**एवं त्विति** ॥ एवमिति वक्ष्यमाणपरामर्शः । अर्थाङ्गस्यरूपविशेषावद्योतनार्थः तुशब्दः । तरप्प्रत्ययेन पूर्व-योजनाया युक्तत्वं प्रत्याय्यते ॥ **युक्ततरमिति** ॥ इतिशब्दयोजनमिति शेषः । एवमित्युक्तं व्यक्तीकरोति—**इतिशब्द इति** ॥ पूर्वयोजनायां हि ध्वनिशब्दपरामर्शकतया इतिशब्दो योजितः । इह तु व्याख्याने क्रमभञ्जनेन यो ध्वनिलक्षणोऽर्थः काव्यस्यात्मा इति बुधैः समाम्नातपूर्व इति वाक्यार्थपरामर्शकतया तद्योजनाङ्गीकारेण ध्वनिरूपार्थस्य काव्यात्मत्वा-भिधानं समञ्जसतया संपद्यत एव । पूर्वत्र तु शब्दाङ्गस्यमात्रम्; अर्थस्य तु ध्वनेः शब्दोपलक्षितत्ववेषेण कथञ्चित्काव्यात्मत्वाभिधानं क्लिष्टमित्ययमेव व्याख्याप्रकारो वृत्तिकारेणा-भिसंहितः । तदनुपवर्णनं तु शब्दपीडापरिहारेण सुखाधिरोहपूर्वव्याख्यानभूमिकोपारूढानां सुखावगमत्वाभिप्रायेणैवेति न कश्चिदवकर इत्यर्थः ॥

ननु एवमपि ध्वनिरितीति वदन् कारिकाकारः केवलं संज्ञापरत्वमेव किं नाभिप्रैति इति तद्विरोधो दुष्परिहर इत्यत्राह—**शब्दपदार्थकत्वे हीति** ॥ न केवलं संज्ञापरत्वं कारिका-कारस्याभिसंहितम्, किन्तु अर्थस्यैव संज्ञोपलक्षितस्यापि काव्यात्मत्वेन साक्षात्त्वम्[3], वृत्तिकारे-णाभिधानात्; अन्यथा संज्ञाया एव काव्यात्मत्वप्रसङ्गात् ध्वनिसंज्ञितोऽर्थः काव्यस्यात्मेति वृत्तिकृद्वचनं न सङ्गच्छेतेत्यर्थः । कुत इत्यत आह—**एवं हीति** ॥ शब्दस्यैवार्थरहितस्य ध्वनिपदार्थत्व इत्यर्थः । शब्दस्य स्वरूपमात्रपरत्वे दृष्टान्तमाह--**गवित्ययमिति** ॥ ननूक्तं तदर्थस्य विवादास्पदीभूततया निश्चयाभावेऽर्थत्वायोगादिति पूर्वव्याख्यानावसरे; तत्र किं विवादास्पदत्व-मसत्त्वप्रयोजकमभिसंहितम्? किं वानभिधेयत्वापादकम्? आद्ये विरुद्धो हेतुरित्याह—**न चेति** ॥ स्थानशब्दो विषयवाचकः; अत्यन्तमेवासतो नभोनलिनादेर्विवादास्पदीभावानुपलम्भात् । इतरथा 'गगनारविन्दं सुरभि' इत्यादेः सदनुमानत्वप्रसङ्गात्, तुच्छरूपस्य निरुपाख्यतया विषयत्वानु-

१. क. ख. ग. 'इति' नास्ति. २. क. ख. 'शब्दपरामर्शकत्वे' ङ. 'शब्दपदार्थतत्त्वे'
३. काव्यात्मत्वेन सहृदयानामपरोक्षत्वमभिसंहितमिति यावत् ।

लोचनम्

कृता विप्रतिपत्तिः—इत्यलमतिविस्तरेण[1] अप्रस्तुतेन भूयसा सहृदयजनोद्वेजनेन। बुधस्यैकस्य प्रामादिकमपि तथाभिधानं स्यात्, न तु भूयसां तद्युक्तम्। तेन बुधैरिति बहुवचनम्। तदेव[2]

कौमुदी

पपत्तेः विप्रतिपत्तिस्थानत्वं नासत्त्वापादकम्, प्रत्युत सत्त्वापादकमेव इति विरुद्धोऽयं हेतुरित्यर्थः। ननु वस्तुसद्भावविनिश्चये कथं विप्रतिपत्तिसम्भवः, वस्तुविकल्पानुपपत्तेः, विप्रतिपत्तेः संशयकारणत्वस्य न्यायवित्प्रसिद्धस्यापह्नवप्रसङ्गश्च, निश्चयसंशययोरेकस्मिन्नेव विषये विनिवेशानुपपत्तेरित्यत्राह—**सत्येव धर्मिणीति**॥ विरुद्धा हि प्रतिपत्तयो विप्रतिपत्तयः, तासां विरोधो विषयविरोधनिबन्धन एव। न च भिन्नविषयप्रतिपत्त्योर्विप्रतिपत्तित्वमित्येकस्मिन्नेव धर्मिणि इदमीदृगिदमनीदृगिति विरुद्धधर्मद्वयविषयतया तत्कृतैव विप्रतिपत्तिः, विरुद्धयोरेकधर्मिणि विनिवेशासम्भवात्। न चैवं धर्मयोरेव विप्रतिपत्तिस्थानत्वं न धर्मिण इति मन्तव्यम्; धर्मस्य धर्मान्तराभावात्, धर्मिण एव धर्मद्वारा विप्रतिपत्तिविषयत्वात्, तस्याश्च धर्मिसिद्ध्यधीनसिद्धिकत्वात् न धर्मिणोऽसत्त्वाशङ्कापीति भावः। ननु धर्मधर्मिणोरभेदो भेदो वा। अभेदे धर्ममात्रप्रयुक्तत्वाभावः, मात्रचा धर्मिणो व्यवच्छेदात्; भेदे धर्मिणो धर्म्यन्तरवत् विप्रतिपत्तिस्थानत्वायोगः--इत्याशङ्क्य अपर्यायसामानाधिकरण्यप्रतीतिप्रमाणप्रसिद्धभेदाभेदसमुच्चयपक्षावलम्बनेन पक्षद्वयोक्तदोषोद्धारमभिसन्धाय आह—**इत्यलमिति**॥ अप्रस्तुतमपि प्रस्तुतोपयुक्तं नावक्तव्यपद्धतिमध्यासीत, तदधिकप्रपञ्चस्तु सहृदयहृदयोद्वेगजनकत्वादवधीरणीय इत्युक्तम्—**भूयसेति**॥ भूयस्त्वस्यापेक्षिकत्वात् किमपेक्षं तदित्यपेक्षायां तदवधिः सहृदयोद्वेग इत्याह—**सहृदयेति**॥

ननु काव्यतत्त्ववित्तामात्रस्यैव तद्वचनप्रामाण्यप्रयोजकत्वादेकस्यापि बुधस्योक्तिरेव ध्वनेः काव्यात्मत्वप्रमापणे पर्याप्नोतीति बुधैरिति बहुवचनमविवक्षितमेवेति कस्यचित्प्रतिपत्तिं वारयितुमाह—**बुधस्येति**॥ **तथेति**—ध्वनिः काव्यस्यात्मेत्येवमित्यर्थः॥ **तदिति**—प्रामादिकमभिधानम्, भूयसामपि प्रामादिकाभिधानशङ्कायां सर्वत्रानाश्वासेन सकलव्यवहारविलोपप्रसङ्ग इत्यर्थः॥ **तेनेति**॥ तदभिधानस्य प्रामाणिकत्वे निर्विशङ्कमुपादेयत्वद्योतनार्थमिति यावत्। उक्तस्यार्थस्य वृत्तिकृदभिसंहितत्वं दर्शयन् व्याख्यातेऽर्थे वृत्तिग्रन्थं पातयति—**तदेवेति**॥ यदेतदस्माभिरुक्तप्रयोजनं बहुवचनं तस्यैवैतत् व्याख्यानं परम्परयेति वचनं, न तु

१. क. ख. ग. ङ. 'अतिविस्तरेण' नास्ति. २. क. ख. 'एतदेव'

लोचनम्

व्याचष्टे—**परम्परयेति** ॥ अविच्छिन्नेन प्रवाहेण[1] तैरेतदुक्तम्, विनापि विशिष्टपुस्तके[2]-निवेशनादित्यभिप्रायः। न च बुधा भूयांसोऽनादरणीयं वस्त्वादरेणोपदिशेयुः। एतत्त्वादरेणोपदिष्टम्। तदाह—**सम्यगाम्नातपूर्व[3] इति** ॥ पूर्वग्रहणेनेदंप्रथमता नात्र सम्भाव्यत इत्याह। व्याचष्टे च **सम्यक् आ समन्तात् आम्नातः**[4] **प्रकटित** इत्यनेन ॥ **तस्येति** ॥ यस्याधिगमाय प्रत्युत यतनीयं का तत्राभावसम्भावना[5]? अतः किं कुर्मः? अपारं मौर्ख्यमभाववादिनामिति भावः। न चास्माभिरभाववादिनां विकल्पाः श्रुताः; किं तु सम्भाव्य दूषयिष्यन्ते; अतः

कौमुदी

कारिकार्थबहिर्भूतमित्यर्थः। परम्परयेत्यस्यार्थो विवृतः—**अविच्छिन्नेनेति** ॥ **एतदिति** ॥ ध्वनेः काव्यात्मत्वमिति यावत्। अस्य व्यवच्छेद्यमाह—**विनापीति** ॥ असंविदितादिकोटिविद्वत्परम्परामात्राश्रयेणाव्यवधानेन साक्षादुपदेशप्रसिद्धोऽयमर्थः; न तु पुस्तकलेखनव्यवहितविद्वदभिधानसाक्षिक इति नाश्रद्धेयत्वाशङ्कावकाश इत्यर्थः। समाम्नातेत्यत्र समुपसर्गार्थमाह—**न चेति** ॥ निबिडतमजडिमगडुलमतीनां तु भूयसामनादरणीयार्थोपदेश आदरादप्युपपद्यत इति बुधा इत्युक्तम्। ननु 'समाम्नातः' इत्येतावति वक्तव्ये पूर्वग्रहणमतिरिक्तमिवेत्याशङ्क्य तदुपयोगमाह—**पूर्वग्रहणेनेति** ॥ इदंप्रथमता सादित्वम्। अत्रेति आम्नाने। पूर्वग्रहणस्यैवमर्थत्वे किमिति वृत्तिकारो न व्याकार्षीत्? अतोऽनतिरिक्तार्थ एवायमिति शङ्कित्वा आह—**व्याचष्टे चेति** ॥ पूर्वशब्दार्थ एव समाम्नातशब्दव्याख्यामिषेणोन्मीलितः; न तु समाम्नातशब्दार्थप्रदर्शनपरं तत् व्याख्यानम्, निगदव्याख्यातत्वादस्येत्यर्थः। वृत्तौ सहृदयमनःप्रकाशमानस्यापीति यदभावगदनात्यन्तासम्भवार्थमुक्तम् तत् विशिष्टध्वनिस्वरूपपरामर्शकस्य कारिकागतस्य तस्येतिशब्दस्याभिप्रायप्रकाशनपरमित्याशयेनाह—**यस्याधिगमायेति** ॥ तत्रेति तस्मिन् ध्वनिस्वरूपे, संभावना—सम्भवविषया प्रयोजकक्रिया; अपारम् अवसानरहितम्। अथ कारिकायां जगदुरिति लिट्प्रयोगसामर्थ्यावगतमभाववादस्य परोक्षत्वम्, भूतत्वम्, अनद्यतनत्वं च। "न चास्माभिः" इत्यादिना "जगदुरिति" इत्यन्तेन ग्रन्थेन क्रमेणोपपादयन् प्रथमं परोक्षत्वमुपपादयति—**न चेति** ॥ अस्माभिरिति ध्वनिवादिभिः। श्रुतत्वं श्रवणेन्द्रियग्राह्यतया प्रत्यक्षत्वम्, तदभावान्नापरोक्षत्वमित्यर्थः। तर्ह्यश्रुतत्वादेव तद्दूषणं वक्ष्यमाणमकाण्डताण्डवितमापन्नमित्यत्राह—**किं तु सम्भाव्य दूषयिष्यन्त इति** ॥ "केचिदाचक्षीरन्" इत्यादिना सम्भावनम्।

१. ग. 'कैरेतदुक्तम्' २. क. ख. 'पुस्तकेषु विवेचनात्'
३. क. ख. 'सम्यग्य आम्नात-' ४. क. ख. 'समाख्यातः सम्यगासमन्तात् ख्यातः'
५. क. ख. 'तत्रासम्भावना'

लोचनम्

परोक्षत्वम् । न च भविष्यद्वस्तु दूषयितुं युक्तम्[1] । अनुत्पन्नत्वादेव । तदपि बुद्ध्यारोपितं दूषयिष्यत[2] इति चेत्, बुद्ध्यारोपितत्वादेव भविष्यत्त्वहानिः । अतो भूतकालोन्मेषात्पारोक्ष्याद्[3]द्विशि-

कौमुदी

"यत्रार्थः शब्दो वा" इत्यत्र तु दूषणं वक्ष्यते । सम्भावनारूपप्रतीतिप्रसिद्धत्वाच्छ्रुतत्वाभावेऽपि तत् दूषणं सङ्गच्छत इति भावः । यस्माच्छब्दानित्यत्वनित्यत्वविकल्पवन्न श्रोत्रप्रत्यक्ष-गोचरत्वममीषां विकल्पानाम्, किं तु सम्भावनाप्रत्ययगोचरत्वमेव, तस्मात् परोक्षत्वं लिट्प्रयोगावगतमुपपन्नमित्याह—अतः **परोक्षत्वमिति** ॥ तथापि सम्भाव्यमानत्वेनैव भूतत्वाभावान्न तदेकनियमितलिट्प्रयोगोपपत्तिरित्याशङ्क्य भविष्यत्तानिरासेन पारिशेष्यात् भूतत्वं पर्यवसाययितुमाह—**न चेति** ॥ स्वकारणाल्लब्धसत्ताकस्यैव वस्तुत्वात् भवि-ष्यतश्च तदसम्भवान्न भविष्यत्त्ववस्तुत्वयोः समावेश एकस्मिन् इत्याशयेन वस्तुशब्दः प्रयुक्तः ॥ **अनुत्पन्नत्वादेवेति** ॥ अलब्धसत्ताकस्य प्रतिपत्तिपथारोपितत्वाभावादित्यर्थः । अनुत्पन्नत्वस्य धर्मिस्वरूपोपमर्दोपजीवित्वात्तन्मात्रस्यैव स्वरूपलाभोपजीविहेत्वन्तरानपेक्षतया यथोक्तसाध्यसिद्धौ हेतुत्वं सूचयितुमेवकारः । ननु भविष्यतोऽपि ताद्रूप्येण सत्त्वात् नृशृङ्गादिवत् त्रैकाल्यासत्त्वस्य वक्तुमशक्यत्वात् भविष्यत्तोपाधिपरिधूननेन स्वरूपमात्रेण बुद्धावारोपयितुं शक्यत्वात् वार्तमानिकबुद्धिगोचरतुल्ययोगक्षेमत्वसम्पत्तेर्न दूष्यत्वासम्भव इति शङ्कते—**तदपीति** ॥ अपिशब्दो भविष्यतो दूष्यत्वविरोधार्थः । अथ वा तदपीति तथापीत्यर्थः । भविष्यतोऽपि वृष्ट्यादेर्विशिष्टमेघोन्नत्यादिलिङ्गपरामर्शजनिततायामनुमानादि-बुद्धौ समारोपयितुं शक्यत्वादत्रापि सम्भावनालक्षणायां बुद्धौ तादृशोऽर्थस्यारोपणात्तद्दूषणो-पपत्तिरित्यर्थः । अथ वा बाह्यार्थापलापिबौद्धगन्धिन इयमाशङ्का । अत्र च बाह्यार्थाना-मान्तरत्वोपपादनार्था युक्तयः स्वयमभ्यूह्य योजनीयाः, ग्रन्थगौरवभयात्तु न लिख्यन्ते । तर्हि मदीयमेव पन्थानमाढौकितवानसीति परिहरति—**बुद्ध्यारोपितत्वादिति** ॥ बुद्धा-वारोपितत्वमपि यदि भविष्यत्त्वाकारेणैव न तदा विशेषः कश्चित् । अथ सत्तासमवा-यित्वमात्राकारेण तदा बहिरपि तथाभावेन वस्तुनः सद्भावे बुद्ध्यारोपितत्वभङ्गः । तस्यापि बुद्ध्यारोपितत्वे सत्यनवस्थादिप्रसक्तिः । न च वर्तमानो नाम कालोऽस्तीति प्रामाणिकाः । अतः पारिशेष्यात् भूतकालावच्छिन्नतयैव बुद्धावारोपः । तथा चास्मदभीष्टसिद्धिरित्यर्थः ॥

१. क. ख. ग. 'शक्यम्'
२. क. ख. 'दूष्यते'
३. क. ख. ग. 'परोक्ष-'

लोचनम्

ष्टाद्यतनत्वप्रतिभानाभावाच्च लिट्[1]प्रयोगः कृतः—**जगदुरिति** ॥ तद्[2]व्याख्यानायैव सम्भाव्य-दूषणं प्रकटयिष्यति । सम्भावनापि नेयमसम्भवतो युक्ता, अपि तु सम्भवत एव । अन्यथा सम्भावनानामपर्यवसानं स्यात्, तद्दूषणानां च । अतः सम्भावनाम[3]भिधायिष्यमा-णां समर्थयितुं पूर्वं सम्भ[4]वन्तीत्याह । सम्भाव्यन्त इति तू[5]च्यमानं पुनरुक्तार्थमेव स्यात् । न च सम्भवस्यापि सम्भावना[6], अपि तु सा[7] वर्तमानतैव स्फुटेति वर्तमानेनैव निर्देशः ।

कौमुदी

केचित् बुद्ध्यारोपितमिति निष्ठाप्रत्ययसामर्थ्यात् भूतत्वप्रतीतेः भविष्यत्त्वभङ्ग इति व्याचक्षते, तदचतुरश्रम् । एवं हि सति वचनदोष एवायं भवेत्, न तु वस्तुगतः ; सम्भ-विन्यां च वस्तुदोषोद्घाटनायां न शब्ददोषोद्भावनमात्रेण कश्चित् बहुमान इत्यलमनेन । एवं परोक्षत्वंभूतत्वं [च] प्रसाध्योपसंहरति—**अत इति** ॥ वास्तवस्य भूतत्वस्यात्रासम्भवमभिप्रेत्य उन्मेषपदप्रयोगः । प्रातिभासिकं भूतकालावच्छिन्नत्वं लिट्प्रयोगावलम्बनं न वास्तवमिति भावः ॥ **पारोक्ष्यादिति** ॥ एतच्च न चास्माभिरिति समनन्तरमेवोपपादितमिति भावः । तथापि लिटोऽनद्यतनार्थत्वस्मृतेस्तदसिद्धावनुपपत्तिरित्याशङ्क्य विरोध्यद्यतनत्वप्रतिभासाभाव-बलादनद्यतनत्वसिद्धेरदोष इत्याह—**विशिष्टेति** ॥ भवतु नामोक्तप्रकारेण जगदुरिति लिट्प्रयो-गोपपत्तिः, तथाप्युक्तस्यार्थस्य वृत्तिग्रन्थेऽनुद्भिन्नत्वान्नोपादेयत्वमित्याशङ्क्य तस्य वृत्तिकृदभि-संहितत्वं प्रदर्शयितुमाह—**तद्व्याख्यानायैवेति** ॥ यदेतत् वृत्तिकार "आचक्षीरन्" इत्यादि-सम्भावनोपक्षेपपुरःसरं दूषणप्रकटनमुत्तरत्र करोति, तत्र यत्सम्भावनानां प्रदर्शनं तत्कारिका-गतलिट्प्रयोगव्याख्यानार्थमेव, दूषणार्थमनुभाषणमात्रपरत्वे सम्भावनादर्शनानर्थक्यात् ; अज्ञा-

उपलोचनम्

"जगदुः" इति कारिकायां लिट्प्रयोग एव व्याख्यायते वृत्तौ "आचक्षीरन्" इत्यत्र लिङः प्रयोगेणेति निरूपयन्ति लोचनकाराः "तद्व्याख्यानायैव सम्भाव्यदूषणं प्रकटयिष्यति" इति वदन्तः । तस्य लिटः, व्याख्यानायैव, सम्भाव्यदूषणं प्रकटयिष्यति "आचक्षीरन्" इति लिङा-इत्यर्थः ।

१. क. ख. ग. 'लिटा प्रयोगः'
२. क ख. ग. 'तत्' नास्ति.
३. क. ख. ग. 'सम्भावनानामभिधायि-ष्यमाणानाम्'
४. ग. घ. 'संभवति'
५. घ. 'तु' नास्ति.
६. ग. 'संभवस्य संभावना' घ. च. 'संभवस्यासम्भावना'
७. ग. च. 'सा' नास्ति.

ध्वन्यालोकः

**केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ १ ॥**

स्यापि अभावमन्ये जगदुः । तदभाववादिनां चामी विकल्पाः संभवन्ति । तत्र केचिदाचक्षीरन्—

लोचनम्

ननु[1] सम्भवद्वस्तुमूलया सम्भावनया यत्सम्भावितं तद्दूषयितुमशक्यमित्याशङ्क्य[2]ाह—**विकल्पा इति** ॥ न[3] तु वस्तु सम्भवति तादृक् यत इयं सम्भावना । अपि तु विकल्पा[4] एव, ते च तत्त्वावबोधवन्ध्यतया स्फुरेयुरपि । अत एव 'आचक्षीरन्' इत्यादयोऽत्र संभावनाविषया लिङ्प्रयोगा[5] अतीतपरमार्थत्व[6] एव पर्यवस्यन्ति । यथा—

'यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥'

इत्यत्रार्थाद्यद्येवं[7] कायस्य[8] दृष्टता स्यात्तदै[9]वमवलोक्[10]येतेति भूतप्राणतैव । यदि न

कौमुदी

तस्य हि दूषणमशक्यसम्पादमिति तज्ज्ञापनमात्रमेव दूषणोपयोगितया प्रसिद्धमिति आचक्षीरन्नित्यादि सम्भावनोपक्षेपो व्याख्यानाभिप्राय एवेति वृत्तिकारानभिप्रेतत्वमुक्तस्यार्थस्यानाशङ्क-

उपलोचनम्

"अत एव आचक्षीरन्नित्यादयः" इत्येवं लोचने । लिङर्थव्याव्याख्यानाय लिङः प्रयोगादेव तस्य लिङः सम्भावनाद्वारा भूतकालपारोक्ष्यानद्यतनत्वपरता अभ्युपगन्तव्येति भावः । "यदिनामास्य कायस्य" इत्यादिप्राचीनपद्ये 'यदि न स्यात्ततः किं स्यात्' इत्येवं नञा किमा च लिङस्समभिव्याहारे च सम्भावनाबोधकलिङा भूतकालबोधनस्य न क्षतिरित्यभिसन्धाय वदति—"यथा यदि" नामेत्यादि "अयमेवार्थः" इत्यन्तम् । "विकल्पास्सम्भवन्ति" इत्यत्र

१. क. ख. 'नन्वसंभव-'
२. च. 'आशङ्क्य' नास्ति.
३. ग. 'न वस्तु संभावना तादृक् क्रियते इयं'
च. 'न वस्तु सम्भवि तादृक् यतः'
४. क. ख. 'विकल्पः'
५. घ. 'संभावनाविषयाः प्रयोगाः'
६. क. ख. ग. 'अतीतपरमार्थाः'
७. क. ख. 'अर्थाद्यद्येवम्'
८. ख. ग. 'काव्यस्य'
९. ग. घ. 'तदा'
१०. घ. 'आलोक्येत'

लोचनम्

स्यात्ततः किं स्यादित्यत्रापि[1] किं वृत्तम्, यदि पूर्ववन्न भवनस्य[2] संभावनेत्ययमेवार्थः; इत्यलमप्रकृतेन बहुना ॥

कौमुदी

नीयमित्यर्थः; ननु [न तु] विकल्पशब्दवाच्यानां पक्षाणां सम्भावनामात्रपरमार्थतां वक्तुमिति एवार्थः--इति सङ्गतिः। इतिशब्दोक्तं प्रकारं स्पष्टयति—**किं वृत्तमिति**॥ ततः किं स्यादित्यस्यार्थोऽनेन विवृतः, किं फलं वृत्तं जातं न किञ्चिदित्यर्थः। यदि न स्यादित्यस्यार्थो दर्शितः, यदि पूर्ववदित्यनेन बहिर्भूतान्तर्गतमांसादित्वादृष्टत्वमुक्तम्। भवनस्येत्यनेन स्यादित्यत्र प्रकृत्यर्थो व्याख्यातः। सम्भावनेत्यनेन प्रत्ययार्थः। यथा विधिमुखे वाक्ये लिङः सम्भावनामात्रमर्थः, एवं प्रतिषेधमुखेऽपि विधिनिषेधविषयभेदमात्रकृतः पुनर्विशेषः; सम्भावनार्थत्वं पुनरविशिष्टमेवेत्यर्थः। वाक्यं चेदं वस्तुतत्त्वविनिवेदनमुखेन वैराग्यादार्ढ्यजननार्थतया प्रवृत्तम्। आसतां तावदमी देहात् बहिर्भूता ममकारास्पदीभूता भावभेदा आजानसिद्धाहन्तास्पदीभावनिसर्गसौभाग्यसर्वस्वविश्रान्तिधामभूतः पुनरसौ देहोऽपि कदाचिद्दैवगत्या व्यत्यस्तान्तर्बहिर्भाग एवालोकपदवीमवतरेत्; तदा निरस्तनिखिलेतरव्यापार एव घनतरमांसपिण्डमयनिजापघनजिघत्सासमाक्रान्तस्वान्ततया निरन्तराभिपातुकश्वकाकादिनिवारणपर एव दिवानिशमयं लोकः स्यादित्ययमतिजुगुप्सित ईदृशो देहः। अथ नोक्तप्रकारसम्भावनागोचरः किन्तु यथायथमेव व्यवस्थितान्तर्बहिर्भाग एवात्यन्तायायं कायः स्यात्, तदापि निष्फल एवायमिति फल्गुतरविषयोपभोगमात्रोपयोगित्वात् सर्वथातिजुगुप्सित एवायमिति गाढतरां वैराग्यकोटिमधिरूढस्येयमुक्तिः। उपपादितेऽर्थे वक्तव्यभूयस्त्वमासूत्रयन् प्रस्तुतोपयोगविरहादुपरमं प्रकटयन्नुपसंहरति—**इत्यलमिति**॥

इदानीं श्रोतॄणां सुखप्रतिपत्त्यर्थं "तेनैवंविधासु विप्रतिपत्तिषु" इत्यतः प्राक्तनस्य ग्रन्थसन्दर्भस्य महातात्पर्यं दर्शयति—"तत्र" इत्यादिना "तात्पर्यार्थः" इत्यन्तेन॥ **तत्रेति**॥ प्रस्तुते

उपलोचनम्

वृत्तिगतस्य विकल्पशब्दस्य 'विविधाः कल्पनाः' 'विपरीताः कल्पनाः' इति वार्थो वर्णनीय इति लोचनकाराणामाशयः।

१ क. ख. 'इत्यनेनापि' २. क. ख. 'यदि न पूर्वं भवनस्य' ग. ... 'भवनसंभावना'

लोचनम्

तत्र समयापेक्षणेन शब्दोऽर्थप्रतिपादक इति कृत्वा वाच्यव्यतिरिक्तं नास्ति व्यङ्ग्यम् । सदपि वा [1]तदभिधावृत्त्याक्षिप्तं [2]शब्दावगतार्थबलाकृष्टत्वाद्भाक्तम् । तदनाक्षिप्तमपि [3]वा न वक्तुं शक्यम्[4], कुमारीष्विव भर्तृसुखमतद्विस्तु इति त्रय[5] एवैते प्रधान[6]विप्रतिपत्तिप्रकाराः । तत्राभावविकल्पस्य त्रयः प्रकाराः । शब्दार्थगुणालङ्काराणामेव शब्दार्थशोभाकारित्वाल्लोकशास्त्रातिरिक्तसुन्दरशब्दार्थमयस्य [7]काव्यस्यानन्यशोभाहेतुः कश्चिदन्योऽस्ति योऽस्माभिर्न गणित

कौमुदी

ध्वनिस्वरूपविचारे इत्यर्थः । यदेतत् वाच्यव्यतिरिक्तं व्यङ्ग्यं नाम ध्वनिवाद्यभिमतं तन्नास्त्येव न सद्भावमनुभवतीति प्रतिज्ञा न सम्भवति । "भम धम्मिअ" इत्यादौ वाच्यभूतभ्रमणविध्यतिरिक्तस्य तन्निषेधरूपतया प्रत्युत तद्विरुद्धस्यैवावभासमानस्य व्यङ्ग्याभिमतस्यार्थस्यापह्नोतुमशक्यत्वादित्याशङ्कां निराकुर्वन् प्रतिज्ञातेऽर्थे हेतुमाह—**समयानपेक्षणेनेति**[8] ॥ इति कृत्वेत्यस्माद्धेतोरिति यावत् । स्वविषयसमयविरहितव्यङ्ग्यार्थप्रतीतेस्तत्सव्यपेक्षबुद्धिजननैकनियतसामर्थ्यशब्दप्रमाणजन्यत्वासम्भवावधारणात् प्रमाणान्तरनिबन्धनैवेयं प्रतीतिः न शब्दनिबन्धनेत्यकामैरेव तावदभ्युपगन्तव्यमेतदिति मानान्तरजन्यत्वाङ्गीकारिणामयमाक्षेप इति भावः ॥

ननु प्रसिद्धप्रमाणान्तरसामग्र्यनुपकल्पं त्रिधा भिनत्ति—**तत्रेति** ॥ के ते प्रकारा इत्यपेक्षायामाह—**शब्दार्थेति** ॥ गुणालङ्कारशब्दौ द्वावपि शब्दार्थाभ्यां सम्बध्येते । गुणा माधुर्यादयः । तेषां शब्दार्थोभयसम्बन्धित्वमुपरिष्टात् स्पष्टयिष्यति । शब्दालङ्कारा अनुप्रासादयः । अर्थालङ्कारा उपमादयः । लोकशब्दो लौकिकवचनपरः । शास्त्रशब्दः शासनार्थवृत्तिः, वेदशास्त्रेतिहासपुराणादिपरः अतिरिक्तत्वे हेतुः ॥ **सुन्दरेति** ॥ गुणालङ्कारशृङ्गारितत्वनिबन्धनः शोभाविशेष उक्तः । अन्य इति गुणालङ्कारेभ्यः ॥ ननु सकलसहृदयहृदयसाक्षिकायाः शब्दार्थशोभाया अनपह्नवनीयत्वात् केनचिदत्र तद्धेतुना भवितव्यम् ; स तु यः सोऽस्माभिः व्यङ्ग्यार्थोऽङ्गीक्रियते, तत्कथं तन्निषेध इत्याशङ्क्य—परिकॢप्तौ प्रसिद्धगुणालङ्कारशब्दवाच्यत्वेनोभयवादिसिद्धशोभाहेतुभावेन गुणालङ्कारादिनैव[ङ्कारौ;तेनैव]शोभाविशेषशालित्वोपपत्तेर्हेत्वन्तरकल्प ना[न]वकाश इत्याह—**शब्दार्थगुणालङ्काराणामेवेति** ॥ गुणादिव्यतिरिक्तस्य शोभा-

१. क. ख. अभिधाक्षिप्तम्.
२. ख. 'शब्दानुगतार्थ-'
घ. 'अशब्दावगतार्थ-'
ङ. 'शब्दार्थ-'
३. घ. च.
४. ख. 'शक्यते'
५. क. ख. 'अतस्त्रय एवैते'
६. ग. 'प्रधानानि'
७. क. 'खकाव्यस्यानन्यशोभाहेतुः'
ङ. 'काव्यस्य शोभाहेतुः कश्चिदन्यो नास्ति'
८. 'समयानपे......र्थो प्रतिपादकः' इति कौमुद्यनुसारी लोचनपाठः इति भाति ।

लोचनम्

इत्येकः प्रकारः। यो[1] वा गणितः स शोभाकार्येव न भवतीति द्वितीयः प्रकारः[2]। अथ शोभाकारी भवति तर्ह्यस्मदुक्त एव गुणे वालङ्कारे वान्तर्भवति[3]; नामान्तरकरणे तु कियदिदं पाण्डित्यम्; अथापि[4] गुणेष्वलङ्कारेषु वा नान्तर्भावः[5], [6]किञ्चिद्विशेषलेशमाश्रित्य नामान्तरकरणम्[7], उपमाविच्छित्तिप्रकाराणामसंख्यत्वात्[8]; तथापि गुणालंकारव्यतिरिक्तत्वाभाव एव[9]; तावन्मा-

कौमुदी

हेतोः सिद्धौ तन्निषेधविरोधात्, असिद्धौ निषेधस्याशक्यत्वान्न तन्निषेध इत्याशङ्क्य स्वयमसिद्धस्यापि परप्रसिद्धिसिद्धतया निषेधाददोष इत्यभिप्रायेणाह--**योऽस्माभिर्न गणित इति**॥ भवतामभिमत इति चार्थात्सिध्यति। ननु "लब्धरूपे क्वचित् किंचित् तादृगेव निषिद्ध्यते" इत्युक्तनीत्या धर्मिस्वरूपासिद्ध्युपजीवनेन धर्मविशेषविषयतयैव निषेधस्यानुज्ञेयत्वात् व्यङ्ग्यस्वरूपसत्तानिषेधासंभव इत्याशङ्क्य द्वितीयं प्रकारमाह--**यो वेति**॥ शोभाकारितयैव हि तद्ध्वनिवादिनाभ्युपगततथाभावाभावे च न तदभीष्टसिद्धिरित्यर्थः। व्यङ्ग्यस्य शोभाकारित्वमपि स्वसंवेदसाक्षिकं कथमपह्नूयत इत्याशङ्क्य प्रकारान्तरमाह--**अथेति**॥ विमतं गुणालङ्कारान्यतरदेव भवितुमर्हति विशिष्टकाव्यशोभाकारित्वात् संप्रतिपन्नवदित्यर्थः। ननु तदन्तर्भावे सति तच्छब्दवाच्यतयैव प्रसिद्धिरपि स्यात्; अथ तदभावान्न तदन्तर्भाव इत्याशङ्क्य न्यायबलसिद्धे वस्त्वैक्ये शब्दभेदमात्रस्य वस्तुभेदहेतुत्वमतिप्रसङ्गहतमित्याह--**नामान्तरेति**॥ ननु काव्यजीवितत्वेन व्यङ्ग्यस्यास्माभिरभ्युपगमात् अतद्रूपगुणादिभेदसिद्धौ कथं नाममात्रकरणमेतत् इत्याशङ्क्य अभ्युपगम्यानन्तर्भावं गुणादिव्यतिरेकाभावमाह--**अथापीति**॥ अथेति प्रकृतार्थादर्थान्तरे; अथापीत्यभ्युपगमार्थः। **विशेषलेशमिति**॥ गुणेष्वलङ्कारेषु वान्यतरस्येति शेषः। विशेषः काव्यजीवितत्वादिरूपः। नामान्तरं व्यङ्ग्यमित्यादिकम्। तेषां विशेषवत्तामुपमावैचित्र्यप्रदर्शनमुखेन दर्शयति--**उपमेति**॥ अलङ्कारत्वासङ्ख्यत्वादिति पाठे पृथक्पृथगन्वयाद्यसंख्यालङ्कारत्वेनोपमाप्रकाराणामेव स्थितत्वादित्यर्थः॥ **तथापीति**॥ विशेषलेशाश्रयणेन नामान्तरकरणेऽपीत्यर्थः।

१. 'यो वा न गणितः' इत्यञ्जनानुसारी पाठः.
२. क. ख. घ. ङ. च. 'प्रकारः' नास्ति.
३. च. 'अन्तर्भाव इति'
४. घ. 'उक्तेषु गुणेषु'
५. क. ख. अन्तर्भावः',
६. क. ख, ग. 'तथापि किञ्चिद्विशेष-'
घ. 'तद्विशेष-'
७. क. ख. 'नामान्तरमात्रम्'
८. घ. '-णामलङ्कारत्वा-'
च. '-णामलङ्कारा-'
९. ग. 'एव' नास्ति.

ध्वन्यालोकः

**शब्दार्थशरीरं तावत्काव्यम्, तस्य शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव ।**

लोचनम्

त्रेण च किं कृतम्[1], अन्यस्यापि वैचित्र्यस्य शक्योत्प्रेक्षत्वात् ; चिरंतनैर्हि भरतमुनिप्रभृतिभिर्यमकोपमे शब्दार्थालंकारत्वेनेष्टे[2] तत्प्रपञ्चदिक्प्रदर्शनं त्वन्यैरलंकारकारैः[3] कृतम् ; तत्र यथा 'कर्मण्यण्' इत्यत्र कुम्भकाराद्युदाहरणं श्रुत्वा[4] स्वयं नगरकारादिशब्दा उत्प्रेक्ष्यन्ते, तावता क आत्मनि बहुमानः ? एवं प्रकृतेऽपीति तृतीयः प्रकारः । एवमेकस्त्रिधा विकल्पः अन्यौ च द्वौ इति पञ्च विकल्पा इति तात्पर्यार्थः । तानेव क्रमेणाह—**शब्दार्थशरीरं**

कौमुदी

धर्मिस्वरूपभेदे प्रत्यभिज्ञाप्रमाणप्रसिद्धे तन्निरूपणाधीननिरूपणरूपभेदमात्रमकिंचित्करमिति भावः । गुणादिव्यतिरेकाभावेऽपि विशिष्टवैचित्र्यान्तरोत्प्रेक्षामात्रेण चरितार्थतां मन्वानं प्रत्याह—**तन्मात्रेणेति** ॥ शक्योत्प्रेक्षत्वमेवोपपादयति—**चिरन्तनैर्हीति** ॥ यमकमेव शब्दालङ्कारः, उपमैवार्थालङ्कारः, इत्येव चिरन्तनानां स्थितिश्चेत् तर्ह्यन्येषामलङ्काराणां अनलङ्कारत्वप्रसक्तिरित्यत आह—**तत्प्रपञ्चेति** ॥ सोत्प्रासमुक्तमुपसंहरति—**तत्रेति** ॥ एतदुक्तं भवति—यद्यप्यस्मदुक्तरूपे गुणादौ व्यङ्ग्यस्य नान्तर्भावः तथाप्युपमाया अलङ्कारान्तराणां चानन्तप्रकारत्वात् तेषु कस्यचित्प्रकारस्य परिगण्यमानेषु अलङ्कारप्रकारेष्वविद्यमानं काव्यजीवितत्वादिरूपं कंचिद्विशेषमुपजीव्य व्यङ्ग्य इति नामान्तरं कृतमित्येव स्यात् । न च विशिष्टस्य तत्त्वान्तरत्वादेतावतैव चरितार्था वयमिति वचनीयम् ; विशेषलेशसमाश्रयणेऽपि प्रमाणतो धर्मिस्वरूपभेदविरहे सति, उपमादेः अपह्नुत्यादेरिवालङ्कारादेः, व्यङ्ग्याभिमतार्थस्यात्यन्तव्यतिरेकासिद्धेः, सिद्धौ वापह्नुत्यादेरलंकारत्वाभावप्रसक्तेः । अतः परिगणितालंकाराद्यनन्तर्भावेऽपि त्वदुक्तविशेषवत्तया कश्चिदपूर्वोऽलंकार एव व्यङ्ग्य इति विरचितनामान्तरोऽभ्युपगत इति स्यात् । न चेयत्येव भवतामप्युत्साह इति सिद्धमेवास्मदभिलषितमिति । उक्तविकल्पानां संकलनेन संख्यानपूर्वकमुपसंहरति—**एवमेक इति** ॥

इदानीमवान्तरतात्पर्यकथनार्थमुक्तमहातात्पर्यं ग्रन्थमवतारयति—**तानेवेति** ॥ य

१. क. ख. ङ. 'कृत्यम्'
२. घ. 'यमकोपमे एव शब्दार्थालंकृतित्वेनेष्टे'
३. क. '-प्रपञ्चनमन्यैः'
४. घ. च. '-दाहरणश्रुत्या'

लोचनम्

**तावदित्यादिना** ॥ तावद्ग्रहणे कस्याप्यत्र न[1] विप्रतिपत्तिरिति दर्शयति ॥ तत्र[2] शब्दार्थौ[3] तावन्न ध्वनिः[4] संज्ञामात्रे हि को गुणः । अथ शब्दार्थयोर्यत[5]श्चारुत्वं स ध्वनिः तथापि

कौमुदी

एव यादृशा एते विकल्पाः प्रदर्शितास्त एव तादृशा इह ग्रन्थे प्रतिपाद्यन्त इत्यर्थः ॥

वृत्तौ तावच्छब्दोऽयं संप्रतिपत्त्यर्थः न प्राथम्यार्थ इत्याह—**तावद्ग्रहणेनेति** ॥ **कस्यापीति** ॥ ध्वनिवादिनस्तद्ध्वंसवादिनश्चेत्यर्थः ॥ **अत्रेति** ॥ काव्यस्य शब्दार्थशरीरत्वरूपमर्थं विषयीकृत्येत्यर्थः । अत्र ध्वनिवादी वक्तव्यः; किं शब्दार्थावेव ध्वनिः, आहोस्वित् तद्व्यतिरिक्तस्तच्चारुत्वहेतुरिति । तत्राद्यमवद्ययति—**शब्दार्थाविति** ॥ शब्दार्थयोः शरीरत्वेन ध्वनिवादिभिरभ्युपगमाज्जीवितरूपव्यङ्ग्याभ्युपगमस्य स्वसिद्धान्तविरुद्धत्वान्न तयोरेव ध्वनित्वं संभवतीत्यर्थः। अथ ध्वनिसद्भावश्रद्धाजडतया ध्वनिवादिनः शब्दार्थयोरेव ध्वनिसंज्ञां विदध्युः तदा व्यर्थः प्रयासः, प्रत्युत परमपाण्डित्यमेवात्मनः प्रकटीकृतं स्यादित्याह—**संज्ञामात्र इति** ॥ कृते सतीति शेषः । **को गुण इति** किं प्रयोजनमिति यावत् । द्वितीयं पक्षमनुभाष्य दूषयति—**अथेत्यादिना** ॥ "तथापि गुणालंकारव्यतिरिक्तो न ध्वनिः कश्चित्" इत्युपरितनेनान्वयः । ननु शब्दार्थचारुत्वप्रतीतिलक्षणकार्यमुखेन तत्कारणतया समधिगम्यमानसद्भावस्य ध्वनेरसंभवः कथं शक्यावधारण इत्याशङ्क्य तत्कार्यस्य प्रसिद्धगुणादिकारणतयैवान्यथासिद्धेर्न तद्बलात्तदतिरिक्तध्वनिसद्भावाधिगम इत्युक्तम्—**गुणालंकारव्यतिरिक्त इति** ॥ ननु यथा गुणव्यतिरिक्ताश्चारुत्वहेतवोऽलंकारास्तद्व्यतिरिक्ताश्चारुत्वहेतवो गुणाश्च सद्भावमनुभवन्ति तथा तदुभयव्यतिरिक्तश्चारुत्वहेतुर्ध्वनिः किं न भवेदित्याशङ्क्य पृथक्पृथगेव गुणालंकारजनयितव्यचारुत्वविशेषान्तरानिरूपणान्न तद्धेतुतया तत्कल्पनोपपत्तिरित्यभिप्रायेण विभागपूर्वकं चारुत्वस्य गुणालंकारमात्रकार्यत्वमाह—**द्विविधमिति** ॥ एकरूपस्यैव स्वभावतश्चारुत्वस्य किंनिबन्धनं द्वैविध्यमित्यपेक्षायामुपाधिकृतं तदित्याशयेनाह—**स्वरूपमात्रेति** ॥ मात्रशब्देन संघटनाजनितरूपान्तरव्यवच्छेदः ॥ **संघटाश्रितामिति** ॥ विशिष्टसंघटनाटङ्कितशब्दार्थनिष्ठमित्यर्थः । कुत्र तर्ह्यलंकाराणां हेतुत्वं कुत्र वा

१. घ. 'न कस्याप्यतिविप्रति-'
ङ. 'न कस्याप्यत्र विप्र-'
च. 'कस्याप्यत्र विप्र-'
२. ग. 'तत्र' नास्ति.
३. क. ख. ग. ङ. च. 'शब्दार्थो'
४. क. ख. ग. 'न तावत् ध्वनिः'
५. क. ग. घ. 'यत' नास्ति.

ध्वन्यालोकः

अर्थगताश्चोपमादयः । संघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते । तदनतिरिक्त-

लोचनम्

द्विविधं चारुत्वम्—स्वरूपमात्रनिष्ठम्, संघटनाश्रितं च । तत्र शब्दानां स्वरूपमात्रकृतं चारुत्वं शब्दालंकारेभ्यः, संघटनाश्रितं तु शब्दगुणेभ्यः ; एवमर्थानां चारुत्वं स्वरूपमात्रनिष्ठमुपमादिभ्यः संघटनापर्यवसितं त्वर्थगुणेभ्य इति न गुणालंकारव्यतिरिक्तो ध्वनिः कश्चित् । **संघटनाधर्मा इति** । शब्दार्थयोरिति शेषः । यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वकारि न भवति, नित्यानित्यदोषा असाधुदुःश्रवादय इव । चारुत्वहेतुश्च ध्वनिः । तन्न

कौमुदी

गुणानामित्यभिप्रेत्याह—**तत्रेति** ॥ **स्वरूपमात्रकृतमिति** ॥ स्वरूपमात्रनिष्ठमित्यर्थः । शब्दालंकारा अनुप्रासादयः । **शब्दगुणेभ्य इति** ॥ यद्यपि "तमर्थमवलम्बन्ते" इति वक्ष्यमाणत्वान्मुख्यभूतरसात्मगता एव शौर्यादिस्थानीया माधुर्यप्रभृतयो गुणास्तथा(प्य)त्रोपचारपक्षकक्षीकारेण शब्दगुणा इत्युक्तम् । एवमर्थगुणा इत्यपि । इतिः हेतौ । यस्माद्गुणालंकारोभयजन्यचारुत्वविधाद्वयानन्तर्भूतचारुत्वविधान्तरविरहः, तस्मात् चारुत्वहेतोर्ध्वनेर्न गुणालंकारव्यतिरिक्ततया सद्भावः सेद्धुमर्हतीत्यर्थः । ननु अभ्यूहितमेवैतत्, न प्रमाणतः प्रतिपन्नमित्याशङ्क्य तत्र केवलव्यतिरेक्यनुमानं प्रमाणमाह—**यद्गुणेति** ॥ अत्र च "त्रीनुदाहरणान्तान् वा यद्वोदाहरणादिकान् । मीमांसकाः..." इत्युक्तिमनुसृत्य उदाहरणादिकावयवत्रयवत्तयैवानुमानवाक्यविरचना ग्रन्थकृता कृता, न्यायतन्त्रस्थित्यनुसारेण पुनरिह पञ्चावयवानुमानवाक्यविरचनापि स्वयमेव द्रष्टव्या । तद्यथा—"विवादाध्यासितो ध्वनिः न गुणालंकारव्यतिरिक्तो भवितुमर्हति, चारुत्वहेतुत्वात्, यद्यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वहेतुर्न भवति ; यथा—असाधुदुःश्रवादयः; चारुत्वहेतुश्च ध्वनिः, तस्मान्न गुणालंकारव्यतिरिक्त इति । असाधुत्वं व्याकरणनिरूपितसंस्काररहित्यम् । अस्य च शब्दरूपानुबन्धिदोषत्वादखिलरसचर्वणानिर्वृतिविघ्नकारित्वाच्च नित्यत्वम् । दुःश्रवत्वं कर्णदुःखजनकत्वम्, यथा—कार्तार्थ्यादिपदानाम् ।

१. ख. दुःश्रवा इव ।

लोचनम्

तद्व्यतिरिक्त इति व्यतिरेकि[1] हेतुः। ननु वृत्तयो रीतयश्च यथा गुणालंकारव्यतिरिक्ताश्चारुत्वहेतवश्च तथा ध्वनिरपि तद्व्यतिरिक्तश्च चारुत्वहेतुश्च भविष्यतीत्यसिद्धो व्यतिरेक इत्यनेना[2]भिप्रायेणाह—**तदनतिरिक्तवृत्तय इति**। नैव वृत्तिरीतीनां तद्व्यतिरिक्तत्वं सिद्धम्। तथा हि—अनुप्रासानामेव[3] दीप्तमसृणमध्यम[4]वर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्व-

कौमुदी

तस्य चानित्यत्वं शृङ्गारे वर्जनीयत्वस्य निरूपयिष्यमाणत्वात्। **हेतुरिति**। हेतोरवयवेषु प्रधानत्वात्तेनानुमानस्यैवात्र व्यपदेशो द्रष्टव्यः। **व्यतिरेकीति**। व्यतिरेकव्याप्तिरेव यस्य स व्यतिरेकी, केवलव्यतिरेकीति यावत्॥

ननु तदनतिरिक्तवृत्तय इति वृत्तीनां रीतीनां च तदनतिरिक्तत्वप्रदर्शनमनर्थकं, ध्वनेस्तदनतिरिक्तत्वस्यैवात्र प्रतिपिपादयिषितत्वादित्याशङ्क्य प्रागुक्तहेत्वसिद्धिशङ्कानिराकरणपरतया तदुपयोगं प्रदर्शयितुमाह—**ननु वृत्तय इति**॥ यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वकारि न भवतीत्यमुष्या व्यतिरेकव्याप्तेर्गुणादिव्यतिरिक्तत्वे सत्यपि चारुत्वहेतुतया संप्रतिपन्नासु वृत्तिषु रीतिषु च व्यभिचाराद्व्याप्यत्वासिद्ध एवायं चारुत्वहेतुत्वहेतुरित्यर्थः॥ **इत्यभिप्रायेणेति**॥ एवंरूपां शङ्कां हृदि कृत्वेति यावत्। अत्र वृत्तिग्रन्थे या उपनागरिकाद्या वृत्तयश्चिरन्तनैः प्रकाशिताः, याश्च वैदर्भीप्रभृतयो रीतयः, ता उभय्योऽपि तदनतिरिक्तवृत्तय एवेति वचनव्यक्तिप्रकारमभिसंधाय व्याप्तिभङ्गमुद्रावितमुद्धरति—**नैवेति**॥ वृत्त्यादीनां गुणादिव्यतिरिक्तत्वमेव न सिद्धं न प्रमाणगोचरः। तत्कुतो व्याप्त्यसिद्धिरिति भावः। कथं तदसिद्धिरिति शङ्कित्वोपपादयति—**तथा हीत्यादिना**॥ यथा गुणालंकारशब्दाभ्यां प्रत्येकमलंकारगुणव्यतिरिक्तरूपान्तरविशिष्टमोजआद्युपमादिलक्षणमर्थान्तरं चारुत्वहेतुरूपमभिधीयते, न तथा वृत्तिशब्देन गुणालंकारव्यतिरिक्तमर्थान्तरमभिधीयते; अपि तर्हि शब्दालंकारविशेषात्मकसमानव्यञ्जनविनिवेशनलक्षणानुप्रासंबन्धिन्यस्त्रिसंख्याका नागरिकोपनागरिकाग्राम्याख्या जातय एवाभिधीयन्ते। जातेश्च वस्तुतो जातिमदनतिरिक्तस्वलक्षण-

१. क. ख. व्यतिरेकी।
२. ग. 'अनेन'— नास्ति।
३. क. ख. अनुप्रासादीनामेव।
४. ग. -मध्यवर्ण-।

## लोचनम्

स्वरूपविवेचनाय वर्गत्रयसंपादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः, 'वर्तन्ते अनुप्रासभेदा आसु' इति। यदाह—"सरूपव्यञ्जनन्यासं[1] तिसृष्वेतासु वृत्तिषु। पृथक्-

## कौमुदी

त्वादनुप्रासाख्यशब्दालंकारविशेषान्तर्भूता एवैता वृत्तयः पर्यवसिताः, न तु तदतिरिक्तस्वरूपा इत्यर्थः ॥ **वृत्तय इत्युक्ताः** ॥ वृत्तिशब्देन चिरन्तनैरुक्ता व्यवहृता इत्यर्थः । किमर्थं पुनरेतत्त्रिसंख्यान्तरजात्यभिधानमुद्भटादिभिः कृतमित्यत उदितम्—**अनुप्रासादीनामेव वर्गत्रयसंपादानार्थमिति** ॥ य एव स्वरूपव्यञ्जनन्यासलक्षणका अनन्ता अनुप्रासविशेषाः सन्ति तेषां त्रैराश्यसंपादनमात्रार्थं तदभिधानमित्यर्थः । तदपि वा किमर्थमित्यत उक्तम्—**परुषत्वेति** ॥ अयं परुषरूपोऽनुप्रासराशिः, अयं ललितः, अयं मध्यमः—इत्येतस्य विशेषस्य विभागेन प्रदर्शनार्थमित्यर्थः । तदपि किमदृष्टाय, नेत्याह—**दीप्तमसृणमध्यमवर्णनीयोपयोगितयेति** ॥ यत्र रौद्रादिरसे व्यञ्जनीये तदौचित्यवशादेव विभावादि दीप्तं वर्णनीयं भवेत् तत्र परुषानुप्रासजातीय एवानुप्रासः सत्कविभिरुपनिबन्धनीयः; शृङ्गारादिरसे तु मसृणम्मधुरं विभावादि वर्णनीयम्; तत्र मसृणानुप्रास एव; हास्यादौ पुनस्तदुभयरहितत्वे मध्यमं वर्णनीयम्; तत्र मध्यमानुप्रासजातीयः—इति वर्णनीयविशेषोपयोगित्वेन विशिष्टानुप्रासोपादेयतासिद्ध्यर्थं तत्प्रदर्शनमित्यर्थः । जातिश्चेद्वृत्तिशब्दाभिधेया तत्कथं तत्र वृत्तिशब्दवृत्तिः, गोत्वादिप्रसिद्धजातिषु तदनुपलम्भादित्यत्राह —**वर्तन्त इति** ॥ भेदशब्दो विशेषार्थः ॥ **आस्विति** ॥ जातिष्वित्यर्थः । उक्तमर्थमुद्भटवचनोदाहरणेन प्रमाणयति—**यदाहेति** ॥ "सरूपव्यञ्जनन्यासम्" इत्यनेन सामान्यलक्षणमनुप्रासशब्दनिर्वचनं च दर्शितम्—'अनु पश्चात्—प्रासः प्रक्षेपः' इति 'पुनरभिधानं वर्णपदादेरनुप्रासः' इति । यदाहुः—"आवर्त्यमानो वर्णः पदं वा प्राक्तनवर्णनादशोभाहेतुरिति"। "वर्णसाम्यम्" इति च काव्यप्रकाशे। "प्रकृष्टो वर्णविन्यासो रसाद्यनुगतो हि यः। सोऽनुप्रासः" इति चान्ये । **तिसृष्वेतासु वृत्तिषु पृथक् पृथगिति** ॥ विभागपूर्वकं तद्विशेषप्रदर्शनम् । एतासु वृत्तिषु पृथक्-

१. ग. स्वरूपव्यञ्जनन्यासान्।

लोचनम्

पृथगनुप्रासमुशन्ति कवयस्तथा[1] ॥" इति । पृथक् पृथगिति । परुषानुप्रासा[2] नागरिका[3] ; मसृणानुप्रासा[4] उपनागरिका, ललितेनागरिकया[5] विदग्धया उपमितेति कृत्वा ; मध्यमं कोमलम्, अपरुषमित्यर्थः[6] ;

कौमुदी

पृथक् सरूपाणां व्यञ्जनानां न्यासमनुप्रासं कवय इच्छन्तीति योजना । औद्भटस्य वचनस्य कथितार्थप्रतिपादकत्वं पृथक् पृथगिति पदव्याख्यानमुखेन दर्शयति **परुषेति** ॥

ननु "वृत्तावुपनागरिकाद्याः" इति । काव्यप्रकाशे च—"माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते । ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ॥" इत्युपनागरिकायाः पूर्वमुपन्यस्तत्वान्मुख्यभूतशृङ्गाररसविषयत्वाच्च तस्या एव प्राधान्यात् 'अभ्यर्हितं पूर्वम्' इति न्यायादिहोपनागरिकायामेव प्रथमं वक्तव्यायां कथं नागरिकाया प्रथममभिधानमिति चेत् भट्टोद्भटवचनानुरोधादिति ब्रूमः । प्राधान्यं तु शृङ्गारवत् वीरादीनामप्यविशिष्टमेव, तदास्वादस्याप्यन्तरायवन्ध्यनीरन्ध्रविश्रान्तिरूपत्वेन सुखस्वलक्षणत्वात् । अतः प्राधान्यमप्यनैकान्तिकमेव । वीरस्य चोत्साहात्मनः समस्तधर्मादिपुरुषार्थबीजत्वेन विशेषतः प्राधान्यादभ्यर्हितन्यायोऽपि प्रत्युत नागरिकाया एवादौ वक्तव्यत्वमापादयेदित्यलम् ॥

परुषवर्णारब्धत्वात् परुषोऽनुप्रासविशेषो यस्यां वृत्तौ सा परुषानुप्रासा ; तस्या दीप्तवेषनागरिकाङ्गनासादृश्यान्नागरिकेति गौणीयं संज्ञा । मधुरवर्णारब्धत्वान्मसृणो मधुरोऽनुप्रासो यस्यां सा तथोक्ता ; सा च ललिता पारुष्यपरिपन्थिधुर्यमाधुर्यसहिता तत एव तत्संज्ञिता भवति । कथं तस्या उपनागरिकाशब्दवाच्यत्वम्, न हि पूर्ववद्गौणोऽयं प्रयोग इत्यत्राह—**नागरिकयेति** ॥ लालित्यमेव तत्साम्यमिति भावः । ननु उद्भटेन "शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया । ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥" इति लक्षिताया ग्राम्याया वृत्तेः कथं मध्यमत्वमत्रोक्तमित्याशङ्क्य पारुष्यमाधुर्यविहीनतया

१. क. ख. 'कवयस्तथा' नास्ति ।
२. क. ख. ग. ङ. 'परुषानुप्रासः' ।
३. ग. 'परुषा दीप्ता' इति वर्तते; अत्र 'नागरिकेति' नास्ति ।
४. ग. 'मसृणानुप्रासः' । क. ख. ङ. 'मसृणानुप्रासा' इति नास्ति ।
५. क. ख. 'ललिता नागरिकया' ।
६. घ. 'मध्यमकोमलपरुषमित्यर्थः' ।

## लोचनम्

अत एव वैदग्ध्यविहीनस्वभावसुकुमारापरुषग्राम्यवनितासादृश्यादियं वृत्तिर्ग्राम्येति तत्र तृतीयः कोमलानुप्रासः—इति वृत्तयोऽनुप्रासजातय एव। न चेह वैशेषिकवद्वृत्तिर्विवक्षिता, येन जातौ जातिमतो वर्तनं न स्यात्; तदनुग्रह एव हि तत्र वर्तमानत्वम्।

## कौमुदी

तदुभयताटस्थ्यमिह मध्यमत्वं विवक्षितमित्याह—**मध्यममिति**॥ कोमलशब्दोऽयं मधुरपर्यायः; तेनोद्भटवचनेन स्ववचनेन च विरोधो नाशङ्कनीयः, कोमलाख्ययेति च वदता रूढत्वमस्य नाम्न उत्सूत्रितम्; अत एव कोमलानुप्रास इति वृत्त्या निर्देशः। कथं पुनरस्या ग्राम्येति नामान्तरं कृतमुद्भटादिभिरित्यत्राह--**अत एवेति**॥ पारुष्यमाधुर्यराहित्यादेव हेतोरित्यर्थः; वैदग्ध्यविहीनत्वादेव स्वभावतः सुकुमारया माधुर्यरहितया अपरुषया अनुल्बणस्वभावया ग्राम्यवनितया सादृश्यादियं ग्राम्येति विग्रहः। एवं मध्यमग्राम्यशब्दार्थोक्तिमुखेन ग्राम्यवृत्तेः स्वरूपमभिधाय तदुपजीवनेन तद्गतानुप्रासस्वरूपमाह—**इति तत्रेति**। यस्मात्पारुष्यमाधुर्यरहितेयं वृत्तिः तस्मात् तत्र तस्यां वृत्तौ योऽनुप्रासः स कोमलसंज्ञः पूर्वद्वयापेक्षया तृतीयश्च भवति इति योजना। कोमलानुप्रासा ग्राम्येति यावत्॥ उपसंहरति—**वृत्तय इति**॥ नन्वत्र वर्तन्तेऽनुप्रासभेदाः आस्विति वृत्तिशब्दनिर्वचनेन जातिमतो जातौ वर्तमानत्वमुक्तम्। न पुनरेतत् "नित्यमेकमनेकवृत्ति सामान्यम्" इति सामान्यशब्दिताया जातेः सजातीयविजातीयव्यावर्तकधर्मवचनलक्षणं लक्षणमाचक्षाणेषु कणभक्षपक्षपरिरक्षणकलितकक्षेषु परीक्षकाग्रेसरेषु जाग्रत्सु शक्यप्रतिज्ञमित्याशङ्क्य तदविरुद्धं तद्वर्तनस्वरूपं प्रदर्शयति—**न चेहेति**॥ यथा वैशेषिकाणां जातेः सामान्यरूपाया जातिमति व्यक्तिरूपे वर्तनं नाम समवायसंबन्धेन तदाश्रितत्वलक्षणमभिमतम्, न तथा अस्माकं जातौ जातिमतो वर्तनमभिप्रेतम्, येन तद्विरोधः स्यात्। अपि तु तदनुगृहीतस्वकार्यनिर्वोढृतयावस्थानलक्षणम्; तदनुग्रहश्च नाम एकराशिभावेन समुचितवर्णनीयविषयप्रवृत्तिद्वारेण विशिष्टरसाभिव्यञ्जनसामर्थ्य-

१. क. ख. ग. च. '-वा सुकुमारा अपरुषा-'।
२. ग. 'वृत्तिर्ग्राम्या कोमला च'।
३. क. ख. ग. घ. 'इति च'।
४. ग. 'कोमलपरुषानुप्रासः'।
५. घ. 'इह' नास्ति।
६. ग. 'जातिमति'।
७. ख. 'वर्तमान(त्व)म्'।

## लोचनम्

यदाह[1] कश्चित् —"लोकोत्तरे हि गाम्भीर्ये वर्तन्ते पृथिवीभुजः" इति ।

तस्माद्वृत्तयोऽनुप्रासेभ्यो[2]ऽनतिरिक्तवृत्तयः[3] नाभ्यधिकव्यापाराः । अत एव व्यापारभेदाभावान्न पृथगभिधेयस्वरूपा[4] अपीति वृत्तिशब्दस्य व्यापारवाचिनोऽभिप्रायः । अनतिरिक्तत्वादेव

## कौमुदी

समासादनस्वरूपः इति जातिमति जातेर्वर्तने वास्तवे स्थितेऽपि तदनुग्राह्यत्वगुणयोगादौपचारिकोऽयं वृत्तिव्यपदेशस्तज्जनितातिशयविशेषशालित्वप्रतिपत्तिफल इति । नोक्तमात्रनिबन्धनम् च तद्वृत्तित्वाभिधानम् ; दृष्टचरत्वान्नापलापार्हमित्याशयेनाह—**यदाहेति** ॥ यद्यपि गाम्भीर्यात्मगुणो गुणस्वभावादेव गुण्येकाश्रयतया पृथिवीभुक्ष्वेव वर्तते, तथापि तदनुगृहीतत्वादिरूपाभिप्रायेणाभिधीयमानं गाम्भीर्ये पृथिवीभुजां वर्तनं नानुपपत्तिपदवीमध्यासीत ; प्रत्युत महीभुजामुत्तानीभवदनन्यसुलभगभीरिमगुणशालितया समुचितसकलसमीहितकार्यसर्वस्वनिर्वहणधुरीणत्वं सातिशयचमत्कारस्थानं सचेतसामतिस्फुटमवभासत इति भावः ॥

परमप्रस्तुतमुपसंहरति—**तस्मादिति** ॥ अनतिरिक्ता इति वक्तव्येऽनतिरिक्तवृत्तय वचनमतिरिक्तमित्यतस्तदर्थमाह—**नाभ्यधिकव्यापारा इति** ॥ व्यतिरिक्तपदव्याख्या अभ्यधिकेति । वृत्तिपदस्य व्याख्या व्यापारा इति । अतिरिक्तशब्दोऽयं न भिन्नवचनः, वृत्तिशब्दोऽपि न वर्तनवचनोऽत्र ग्राह्य इति भावः । तथापि किमर्थं वृत्तिपदग्रहणं, वृत्तीनामनुप्रासान्तर्भावस्यैवात्र वक्तव्यत्वात् तस्य च तदतिरिक्तत्वप्रतिषेधमात्रलभ्यत्वादित्यत्राह—**अत एवेति** ॥ व्यापाराधिक्याभावादेवेत्यर्थः । अनुप्रासस्य हि रसाभिव्यञ्जनविषयो यो व्यापारः तदधिकव्यापारसद्भावे वृत्तीनामप्यलंकारादिवत् पृथक्पृथक् स्वरूपमभिधेयं स्यात्, तत्स्वरूपासिद्धौ तद्व्यङ्ग्यरसानभिव्यक्तिप्रसङ्गात्; न पुनरासामलंकारादिवत् व्यापारविशेषशालित्वमस्ति, तेन न तेषां पृथगभिधेयं स्वरूपं निरूपयितुं शक्यमिति—अमुमर्थं प्रदर्शयितुं तदनतिरिक्ता इति वक्तव्येऽपि तदनतिरिक्तवृत्तय इति व्यापारार्थो वृत्तिशब्दोऽत्र वृत्तिकारेणोपात्त इत्यर्थः । **न पृथगनुमेयस्वरूपा इति** पाठे तु वृत्तीनामनुप्रासादिभ्यः पृथग्भूतं स्वरूपं नानुमातुं शक्यम् ; अत एवाभिधातुमपि (न) शक्यम् ; अभ्यधिकव्यापाराभावे लिङ्गाभावादनुमान-

१. क. ख. ग. घ.—'यथाह' ।
२. क. ख. घ. च. 'अनुप्रासादिभ्यः' ।
३. क. च. 'न व्यतिरिक्तः' ।
४. क. ख. घ. च. '-गनुमेय-' ।

ध्वन्यालोकः

वृत्तयोऽपि याः कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम्,

लोचनम्

वृत्तिव्यवहारो भामहादिभिर्न[1] कृतः । उद्भटादिभिः प्रयुक्तेऽपि तस्मिन्नार्थः कश्चिदधिको हृदयपथमवतीर्ण इत्यभिप्रायेणाह—**गताः[2] श्रवणगोचरमिति** । **रीतयश्चेति** । तदनतिरिक्तवृत्तयोऽपि गताः श्रवणगोचरमिति संबन्धः[3] । तच्छब्देनात्र माधुर्यादयो गुणाः ।

कौमुदी

स्यानुत्थानादित्यर्थः । चिरन्तनलक्षणकारव्यवहारयोग्यत्वे सति तद्व्यवहारानुपलब्धिप्रमाणबलादप्यनुप्रासादिरूपातिरिक्तवृत्त्यभावनिश्चय इत्याह—**अनतिरिक्तेति** ॥ भामहादिभिस्तद्व्यवहारस्याकृतत्वेऽप्युद्भटादिभिस्तस्य कृतत्वादलंकारादिव्यतिरिक्तत्वं वृत्तीनामिति व्यवहारयोग्यत्वे सति व्यवहारानुपलब्धिरसिद्धेत्याशङ्क्य अर्थरहितव्यवहारस्य वस्तुसद्भावाभ्युपगमप्रयोजकत्वाभावादनुपलब्धिस्तदवस्थेत्याशयेनाह—**उद्भटादिभिरिति** ॥ **गताः श्रवणगोचरमिति** ॥ वृत्तिग्रन्थे श्रवणगोचरत्ववचनमर्थस्य हृदयपथावतारपरिसंख्यानपरमिति दर्शयन्नवतारयति—**इत्यभिप्रायेणाहेति** ॥ रीतयश्चेत्यत्र चशब्दः पूर्ववाक्यस्थविधेयपदानुषञ्जनार्थ इत्याह—**तदनतिरिक्तेति** ॥ पूर्वत्र तच्छब्दस्यानुप्रासादिपरामर्शकतया व्याख्यातत्वादिहापि तत्परामर्शकताप्रतीतिर्मा भूत् ; औचित्यात् गुणपरामर्शकतैव प्रतीयतामित्याह—**तच्छब्देनेति** । परामृश्यन्ते इति शेषः ॥

कथं गुणशब्दाभिधेयानामेव सतां माधुर्यादीनां रीतिशब्दवाच्यत्वम् ? हन्त तर्हि प्रवृत्तिनिमित्तभेदविरहे गुणरीतिशब्दयोः 'हस्तः करः' इत्यादिवत्पर्यायत्वापत्तिरित्याशङ्क्य समुदायिनामेषां प्रत्येकं रीतिशब्दवाच्यत्वाभावेऽपि विशिष्टसङ्घातधर्मवत्तया तेषामेव तथाभावः संभवत्येव, धरणीरुहशब्दवाच्यनामेव धवखदिरादीनां प्रत्येकं वनशब्दवाच्यत्वाभावेऽपि समुचितैकोपाधिपरिग्रहप्रतिपन्नैकसङ्घातविनिवेशानां तेषामेव तच्छब्दाभिधेयत्वदर्शनादिति नोक्त-

१. घ. च. 'न भामहादिभिः कृतः'।
२. घ. च. 'गताश्च'।
३. क. ख. सम्बन्धः इत्यनन्तरम् 'तद्व्यतिरिक्त' इत्यधिकं दृश्यते।

## लोचनम्

तेषां च समुचितवृत्त्यर्पणे[1] यदन्योन्यमेलनक्षमत्वेन पानक इव गुडमरिचादिरसानां संघातरूपतागमनं[2] दीप्तललितमध्यमवर्णनीयविषयं गौडीयवैदर्भपाञ्चालदेशहेवाकप्राचुर्यदृशा[3] तदेव त्रिविधं रीतिरित्युक्तम्। जातिर्जातिमतो नान्या समुदायश्च समुदायिनो[4] नान्य इति वृत्तिरीतयो न गुणालंकारव्यतिरिक्ता इति स्थित एवासौ व्यतिरेकी हेतुः। तदाह—

## कौमुदी

दोष इत्याह—**तेषां चेति**॥ चशब्दः तुशब्दस्यार्थे। तेषां गुणानां समुचितवृत्त्यर्पणेऽन्योन्यमेलनक्षमत्वेन यत्सङ्घातरूपतागमनं तदेव रीतिरित्युक्तम् वामनादिभिरित्यन्वयः। समुचितत्वं वृत्तेरभिव्यञ्जनीयरसापेक्षम्। रसाभिव्यञ्जनव्यापारवती विशिष्टा वर्णरचना वृत्तिः; तस्यां दीप्तादिवर्ज(र्ण)नीयौचित्यवत्यां यद्गुणानामर्पणं तस्मिन्निति विग्रहः। सङ्घातः समूहः तद्रूपतया गमनं प्राप्तिः असंहततया पृथक्पृथक् प्रातिस्विकेन रूपेणावस्थितानामेकस्मिन् विषये समूहीभवनेन रूपान्तरापत्तिः; तत्र हेतुः **अन्योन्यमेलनक्षमत्वेनेति**॥परस्परसंश्लेषयोग्यत्वात् सङ्घातरूपत्वापत्तौ दृष्टान्तमाह—**पानक इति**॥ गुडादिद्रव्यभेदविरचितो दाहादिनिवारकः कश्चित्पेयद्रव्यविशेषः पानकम्। तथापि कथमस्य त्रैविध्यम्, सङ्घातरूपतयैकत्वादित्यत उक्तम् —**दीप्तेति**॥ वर्णनीयविभावादित्रैविध्यनिबन्धनं त्रैविध्यमस्येत्यर्थः। कथं पुनस्तत्र वैदर्भ्यादिशब्दप्रयोग इत्यत उक्तम्—**गौडेति**॥ गौडादिशब्दस्तद्देशजातक(वि)विषयः; हेवाकः स्वाच्छन्द्यम्; तथाविधस्वाच्छन्द्यस्यान्यदेशकविष्वपि व्यक्तमुपलभ्यमानत्वात्कथं तच्छब्दप्रयोग इति शङ्कां संक्षालयितुं प्राचुर्यग्रहणम्॥ **प्राचुर्यदृशेति**। प्राचुर्यस्य दर्शनाद्धेतोरित्यन्वयः॥ तदाह वामनः—"रीतिरात्मा काव्यस्य, विशिष्टा पदरचना रीतिः, विशेषो गुणात्मा, सा त्रेधा, वैदर्भी गौडीया पाञ्चाली च। वैदर्भादिषु दृष्टत्वात्तत्समाख्या। समग्रगुणा वैदर्भी। ओजःकान्तिमती गौडीया। माधुर्यसौकुमार्योपपन्ना पाञ्चाली" इति। भवतु नामैवम्। वृत्त्यनुप्रासानां जातिजातिमद्भावः गुणरीतीनां वा समुदायसमुदायिभावः, ततः किमित्यत आह— **जातिरिति**॥अन्यत्वे सामानाधिकरण्यप्रतीत्यनुपपत्तेः, व्यक्तिग्रहमन्तरेणापि ग्रहापत्तेः,'इह गवि गोत्वम्' इत्याधाराधेयभावप्रतीतिप्रसक्तेः अनन्यत्वमवसीयते। न चानन्यत्वे पर्यायत्वापत्तिः।

१. क. ख. 'समुचितचित्तवृत्त्यर्पणे'।
२. ख. '—गमनं च दीप्त—'।
३. ग. 'वैदर्भीपाञ्चालदेशपाकप्राचुर्यः'।
४. क. ख. घ. 'समुदायिभ्यः'।

ध्वन्यालोकः

रीतयश्च वैदर्भीप्रभृतयः । तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति ॥

लोचनम्

—कोऽयं ध्वनिरिति ॥ नैष चारुत्वस्थानम्, शब्दार्थरूपत्वा[1]भावात्; नापि चारुत्वहेतुः, गुणालंकारव्यतिरिक्तत्वात्; ते[2]नाखण्डबुद्धिसमास्वाद्य[3]मपि काव्यमपोद्धारबुद्ध्या [4]यदि विभज्यते [5]तथाप्यत्र ध्वनिशब्दवाच्यो न कश्चिदतिरिक्तोऽ[6]र्थो लभ्यत इति

कौमुदी

व्यक्त्याद्युत्पत्तिविनाशयोरुत्पत्तिविनाशाद्यापत्तेश्चाभेदसहिष्णोर्भेदस्याभ्युपगमादात्यन्तिकभेदानभ्युपगमान्न दोष इत्यर्थः । फलितमाह—इति वृत्तिरीतय इति ॥ स्थित एवेति ॥ स्थूणानिखननन्यायेन प्रतिष्ठापनादित्यर्थः । किंशब्दस्य प्रागुक्तसर्वनिषेधार्थत्वकथनेन क्षेपार्थत्वं स्फुटीकरोति—नैष इति ॥ एष इत्यवज्ञासूचको निर्देशः । तिष्ठत्यस्मिन्निति स्थानमाधारः ॥ व्यतिरिक्तत्वादिति ॥ ध्वनिवादिभिस्तथाभावेनाभ्युपगमादित्यर्थः । इतिशब्दस्यानन्तरं किंशब्देनाहेत्युपस्कारः । ननु अविवेचकजनदुरधिगमदेहेन्द्रियसङ्घातानुप्राणकचेतनवद्गुणालंकारसुन्दरशब्दार्थमयशरीरानुप्राणकतया ध्वनिशब्दवाच्यस्य वस्तुनः सकलसहृदयजनमनोमणिमुकुरतलविशदतरावभासमानस्योक्तविकल्पपांसुभिरपलोपेऽतिप्रसङ्ग इत्याशङ्क्याह—तेनेति ॥ पूर्वोक्तध्वन्यभावहेतुपरामर्शः । द्विविधा काव्यार्थसमुल्लेखिनी धीः—आस्वादमयी, युक्तितस्तत्त्वानुसन्धानरूपा च । तत्रास्वादमय्यां धियि तावद्यद्यपि तत्सद्भावासद्भावान्यतरानवगाहितया तदसत्त्वं न चकास्ति, तथापि तद्भीतः प्रतिनिवृत्य तत्सतत्त्वावधारणोद्देशेन युक्तितस्तद्विभागोल्लेखिन्यां कस्यांचिद्बुद्धौ प्रवर्तितायां प्रसिद्धतरगुणादिव्यतिरिक्तध्वनिशब्दवेद्यं वस्तु किञ्चन कुशाग्रीयचेतसापि सचेतसा समासादयितुमशक्यमिति प्रमाणपञ्चकातिरिक्तप्रमाणगोचरसहोदरतामसौ नातिवर्तत इत्यर्थः ॥ अपोद्धारबुद्धिः यौक्तिकी बुद्धिः; तेनेत्यस्य लभ्यत इत्यनेन संबन्धः । वृत्तौ नामशब्देनायमर्थः संगृहीत इति तदानर्थक्यशङ्का न कार्येत्याह—इति

१. क. ख. घ. ङ. 'स्वरूपत्वा-' । ग. 'स्वरूपाभावात्' ।
२. घ. ङ. च. 'इति तेन' ।
३. च. 'समासाद्यमपि' ।
४. ख. 'यदि' नास्ति ।
५. क. ख. ग. 'तत्रापि' ।
६. ग. 'अर्थः' नास्ति

ध्वन्यालोकः

अन्ये ब्रूयुः—नास्त्येव ध्वनिः, प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारस्य

लोचनम्

नामशब्देनाह ॥

ननु मा भूदसौ शब्दार्थस्वभावः, मा च भूच्चारुत्वहेतुः[1]; तेन[2] गुणालंकारव्यतिरिक्तोऽसौ[3] स्यादित्याशङ्क्य द्वितीयमभाववादप्रकारमाह—अन्य इति ॥ भवत्वेवम्, तथापि नास्त्येव ध्वनिर्यादृशस्त्वया लिलक्षयिषितः[4]। काव्यस्य ह्यसौ[5] कश्चिद्वक्तव्यः; न चासौ गीतनृत्तवाद्यादिस्थानीयः[6] काव्यस्य[7] कश्चित्; कवनीयं काव्यम्, तस्य भावः[8] काव्यत्वम्; न च नृत्तगीतादि[9]

कौमुदी

नामशब्देनाहेति ॥

उक्तप्रकारेणैव ध्वनेरभावे सिद्धे किमर्थोऽयं पुनस्तदभावसाधकतया पक्षान्तरोपन्यास इत्याशङ्क्य—चारुत्वहेतुत्वविशिष्टध्वन्यभाव एवेयता सिद्धः, न तु स्वरूपेण तदभाव इति तत्सिद्ध्यै पक्षान्तरोपक्षेप इत्याशयेन आशङ्कापूर्वकमवतारयति—नन्विति ॥ तेनेति ॥ तथापीत्यर्थः ॥ स्यादिति ॥ अस्तीति संभावनायोग्य इत्यर्थः । गुणादिव्यतिरिक्तस्य चारुत्वहेतुत्वरूपधर्ममात्राभावापादकत्वात् प्रतिषेधास्पर्शिध्वनिस्वरूपधर्मिसिद्धिमात्रेणाप्यस्मन्मनोरथः सेत्स्यतीत्यर्थः । अथ वा चारुत्वहेतुत्वाभावादेव हेतोरित्यर्थः; चारुत्वहेतुत्वाद्धि गुणाद्यन्तर्भाव आपादितः; तदनङ्गीकारे तु तद्व्यतिरिक्तध्वनिसद्भावः संभावनार्ह एवेति सर्वथा तदभावो न शक्याभ्युपगम इत्यर्थः । धर्मिस्वरूपसिद्धिमुक्तामुररीकरोति—भवत्वेवमिति ॥ तर्हि जितमस्माभिरित्यत्राह—तथापीति ॥ ननूक्तमेव तदस्तित्वमिति तत्राह—यादृशः; इति ॥ अत्र तादृश इत्युपस्कारः न ध्वनेः स्वरूपतो लक्षणं भवद्भिर्विवक्षितम्, किं तु काव्यसम्बन्धित्वेन; न चास्य काव्यसंबन्धित्वमित्यर्थः । एतदुपपादयति—काव्यस्य हीति ॥ हिर्हेतौ । समुदितस्य काव्यस्य समुदायि-

१. घ. ङ. च 'भूत्तचारुत्व-' ।
२. क. ख. 'येन' ।
३. क. ख. 'न स्यात्' ।
४. क. ख. 'लिलक्षयिषतः' ।
५. घ. ङ. च. 'न कश्चित्-' ।
६. क. ख. 'गीतनृत्तहास्यादि-' । घ. च. 'नृत्तगीतवाद्यादि-' । ङ. 'नृत्तगीतादि-' ।
७. क. ख. 'काव्यस्य च' ।
८. च. 'भावश्च' ।
९. म. ङ. 'नृत्तादि' ।

## लोचनम्

कवनीयमित्युच्यते ॥ **प्रसिद्धेति** ॥ प्रसिद्धं प्रस्थानं शब्दार्थौ तद्गुणालङ्काराश्चेति[1] । प्रतिष्ठन्ते परम्परया व्यवहरन्ति[2] येन मार्गेण तत्प्रस्थानम् ॥ **काव्यप्रकारस्येति** ॥ काव्यप्रकारत्वेन हि[3] तव[4] स मार्गोऽभिप्रेतः, 'काव्यस्यात्मा' इत्युक्तत्वात् । ननु कस्मात्तत्काव्यं न

## कौमुदी

रूपत्वेन सम्बन्धितया ह्यसौ काव्यलक्षणकाराग्रेसरमानिना भवताभ्युपेयः । न च काव्यत्वेन प्रसिद्धेभ्यो गुणादिभ्यो व्यतिरेके सति केनचित्प्रकारेण काव्यसंबन्धित्वमस्य शतांशेनापि शक्योपपादं नृत्तगीतादिवत् । तदयं प्रयोगः—विवादाध्यासितो ध्वनिर्न काव्यशब्दगोचरो भवितुमर्हति, तद्वाच्यगुणादिव्यतिरिक्तत्वात्, नृत्तगीतादिवत्; न च साध्यविकलो दृष्टान्तः, तेषामकवनीयत्वेन काव्यत्वाभावस्य प्रसिद्धत्वात् ॥ ननु वृत्तौ प्रसिद्धप्रस्थानव्यतिरिक्तत्वमेव ध्वनेरुक्तम्, न तु गुणादिव्यतिरिक्तत्वम्, अतः कथं तस्य हेतूकरणमित्याशङ्क्य व्याचष्टे—**प्रसिद्धमित्यादिना** ॥ इतिः प्रकारे, वृत्तयो रीतयश्चेत्यर्थः । कथमेषां प्रस्थानशब्दवाच्यत्वमिति तदाह—**प्रतिष्ठन्त इति** ॥ गमनव्यापारार्थवृत्तिरपि प्रपूर्वोऽयं तिष्ठतिः इह सादृश्यादौचित्याद्वा यथायोगमनादिप्रवर्तमानकाव्यगोचरकविसहृदयपरम्पराव्यापारविशेषविषयोऽवगन्तव्यः ; तद्गोचरत्वेन तद्धेतुत्वान्मार्गत्वमापाद्य च हेतुविशेषकरणार्थतया शब्दवृत्तिर्गमयितव्येति भावः । ध्वन्यभाववादिनो ध्वनेः काव्यप्रकारत्वोक्तिर्व्याहतेत्याशङ्क्य परप्रसिद्ध्युपजीविनी तदुक्तिरित्याह—**काव्यप्रकारत्वेन हीति** ॥ ननु गुणाद्यतिरिक्तत्वं न काव्यत्वानधिकरणत्वे हेतुः, अपि तु काव्यलक्षणराहित्यम्; न च तत् ध्वनेः संभावयितुं शक्यमित्यप्रयोजको हेतुरिति शङ्कते—**ननु कस्मादिति** ॥ सत्यम् । न गुणाद्यतिरिक्तत्वमात्रमकाव्यरूपत्वे हेतूकृतम्, किं तु काव्यलक्षणराहित्यमेव ; तत्तु परमार्थतो गुणादेरेवेत्यमुया वस्तुस्थित्या तदतिरिक्तत्वादकाव्यत्वमापादितमिति काव्यलक्षणराहित्यस्य साधनव्यापकत्वादनुपाधित्वमिति नाप्रयोजकत्वमिति परिहाराभिप्रायः । मार्गशब्दग्रहणमुभय-

१. घ. 'गुणा अलङ्काराश्चेति' ।
२. क, ख, ग. 'विहरन्ति' ।
३. 'हि' कौमुदीपाठमनुसृत्य निवेशितः ।
४. घ. ङ, च. 'स तव' ।

ध्वन्यालोकः

काव्यत्वहानेः। सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम् ; न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्संभवति; न च तत्समयान्तःपातिनः सहृदयान् कांश्चित् परिकल्प्य

लोचनम्

भवतीत्याह—**सहृदयेति** ॥ **मार्गस्येति** ॥ नृत्तगीताक्षिनिकोचादिप्रायस्येत्यर्थः[1] ॥ **तदिति** ॥ सहृदयेत्यादिकाव्यलक्षणमित्यर्थः। ननु ये तादृशमपूर्वं काव्यरूपतया जानन्ति त एव सहृदयाः। तदभिमतत्वं च नाम काव्यलक्षणमुक्तप्रस्थानातिरेकिण एव भविष्यतीत्याशङ्क्याह—**न चेति** ॥ यथा हि[2] खड्गलक्षणं करोमीत्युक्त्वा आतानवितानात्मा[3] प्रावृिय-

कौमुदी

वादिसंप्रतिपन्नवस्तुप्रदर्शनार्थमित्याशयेनाह—**नृत्तगीतेति** ॥ आदिशब्देनाक्षिसम्बन्धिनोऽन्ये विकारा गृह्यन्ते। प्रायशब्दस्तुल्यार्थः। न च तत्समयान्तःपातिन इति वृत्तिग्रन्थ एक एव शङ्कोत्तरात्मकः। तत्र शङ्काभागं विवृणोति—**ननु य इति** ॥ तादृशं ध्वनिरूपं वस्तु, अपूर्वं पूर्वमनुन्मीलितम्; इयता तत्समयान्तःपातिनः इति व्याख्यातम्। तत्समयो ध्वनिसमयः; ध्वनिः काव्यस्यात्मेति प्रतितन्त्रसिद्धान्तरूपः सङ्केतः; तत्प्रणेतृत्वं तदन्तःपातित्वम् ॥ प्रसिद्धयेति—प्रकृष्टा सिद्धिर्ज्ञप्तिः न्यायमूलोऽभ्युपगमपर्यवसायी निश्चलोऽध्यवसायः, न व्यपदेशमात्रमित्युक्तम्, तद्व्याचष्टे—**तदभिमतत्वं चेति** ॥ **नामेति** ॥ संभावनायां प्राकाश्ये वा। सहृदयाभिमतत्वस्य काव्यलक्षणत्वं भवतामप्यनुमतमेव; केवलं तत्तादृशसहृदयधौरेयसद्भावसाधनेऽस्माकं प्रयास इत्यर्थः। एवकारोऽप्यर्थे ॥ **आशङ्क्येति** ॥ ध्वनिवादिशङ्कामेकग्रन्थेनानुभाष्य परिहारमाहेत्यर्थः ॥ मा भून्नाम निखिलविद्वन्मनोग्राहित्वम्; उक्तलक्षणसहृदयाभिमतत्वमात्रेण चरितार्थाः सुखमास्महे वयमित्याशङ्क्य स्वप्रयासमात्रसिद्धस्यार्थस्य व्यवहारं प्रत्यप्रयोजकत्वं दृष्टान्तोपक्षेपपूर्वकं प्रकटयति—**यथा हीति** ॥ लक्षणशब्देनात्र तदभिधानमुपचाराद्गृह्यते, इतरथा तदर्थविषयत्वानुपपत्तेः। खड्गस्य लक्ष्यत्वेन निर्देशात् लक्षणस्यापि तदसाधारणधर्मरूपस्यैव वक्तुमुचितत्वात् तदत्यन्तविलक्षणपटस्वरूपनियतलक्षणाभिधानस्य प्रतिज्ञा व्याहताक्षरत्वात् न केवलं वस्तुसतत्त्व-

१. क. ख. 'नृत्तगीताद्यक्षिनिकोचनादि--' ग. 'नृत्तगीतादिकामिनीकोपादि-'। ङ. च. नृत्तगीताक्षिनिकोचाभि-'।

२. क. ख. 'हि' नास्ति।

३. 'आयामवितानात्मा' इत्यञ्जनोद्धृतः पाठः।

ध्वन्यालोकः

तत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते ॥

लोचनम्

मा[1]णस्वरूपः सकलदेहाच्छादकः सुकुमारश्चित्रतन्तुविरचित[2]ः संवर्तनविवर्तनसहिष्णुरच्छेदकः [3]सुच्छेद उत्कृष्टः खड्ग इति ब्रुवाणः, परैः पटः खल्वेवंविधो भवति न खड्ग इत्ययु[4]क्ततया पर्यनुयुज्यमान एवं ब्रूयात्—ईदृश एव खड्गो ममाभिमत[5] इति, तादृगेवैतत् । प्रसिद्धं हि लक्ष्यं भवति न [6]कल्पितमिति भावः । तदाह—**सकलविद्वदिति** ॥ विद्वांसोऽपि[7] तत्समयज्ञा [8]एव भविष्यन्तीति [9]आशङ्कां सकलशब्देन निराकरोति । एवं हि [10]कृतेऽपि न

कौमुदी

परामर्शकैरेव, पामरप्रायैरप्ययं व्याहताक्षरवचनवादी बालोन्मत्तादिवत् अनवधेयवचनतया पर्यनुयोज्य एव भवेत्; तथा पर्यनुयोज्यमानोऽपि स यदि स्वकीयमपाण्डित्यमपिधित्सुः स्वाभिमतत्वमात्रेण स्वोपक्षिप्तलक्षणसंसिद्धिं समर्थयितुमुत्तिष्ठेत, अहो नु खलु महत्तरतया दुरुत्तरममुष्यापाण्डित्यम्, यत्स्वयमनवबुध्यमान एव वस्तुतत्त्वम् अवबोध्यमानोऽपि परेण नावबुध्यत इति विरततदवबोधनव्यापारैरुपेक्ष्यत्वपक्ष एवायमत्यन्ताय प्रक्षिप्येत । तस्मान्न ध्वनेः स्वाभिमतत्वमात्रेण काव्यत्वसिद्धिः, अपि तु निखिलसहृदयप्रसिद्धत्वादेव; तच्चात्र नास्तीत्युक्तमिति न काव्यस्वरूपत्वं ध्वनेरित्यर्थः । आयामः[मतो] विस्तारः आतानः, तिर्यग्विस्तारः वितानः, प्रावरणम् परिधानं तद्योग्यस्वरूप इत्यर्थः; संवर्तनं विकासनम् ; विवर्तनं संकोचनम् । सकलशब्दवैयर्थ्यपरिहारार्थमाशाङ्कामाह—**विद्वांसोऽपीति** ॥ ध्वनिसमयवेदिनामेव विद्वत्त्वसंभावनान्न विद्वन्मनोग्राहित्वाभावकृतः काव्यात्मत्वाभावः इहापादयितव्य इत्यर्थः ॥ **एवं हि कृतेति** ॥ ध्वनिसमयविदामेव विद्वत्ता-

१. क. ख. ग. '-माणः' ।
२. क. ख. '-विचितः ।
ग. '-चितः' ।
३. क. ख. ग. 'सुच्छेद्यः' ।
४. क. ख. ग. 'इत्युक्ततया' ।
५. ध. 'अभिप्रेतः' ।
६. क. ध. 'विकल्पितम्' ।
७. क. ख. 'हि' ।
८. क. ख. 'एव' नास्ति ।
९. क. ख. ग. 'शङ्काम्' ।
१०. ध. ङ. च. 'अपि' नास्ति ।

## लोचनम्

किंचित्[1]कृतं स्यात्[2]; तस्मादुन्मत्तता[3] परं प्रकटितेति भावः ॥

यस्त्वत्राभिप्रायं व्याचष्टे—जीवितभूतो ध्वनिस्तावत्तवाभिमतः; जीवितं च नाम प्रसिद्धप्रस्थानातिरिक्तम्, अलंकारकारैरनुक्तत्वात्; तच्च न काव्यमिति लोके प्रसिद्धमिति—तस्येदं [4]सर्वं स्ववचनविरुद्धम्। यदि हि तत्काव्यस्यानुप्राणकं तेनाङ्गीकृतं पूर्वपक्षवादिना तच्चिरंतनैरनुक्तमिति प्रत्युत लक्षणार्ह[5]मेव भवति। तस्मात्प्राक्तन [6]एवाभिप्रायः ॥

## कौमुदी

ङ्गीकरणे तन्मनोग्राहितया काव्यत्वकल्पने कृत इत्यर्थः। न च न किञ्चित् कृतमित्याह —**उन्मत्ततेति** ॥

प्रसिद्धप्रस्थानातिरेकिण इति ग्रन्थस्य कैश्चिदर्थोऽन्यथा वर्णितः। तद्निराकरणे तस्यैव सम्यक्त्वं समानयोगक्षेमत्वं वा केचिदवबुध्येरन्; तदर्थं तत्प्रकारमनुभाष्य भञ्जयति—**यस्त्विति** ॥ काव्यजीवितत्वेनास्मदभिमतस्य ध्वनेः प्रसिद्धप्रस्थानातिरिक्तत्वे को हेतुरित्यत आह—**अलंकारकारैरिति** ॥ तदनुक्तत्वेऽपि काव्यत्वं किं न स्यादित्यत आह—**तच्चेति** ॥ अलंकारकारानुक्तं यत् तन्न काव्यम्। तदयं प्रयोगः—विमतं न काव्यम्, काव्यलक्षणकारानुल्लिखितत्वात्, संप्रतिपन्नवदिति ॥ **तस्येति** ॥ अभिप्रायव्याख्यातुः इत्थं व्याख्याने सतीति शेषः ॥ **इदं सर्वमिति** ॥ कृत्स्नस्याभाववादिवचनस्य ग्रहणम्। विरोधमेव स्फुटयति—**यदि हीति** ॥ तच्छब्देन ध्वनिलक्षणस्य वस्तुनः परामर्शः। किं ध्वनेः काव्यजीवितत्वमङ्गीकृत्य तथात्वेन चिरन्तनानुक्तत्वादकाव्यत्वमुच्यते, अनङ्गीकृत्य वा। आद्ये अनुक्तत्वं विरुद्धो हेतुः, वक्तव्यावचनस्य वचनं प्रत्येव हेतुत्वात्। द्वितीये त्वास्माकीन एव प्रकारोऽयमिति न किञ्चिदेतदित्यर्थः ॥

ननु उक्ताभाववादद्वयप्रतिलब्धे ध्वनिध्वंसे किमर्थं प्रकारान्तरेण तत्समर्थनं पुनरपर इत्यादिना प्रस्तुतमित्याशङ्क्य अवतरणिकामाह—

१. ग. 'कश्चित् कृतः'।
२. ख. 'स्यात्' नास्ति।
३. घ. ङ. च. 'तस्मान्मत्तता'।
४. च. 'सर्वं' नास्ति।
५. क. ख. 'लक्षणानर्हं'।
६. क. ख. 'एवात्राभि-'।

ध्वन्यालोकः

पुनरपरे तस्याभावमन्यथा कथयेयुः—न संभवत्येव ध्वनिर्नामापूर्वः कश्चित्, कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात् । तेषामन्यतमस्यैव

लोचनम्

ननु भवत्वसौ चारुत्वहेतुः शब्दार्थगुणालंकारान्तर्भूतश्च, तथापि ध्वनिरित्यमुया भाषया जीवितमित्यसौ न केनचिदुक्त इत्यभिप्रायमाशङ्क्य तृतीयमभाववा[1]दप्रकारमुपन्यस्यति—**पुनरपर इति** ॥ कामनीयकमिति कमनीयस्य कर्म, चा[2]रुत्वधीहेतुतेति यावत् । ननु विच्छित्तीनामसंख्येयत्वात् का[3]चित्तादृशी विच्छित्तिरस्माभिर्दृष्टा

कौमुदी

**ननु भवत्वसावित्यादिना** ॥ ध्वनिर्न चारुत्वहेतुरित्यभ्युपगमं त्यजति—**भवत्वसाविति** ॥ तर्हि प्रागुक्तानुमानबलात् गुणाद्यन्तर्भावः प्रसक्त इत्याशङ्क्य तदतिरिक्तत्वाभ्युपगममपि त्यजति—**शब्दार्थेति** ॥ हन्त तर्हि जितमस्माभिरित्यत आह—**तथापीति** ॥ केनचिदपि लक्षणकृता काव्यात्मा ध्वनिरिति नोक्तम्; तदभिधानार्थोऽयस्माकमारम्भ इति पदेपदे परिभ्रंशितस्य ध्वनिवादिनः काशकुशावलम्बनन्यायेनायं प्रत्यवस्थानप्रकार इत्यर्थः । तन्निरासार्थं तृतीयप्रकारोपन्यास इत्याह—**अभिप्रायमाशङ्क्येति** ॥ **कमनीयस्य कर्मेति** ॥ "योपधाद्गुरूपोत्तमाद्वुञ्" इति कर्मणि वुञ्। किं तत्कर्मेति तदाह—**चारुत्वधीहेतुतेति** ॥ स्वसंसृष्टे स्वधर्मसंक्रान्तिकर्तृस्वभावतया शब्दादिचारुत्वबुद्धिसंपादकत्वमेवात्र कर्मशब्देन गृहीतम्, न तु परिस्पन्दनादिलक्षणमित्यर्थः । एतच्च वृत्तौ चारुत्वहेतुष्वित्यनेन दर्शितमेव ॥ ननु वाग्विकल्पानन्त्यहेतुकाभिनवप्रकारलेशसंभवमात्रेण ध्वनिवादिनः को लाभः, तस्य गुणाद्यनन्तर्भूतध्वनिशब्दवाच्यवस्तुसिद्धावेव मनोरथलाभात्; तेन तदभ्युपगमपूर्वकः परिहारोऽनुपपन्न इत्याशङ्क्य शङ्कामाह—**ननु विच्छित्तीनामिति** ॥ विच्छित्तिर्वैचित्र्यम्; इयं वाग्विकल्पानामित्यस्य व्याख्या; आनन्त्यादित्यस्यासंख्येयत्वादिति; काव्यलक्षणविधायिभिः प्रसिद्धैरप्रदर्शित इत्यस्य या नानुप्रासादावित्यादिः । गुणाद्यनन्तर्भूतचारुत्वहेतुवस्त्वन्तरसिद्धिर्हि ध्वनिवादिनोऽभिमतेति भावः । इह वाक्शब्देन कर्तृकर्मकरणार्थव्युत्पन्नेन तन्त्रवृत्त्या आवृत्त्या वा शब्दार्थाभिधाव्यापारास्त्रयोऽपि संगृह्यन्ते । विकल्पशब्दश्चात्र न पूर्ववद्वस्तुशून्यप्रत्ययवचनः;

१. क. ख. ग. '-वादमुप-' ।　　३. घ. 'क्वचित्तादृशी' ।
२. क. ख. ग. घ. च. 'चारुत्वहेतु-' ।

ध्वन्यालोकः

वा अपूर्वसमाख्यामात्रकरणे यत्किंचन कथितं[1] स्यात् । किं च वाग्विकल्पानामानन्त्यात् संभवत्यपि वा कस्मिंश्चित्काव्यलक्षणविधायिभिः प्रसिद्धैरप्रदर्शिते प्रकारलेशे

लोचनम्

या नानुप्रासदौ नापि माधुर्यादावुक्तलक्षणेऽन्तर्भवेदित्याशङ्क्याभ्युपगमपूर्वकं परिहरति—**वाग्विकल्पानामिति** ॥ वक्तीति वाक् शब्दः ; उच्यत इति वागर्थः ; उच्यतेऽनयेति वागभिधाव्यापरः ; तत्र शब्दार्थवैचित्र्यप्रकारोऽनन्तः ; अभिधावैचित्र्यप्रकारोऽप्यसंख्येयः ॥ **प्रकारलेश इति** ॥ स हि चारुत्वहेतुर्गुणो वालङ्कारो वा । स च सामान्यलक्षणेन संगृहीत एव । यदाह[2]—'काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्काराः' इति ।

कौमुदी

किं तु वैचित्र्यवचनः ; आनन्त्याच्चासंख्येयत्वं दर्शितमित्याह—**वक्तीत्यादि** ॥ प्रकारे सत्यपीति वक्तव्ये लेशशब्दमपि प्रयुञ्जानेन तस्य गुणादावन्तर्भावः तत एव चिरन्तनप्रदर्शितप्रायत्वं च दर्शितमित्याशयेनाह—**स हीति** ॥ हिर्हेतौ ; स प्रकारः किं चारुत्वहेतुः न वा ? आद्ये गुणाद्यन्तर्भावात् [वः], द्वितीये न विवक्षितध्वनिस्वरूपसिद्धिरित्युक्तमावर्तनीयम् । न चैवमपि चिरन्तनाप्रदर्शितत्वात्तत्प्रदर्शनं प्रयोजनवदित्यवसेयम् ; तस्यापि सामान्यलक्षणोपदर्शनेन प्राचीनैरेव गुणादिलक्षणकृद्भिः प्रदर्शितप्रायस्य पुनः प्रदर्शने प्रयासमात्रपरिशेषादित्याह—**स चेति** ॥ तदेव सामान्यलक्षणं वामननिगदितं निदर्शयति—**यदाहेति** ॥ काव्यस्य शब्दार्थमयस्य शोभायाश्चारुत्वस्य कर्तारः स्वरूपनिष्पत्तिहेतवो ये ते धर्मभूता यावद्धर्मिभाविनो गुणाः ; तस्या गुणजनितायाः शोभायाः अतिशय उत्कर्षः, तद्धेतवो ये तेऽलंकाराः ; यथा लोकेऽनलंकृतोऽपि समग्रगुणशाली पुरुषः शोभते, स एव समुचितालंकारश्रृङ्गारितवपुः सुतरां शोभते, निर्गुणस्त्वलंकृतोऽपि न सचेतश्चेतश्चमत्कारकारी, एवमिहापि द्रष्टव्यम् ॥ ननु किं समस्तैर्गुणैः काव्यव्यवहारः किं वा कतिपयैरित्यादिविकल्पपूर्वकमव्याप्त्याद्युद्भावनेनास्य लक्षणस्य दूषयितुं शक्यत्वाल्लक्षणान्तरं वाच्यमित्यतो भामहीयं

१. क. 'कथनं' ख. 'कथं न' । २. क. ख. 'यदाहुः' ।

ध्वन्यालोकः

ध्वनिर्ध्वनिरिति तदलीकसहृदयत्वभावनामुकुलितलोचनैर्नृत्यते ; तत्र हेतुं न विद्मः । सहस्रशो हि[1] महात्मभिरन्यैरलंकारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च ; न च तेषामेषा दशा श्रूयते ; तस्मात्प्रवादमात्रं ध्वनिः ; न त्वस्य क्षोदक्षमं[2] तत्त्वं किंचिदपि[3]

लोचनम्

तथा "वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्क्रिया" इति[4] । ध्वनिर्ध्वनिरिति वीप्सया[5] संभ्रमं सूचयन्ननादरं[6] दर्शयति ॥ नृत्यत इति ॥ तल्लक्षणकृद्भिरतद्युक्तकाव्यविधायिभिरतच्छ्रवणो-[7][8]

कौमुदी

लक्षणं दर्शयति—तथेति ॥ वक्रत्वं नाम लोकोत्तररूपेणावस्थानलक्षणं तथात्वेनाभिधेयानामर्थानां शब्दानां चोक्तिर्वक्राभिधेयशब्दोक्तिरिति । यथा वक्ष्यति "शब्दस्य हि वक्रताभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणावस्थानम्" इति ; अयमेवासावलङ्कारस्यालङ्कारभाव इति ; एवं च यद्यद्वैचित्र्यान्तरमुट्टङ्क्यते, तस्य तस्य कथितगुणालङ्कारसामान्यलक्षणसङ्गृहीतत्वात्तत्कर्त्रदृष्टत्वमसंभावनीयमित्यर्थः । पठितपदपुनःपाठमात्ररूपाया इह वीप्सायाः प्रयोजनमाह—संभ्रममिति ॥ 'गच्छ गच्छ' इत्यादिवदभिनिवेशातिशयजनितसंभ्रमसूचिकैषा वीप्सा ध्वनिवादिवचनानुकरणरूपतयानुकर्त्रभाववादिगतध्वनिविषयमनादरमवद्योतयतीत्यर्थः॥ ननु ध्वनियुक्तकाव्यकर्तृतच्छ्रोतृजनवर्ति नर्तनं हि काव्यजीवितायमानव्यङ्ग्यार्थसारसमास्वादननिबन्धनमिति तत एव तत्सद्भावस्य सिद्धत्वात् कथं तदभावावधारणमित्याशङ्क्य नृत्यत इत्यत्र विवक्षितं कर्तृपदमुपख्यापयति—तल्लक्षणकृद्भिरिति ॥ तद्युक्तकर्त्रादिकर्तृकत्वे हि नृत्तस्य तत्सद्भावैकनिबन्धनत्वान्न बलाद्ध्वंसः शक्यक्रियः । तादृशस्तु कस्यचित् काव्यस्याभावात् तत एव तच्छ्रोतृकर्तृकनृत्तप्रसक्त्यभावान्न तावता ध्वनिसद्भावसिद्धिरित्यर्थः ॥ नन्वेतावता किमुक्तं भवतीत्यत उक्तम्—ध्वनिशब्द इति ॥ यो यो ध्वनिवादिनामति-

१. क. ख. 'अपि'
२. ग. 'क्षोदक्षमत्वम्'
३. क. ख. 'अस्ति'
४. क. ख. 'तथा······इति' इत्यन्तं नास्ति ।
५. क. ख. ग. 'वीप्सायाम्'
६. क. ख. ग. ङ. च. 'आदरम्'
७. क. ख. ग. घ. ङ. च. -तद्युक्त-तच्छ्रवण- ॥ अतद्युक्त, अतच्छ्रवण--इति कौमुद्यनुसारी पाठो निवेशितः ।
८. क. ख. 'विधातृभिः'

ध्वन्यालोकः

प्रकाशयितुं शक्यम् । तथा चान्येन कृत एवात्र श्लोकः—

"यस्मिन्नस्ति न वस्तु किंचन मनःप्रह्लादि[1] सालंकृति
व्युत्पन्नै रचितं च यन्न[2] वचनैर्वक्रोक्तिशून्यं च यत् ।

लोचनम्

द्भूतचमत्कारैश्च तत्प्रतिपत्तृभिरिति[3] शेषः । ध्वनिशब्दे कोऽत्यादर इति भावः ॥ **एषा दशेति** ॥ स्वयं दर्पः परैश्च स्तूयमानतेत्यर्थः । वाग्विकल्पा[4] वाक्प्रवृत्तिहेतुप्रतिभाव्यापारप्रकारा[5] इति वा । तस्मात्प्रवादमात्रमिति सर्वेषामभाववादिनां साधारण उपसंहारः । यतः शोभाहेतुत्वे

कौमुदी

भूमिं गत आदरः ध्वनिवस्तुविषयः स तावन्निपुणतरनिरूपणायां प्रवर्तितायां तादृशोऽर्थस्य कस्यचिदुपपादयितुमशक्यत्वात् ध्वनिशब्दमात्रविषय एवेति पर्यवस्यति । स च समुचित-गोचरसञ्चारचतुरसरसचेतसां सचेतसामपहासायैव केवलं संपनीपद्यत इत्यर्थः । दशाविशेष-प्रसक्त्यनवगमादेषा दशेति किमुक्तमित्यत आह—**स्वयमिति** ॥ दर्पो दर्पणक्रिया स्वय-मपूर्ववस्तुदर्शनसामर्थ्यवस्तुचमत्कारकारिता; परैः ध्वनिवादिबहुमानातिशयविवशीभूतबुद्धिभिः। स्वदर्पणपरजनकर्तृकस्तुतिविषयत्वस्याप्रकृतत्वात् एषेति प्रकृतपरामर्श[र्शि]सर्वनाम[मा]गम्य-त्वात् तन्मात्रस्य च सहेतुकस्यादोषत्वान्नेदं व्याख्यानं श्लिष्यत इवेत्याशङ्क्य प्रकारान्तरेण व्या-चष्टे—**वाग्विकल्पा इति** ॥ अस्योपरिष्टात् 'इति वा' इत्यनेनान्वयः । अस्मिन् पक्षे वाग्वि-कल्पशब्दार्थो न प्रागुक्तः, अन्य एव त्वित्याह—**वाक्प्रवृत्तीति** ॥ अस्मिन् पक्षे वाक्शब्देन वाक्प्रवृत्तिहेतुभूतः प्रतिभाव्यापार एव गृह्यते । तत्संबन्धिन एव तुल्यप्रकारा विकल्प-शब्देन गृह्यन्ते । पूर्वत्र हि वाक्संबन्धिन इति विशेषः । आनन्तर्यात्तृतीयप्रकारमात्र-विषयत्वं प्रतीयमानमुपसंहारस्य वारयन्नाह—**सर्वेषामिति** ॥ अभावरूपस्य साध्यस्य प्रकार-

उपलोचनम्

"तथा चान्येन कृत एवात्र श्लोकः" इति वृत्तिग्रन्थं "न चेयमभावसम्भावना निर्मूलैव दूषितेत्याह" इत्येवमवतारयन्तो लोचनकाराः कथमव्याहतवचसो भवेयुः—"जगदुः" इति लिड्बोध्यं पारोक्ष्यं समर्थयितुं "न चास्माभिरभाववादिनां विकल्पाः श्रुताः; किं तु सम्भाव्य दूषयिष्यन्ते ; अतः परोक्षत्वम्" इति वदन्तः ? मैवम् ; "निर्मूलैव" इत्यनेन प्रभूतमूलत्वाभावः प्रतिपाद्यते ; अत एव "न चास्माभिः" इत्यादिवाक्ये "विकल्पाः श्रुताः" इति बहुवचनेन प्रभूतमूलत्वं विपरीतकल्पनानां निषेधप्रतियोगितया उपस्थाप्यते—इति सर्वं समञ्जसम् ॥

१. ख. '-दिसालं-'
२. क. ख. ग. 'नैव'
३. क. ख. ग. च. 'प्रति-' घ. 'प्रतिवक्तृ-'
४. क. ख. 'वाग्विकल्प इति' ग. 'वाग्विकल्पा इति'
५. ग. 'व्यापाराः'

लोचनम्

गुणालङ्कारेभ्यो न व्यतिरिक्तः, यतश्च व्यतिरिक्तत्वे न शोभाहेतुः, यतश्च शोभाहेतुत्वेऽपि[1] नादरास्पदं तस्मादित्यर्थः। न चेयम[2]भावसंभावना निर्मूलैव दूषितेत्याह—**तथा चान्येनेति ॥** ग्रन्थकृत्समानकालभाविनैव[3] मनोरथनाम्ना कविना। यतो न सालंकृति अतो न मनः-

कौमुदी

त्रयेऽप्येकत्वात् आनन्तर्यस्य[स्या]विशिष्टत्वाददोष इति भावः। तथापि तच्छेद[च्छब्देन] समनन्तरप्रकृतानादरास्पदत्वहेतोरेव परामर्शौचित्यात् कथमुपसंहारसाधारण्यं घटतामित्याशङ्क्य समर्थितोपसंहारस्यावश्यकत्वादभावमात्रस्य च त्रिभिरपि प्रकारैः समर्थितत्वात् तन्मुखेन प्रकृतत्वस्य हेत्वन्तरेऽप्यविशिष्टत्वात्तच्छब्दस्य त्रिविधाभावहेतुपरामर्शकतयोपसंहारसाधारण्यं समञ्जसमित्याशयेनाह-**यत इत्यादिना ॥** न्यायसिद्धे ध्वनिध्वंसे दूष्यत्वनिश्चयाद्वृत्तौ श्लोकोदाहरणं किमर्थमित्यत्राह—**न चेति ॥** युक्तेः संभावनामात्रसमर्पकत्वेन मूलभूतमभ्युपगममन्तरेण दूषणप्रयोजकत्वाभावाद्वर्तिष्यमाणदूषणौचित्यार्थमेव ध्वनिध्वंसस्यैकीयाभ्युगतत्वप्रकटनार्थं श्लोकोदाहरणमित्यर्थः। करिष्यमाणस्यापि दूषणस्येदानीमव्यवधानेन बुद्धिस्थत्वात् तेन पूर्वपक्षस्य बाधितत्वं स्वयमनुभूय स्थितस्य, दूषितेति भूतकालावच्छेदेन निर्देशः। संभाव्य दूषयिष्यन्त इति स्ववचनविरोधापाकरणार्थ एवकारः। यद्यपि निर्मूलैषा संभावना, यथोक्तं प्राक्, तादृशी च सा न दूषणयोग्यत्वापादिका, तथाप्यस्याः सर्वथा न निर्मूलत्वम्, किं तु प्रभूतमूलत्वाभाव एवेति न स्ववचनव्याहतिः, समूलत्वेन दूषणार्हत्वं चेति न काश्चित् दोष इति भावः। ग्रन्थकृत्समानकालभाविनेति विशेषणं ग्रन्थकारस्योपरि संघर्षसंभावनासूचनेन तदुक्तेराशयदोषदूषितत्वेनाश्रद्धेयत्वमुद्द्योतयति। कविनेति विशेषणेन वस्तुसतत्त्वपरामर्शपारीणतापराकरणपरेण भ्रान्तिकृतत्वसंभावनापि तदुक्तेर्दर्शिता; नामनिर्देशेन तदीयस्य दर्शनस्य वस्तुसतत्त्वसंस्पर्शित्वाभावो ध्वनितः। अथोदाहृतश्लोकपूर्वार्धस्थितानां मनःप्रह्लादीत्यादीनां वस्तुशब्दवाच्यार्थविशेषणानां शब्दार्थगुणालंकाराभावप्रतिपादकत्वेनोपयोगं दर्शयिष्यन्, मनःप्रह्लादि-सालंकृतीति विशेषणद्वयमर्थालंकाराभावपरम्, तत्रापि सालंकृतित्वा-

उपलोचनम्

"वाग्विकल्पा वाक्प्रवृत्तिहेतुप्रतिभाव्यापारप्रकारा इति वा" इति लोचनं सिंहावलोकनेन "वाग्विकल्पानाम्" इति वृत्तिग्रन्थस्य प्रकारान्तरेण विवरणमिति अञ्जनानुसारी स्वरसः पन्थाः। कौमुदीकारस्तु "एषा दशा" इत्यस्यैव प्रकारान्तरेण विवरणम् "वाग्विकल्पाः" इत्यादि लोचनमित्यभिप्रयन् क्लिश्यति ॥

१. घ. 'हेतुत्वे विना' ग. 'अपि' नास्ति.
२ घ. 'न चैव'
३. क. ख. 'भाविना'

## लोचनम्

प्रह्लादि । अनेनार्थालङ्काराणामभाव उक्तः । व्युत्पन्नै रचितं च यन्न[1] वचनैरिति शब्दालङ्काराणाम् । वक्रोक्तिरुत्कृष्टा संघटना, तच्छून्यमिति शब्दार्थगुणानाम्[2] । वक्रोक्तिशून्य[3]-शब्देन सामान्यलक्षणाभावेन सर्वालंकाराभाव[4] उक्त इति केचित् । तैः पुनरुक्तं[5] न

## कौमुदी

भावफलत्वेनैव मनःप्रह्लादित्वराहित्यं न पृथगर्थान्तरसमर्पकत्वेन सोपयोगं मनःप्रह्लादित्व-विशेषणमित्याह—**यतो नेति** ॥ **अनेनेति** ॥ विशेषणद्वयेन । अर्थालंकारा उपमादयः । अर्थवाचिवस्तुपदसामानाधिकरण्यबलादलंकारसामान्यवचनोऽप्यलंकृतिशब्दोऽर्थालंकारेषु वर्तत इत्यर्थः । वचनशब्देन कर्मव्युत्पत्त्या शब्दानामिह ग्रहणम्;व्युत्पन्नत्वं विशिष्टतया प्रतीयमानत्व-मेव नान्यत्,अनुपयोगादप्रसङ्गाच ; तच्चानुप्रासाद्यलंकारशृङ्गारितत्वलक्षणमित्याह—**व्युत्पन्नै-रिति** ॥ अभाव उक्त इति सर्वत्रानुषञ्जनीयम् । वक्रोक्तिशून्यमित्यनेन शब्दार्थगुणानामभाव उक्त इत्यन्वयः। कथं तेन तदुक्तिरित्याशङ्क्याह--**वक्रोक्तिरुत्कृष्टा संघटनेति** ॥ अत्रोक्तिशब्देन संघटनैवोच्यते । "वक्रता च लोकोत्तीर्णेन रूपेणावस्थानम्" इति वक्ष्यति । तेन वक्रत्वमुत्कर्ष-शालित्वम्; कवेश्चोक्तिर्व्यापाररूपा संघटनैव रचनात्मिका । यथोक्तमन्यत्राचार्येणैव "इदमनेन शब्देन अनयेतिकर्तव्यतया अमुना आशयेनैवंभूतबुद्धिसमुत्पादनाय ब्रूवे इति कविः प्रवर्तते । स तथाभूतं रसवत्काव्यं विधत्ते" इति । तस्याश्च शब्दार्थोभयसंबन्धिन्या वक्रत्वमुत्कृष्टत्वलक्षण-माधुर्यादिगुणकरसाभिव्यञ्जनसामर्थ्ययोगितया गुणसंबन्धैकनिबन्धनमिति तच्छून्यत्वोक्त्या गुणाभाव एवोक्त इत्यर्थः । अस्यैव विशेषणस्य कथञ्चिदेव क्लेशेन गुणादिशून्यत्वार्थप्रति-पादकत्वं नाञ्जसा प्रतीतिपथाध्यासीत्यपरितुष्यतां व्याख्यानान्तरमुपन्यस्य दूषयति—**वक्रोक्तीति** ॥ "सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते" "वक्राभिधेयशब्दोक्तिरिष्टा वाचामलं-क्रिया" इति च वचनबलेन वक्रोक्तेरलंकारसामान्यरूपत्वावगमात् तच्छून्यतोक्त्यालङ्कारसामा-न्याभावमुखेन सकलालङ्कारविशेषाभावोक्तिः सिध्यतीति तेषामाशयः । एवं व्याख्याने न नापरो दोषः केवलं पुनरुक्तिदोष एव शब्दार्थालंकाराभावस्य विशेषणान्तरोक्तस्यानेनापि विशेषणेन सामान्यमुखेन प्रतिपादनात् ; गुणाद्यभावानुक्तिदोषश्चातिरिच्यत इति इत्यलमित्यनेन सूचितम् ।

१. क. ख. घ. ङ. च. 'नैव' ङ. च. 'रचितं न वचनैः'
२ ङ. च. '-गुणालङ्काराणाम्'
३. क. ख. च. '-शून्य-' नास्ति ।
४. ङ. 'सर्वलङ्काराणामभावः'
५. घ. ङ. च. 'पुनरुक्तत्वम्'

ध्वन्यालोकः

काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति[1] किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥"

लोचनम्

परिहृतमेवे[2]त्यलम् ॥ प्रीत्येति ॥ गतानुगतिकानुरागेणेत्यर्थः ॥ सुमतिनेति ॥ जडेन तु[3] पृष्टो भ्रूभङ्गकटाक्षै[4]रेवोत्तरं ददत्तत्स्वरूपं काममाचक्षीतेति भावः ॥

ए[5]ते चाभावविकल्पाः शृङ्खलाक्रमेणागताः, न त्वन्योन्यमसंबद्धा एव ; तथा हि तृतीयाभावप्रकारनिरूपणोपक्रमे पुनःशब्दस्यायमेवाभिप्रायः, उप[6]संहारैक्यं च सङ्गच्छते ।

कौमुदी

प्रीतिश्चात्र न तद्योग्यसमुचितवस्तुसतत्त्वास्वादजनिता सहृदयहृदयसंवादसाक्षिणी प्रशंसाहेतुत्वेन इहोपात्ता, किं तु स्वयं परमार्थवस्तुपरामर्शपराङ्मुखमानसानां परवचनपरिनिष्पन्नपटुतरप्रत्ययमात्रशरणानां काव्यसाराभिमतध्वनिविषयाभिनिवेशविशेषात्मकः प्रेमविशेषो भ्रान्तिमूल इत्याह—गतेति ॥ गतेऽन्यस्य गमने अनुगतमनुगमनं येषां भवति ते गतानुगतिकास्तेषामनुरागेणेत्यर्थः । सुमतिनेतिपदस्य प्रयोजनं विपक्षे बाधकमुखेन दर्शयति—जडेन त्विति ॥ कथं जडकर्तृके प्रश्ने तत्स्वरूपाख्यानसंभावना न सुमतिकर्तृक इत्याशङ्क्य जडत्वादेव तस्य यथाकथञ्चित्प्रत्यायनसंभवादित्युक्तम्---भ्रूभङ्गेति ॥ तस्यापि सुमतिसन्निधौ तदसंभावनां सूचयितुं काममित्युक्तम् ॥

एवं वृत्तिकृदुक्तांस्त्रीनपि प्रकारान् क्रमेण स्पष्टीकृत्य तेषु कञ्चिद्विशेषमुन्मेषयति—एते चेति ॥ शृङ्खलाक्रमेण शृङ्खलान्यायेन ; आगता अवतीर्णाः ; अन्योन्यसंबन्धस्त्वमीषां प्रागेव तात्पर्यार्थप्रकटने तस्मादित्यर्थानुवर्णने च स्फुटीकृत एवेति भावः । न च मयैवैतत्स्वमनीषयोत्प्रेक्षितम्, वृत्तिकारवचनबलाच्चैवावगम्यते इत्याह—तथा हीति ॥ पुनःशब्दस्य विशेषार्थत्वे सति अपरे पुनरिति ग्रन्थविन्यासौचित्यात् तत्परिहाणेन पुनःशब्दस्य प्रथमतः पाठः । प्रागुक्तप्रकारापेक्षमुत्तरस्यानन्तर्यं सूचयन् संबन्धमवगमयतीत्यर्थः । ज्ञापकान्तरं चाह—

१. ग. 'अभिदधातु'।
२. क. ख. 'एव' नास्ति।
३. क. ख. ग. 'तु' नास्ति।
४. क. ख. 'कटाक्षादिभिरेव'
५. क. ख. ग. घ. ङ. च. 'एवमेते'
६. क. ख. 'उपसंहारैक्येन'

ध्वन्यालोकः

भाक्तमाहुस्तमन्ये । अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिमाहुः[1] ।

लोचनम्

अभाववादस्य संभावनाप्राणत्वेन भूतत्वमुक्तम् । भाक्तवादस्त्वविच्छिन्नः पुस्तकेष्वित्यभिप्रायेण[2] 'भाक्तमाहुरिति' नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम् । भज्यते सेव्यते[3] पदार्थेन[4] प्रसिद्धतयोत्प्रेक्ष्यते[5] इति भक्तिर्धर्मः, अभिधेयेन सामीप्यादिः[6] ; तत आगतो भाक्तः

कौमुदी

**उपसंहारैक्यमिति** ।। अत्यन्तमेवासंबन्धेऽन्योन्यापेक्षतया स्वतन्त्राणाममीषां प्रकाराणामुपपादने सत्युपसंहारभेदेन भवितव्यम् ; तदभावादन्योन्यसंबन्धिन एवामी अवान्तरभेदमात्रमेव ; एतन्महाप्रकरणैक्यवदैक्यमेव—इत्यध्यवसेयमित्यर्थः । कारिकायामभाववादविषये जगदुरिति लिटः प्रयोगः ; भाक्तवादे पुनराहुरिति वर्तमानार्थस्य लटः ; तत्र कोऽभिप्राय इत्यपेक्षायामाह—**अभाववादस्येति** ।। **उक्तमिति** ।। जगदुरित्यनेनेति शेषः । अविच्छिन्नो वर्तमानतया स्थित एव पुस्तकेषु लक्षणकारविरचितेषु लक्षणग्रन्थेष्वित्यर्थः । तेन नाभाववादवदस्य भूतत्वमिति आहुरिति वर्तमानकालावच्छेदनिर्देशो निर्दोष इत्यर्थः । ध्वनेर्भाक्तरूपत्वप्रतिपादनार्थं भाक्तशब्दस्य गौणलाक्षणिकतच्छब्दप्रतिपादकत्वमभिदधतस्तस्य [दधत् तस्य] भक्तिशब्दार्थविशेषाधीनत्वात्तमेव तावदाह—**भज्यत इति** ।। भक्तिशब्देन लक्ष्याभिमततीरादिगतो मुख्यार्थसारूप्यादिको धर्मो गृह्यते । कथमस्य तदभिधायकत्वमिति तदाह भज्यत इति । भङ्गार्थत्वशङ्कामपाकरोति—**सेव्यत इति** ।। अत्र कर्त्रपेक्षां पूरयति—**पदार्थेनेति** ।। लक्ष्याभिमतस्तीरादिरत्र पदार्थो विवक्षितः । ननु लक्ष्यतीरादिपदार्थकर्तृका सारूप्यादिधर्मविषया समाश्रयणापरपर्याया कीदृशीयं सेवा नाम चेतनैकनियतस्य सेव्यसेवकभावस्याचेतनेन संघटयितुमशक्यत्वात्, किमर्था वासावित्याशङ्कयाह—**प्रसिद्धतयोत्प्रेक्ष्यत इति** ।। एषोऽर्थः—येयं पदार्थकर्तृका सेवा नामोक्ता, सा वस्तुतः प्रतिपत्तुरुत्प्रेक्षात्मिका काचित् प्रतिपत्तिरेव भवति । यथा राज्ञ इत्युक्ते किमश्वो गजो वेत्येवमादिरूपा जिज्ञासापरपर्याया वस्तुतः प्रतिपत्तृगतापि सती आकाङ्क्षा

१. क. ख. ग. 'गुणवृत्तिरित्याहुः'
२. घ. ङ. च. '-प्रायेणाह'
३. क. ख. 'संभाव्यते'
४. ग. 'प्राज्ञेन'
५. क. ख. ग. 'उद्घोष्यते'
६. क. ख. ग. घ. च. 'सारूप्यादिः'

लोचनम्

लाक्षणिकोऽर्थः । यदाह[1]—

"अभिधेयेन सामीप्यात्सारूप्यात्[2]समवायतः ।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥" इति ।

गुणसमुदायवृत्तेश्च[3] शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः ; तत आगतो गौणोऽर्थो भाक्तः ।

कौमुदी

पदार्थेष्वारोप्य व्यवह्रियते, तथा गङ्गायां घोष इत्यादावपि बाधितमुख्यार्थभूतान्वयप्रतिपत्तेः प्रतिपत्तुः तीरादेः गङ्गादिशब्दप्रतिपादननिमित्तत्वसंभावनारूपाभिधेयार्थसामीप्यादिविषया या कल्पना सा तीरादिगतत्वेन तत्कर्तृकधर्मविषयसेवारूपत्वेन व्यपदिश्यते, सामीप्यादिधर्म-संबन्धनिबन्धनत्वाद्गङ्गादिशब्दप्रतिपाद्यत्वस्य तत्पर्यालोचनायाः सेवारूपत्वोपचारोपपत्तेः। न च कल्पनारूपाया उत्प्रेक्षाया निर्बीजत्वान्न सारूप्यादेः निमित्तत्वमिति शङ्कनीयम्, तीरादेर्गङ्गादिसामीप्यसंबन्धस्य प्रत्यक्षादिप्रमाणान्तरसिद्धत्वादिति ॥ एवं भाक्तशब्दे प्रकृत्यर्थ-मुक्त्वा प्रत्ययार्थमाह—**तत इति** ॥ तस्माद्धर्माद्धेतोः आगतः प्रतीतः लाक्षणिकः लक्षणावृत्त्या प्रतिपाद्यो लक्ष्यस्तीराद्यर्थो भाक्तशब्देनोच्यत इत्यर्थः । लक्षणावृत्तेः सारूप्यादिनिमित्तत्वेऽ-भियुक्तोक्तिमाह—**यदाहेति** ॥ अस्य श्लोकस्योदाहरणयोजनामुपरिष्टात् स्वयमेव स्पष्टी-करिष्यति इति नेह प्रकटीक्रियते । इदानीं भाक्तशब्दगौणार्थप्रतिपादकत्वं भक्तिशब्दस्य तत्समु-चितार्थप्रदर्शनपूर्वकं प्रदर्शयति—**गुणसमुदायवृत्तेरिति** ॥ गुणानां शौर्यादीनां समुदाये संघाते एव वृत्तिर्वर्तनं यस्य सिंहादिशब्दस्य स तथोक्तः । सिंहादिशब्दा हि यथासंकेतं जातिं व्यक्तिं वा प्रतिपादयन्तः तद्गुणसमुदाय एव वर्तन्ते, न तदंशे; शब्दप्रवृत्तेरर्थप्रमितिकार्य-गम्यत्वात् तत्प्रमितेश्च शब्दान्वयव्यतिरेकानुविधायिन्या गुणसमुदायविषयतया जात्यादाविवा-प्रत्यूहमुत्पत्तेः सर्वलोकसाक्षिकत्वात् । अत एव गुणसमुदायस्येहार्थशब्देन ग्रहणम् । अर्थ्यते

उपलोचनम्

"सामीप्यतैक्ष्ण्यादौ" इति लोचनम् । अत्र प्रतिपाद्ये श्रद्धातिशयरूपां भक्तिं प्रयोजनत्वेन वर्णयन्ति लोचनकाराः भक्तिमात्रमभ्युपगच्छतां ध्वनिमनभ्युपगच्छतां दृष्ट्या, न तु ध्वनिवादिदृष्ट्या । ध्वनिवादे खलु प्रयोजनं पावनत्वादिकम् । अतः "सामीप्यतैक्ष्ण्यादौ" इति लोचनग्रन्थः कौमुदीकारानुसारेण लेखकप्रमादादिकल्पनाखलीकारं नार्हति ॥

१. क. ख. ग. ङ. 'आहुः'    घ. ङ. च. 'सामीप्यात् सारूप्यात्'
२. क. ख. 'सारूप्यात् सादृश्यात्'    ३. क. ख. ग. 'च' नास्ति ।

लोचनम्

भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः; तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च; मुख्यस्य च[1]ार्थस्य भङ्गो भक्तिः—इति; एवं मुख्यार्थबाधा निमित्तं[2] प्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति ॥ **काव्यात्मानं गुणवृत्तिमिति**[3] ॥ सामानाधिकरण्यस्यायं भावः—यद्यप्यविवक्षितवाच्ये ध्वनिभेदे

कौमुदी

गम्यते ज्ञायते इत्यर्थशब्दव्युत्पत्तेः अर्थस्य गुणसमुदायरूपस्य भाग एकदेशस्तैक्ष्ण्यादिः सिंहादिशब्दे शौर्यादेः। एवं भाक्तशब्दस्य गौणलाक्षणिकार्थसमर्पकत्वं प्रदर्श्य तस्यैव तदुभयशब्दप्रतिपादकत्वमपि दर्शयति—**भक्तिरिति** ॥ कथमत्र सामीप्यस्य प्रतिपाद्यतया श्रद्धातिशयविषयत्वमिति चेत्, सत्यम्। इयं तु लेखकानां प्रमादविजृम्भैवेति मन्यामहे। पावनत्वतैक्ष्ण्यादाविति हि ग्रन्थपाठो युक्तः। अथ वा सामीप्यशब्देन पावनत्वस्यैव ग्रहणमस्तु, एकार्थसमवायलक्षणसंबन्धात्तस्यैव प्रयोजनत्वादन्यस्य निमित्तमात्रत्वात्। भक्तिशब्देन भजनात्मको मनोव्यापारः श्रद्धातिशय उच्यते। तच्छब्देन प्रतिपाद्यं पावनत्वशौर्यादिकं गृहीतम् ॥ **तत इति** ॥ श्रद्धातिशयरूपाया भक्तेर्हेतोरागतः गौणो लाक्षणिकश्च शब्द इति शेषः। सत्येवं हि न पुनरुक्तत्वम् अपेक्षितत्वाच्चैवमेव व्याख्यानं गरीयः।एवं निमित्तप्रयोजनगोचरतया "भज सेवायाम्"इति धातोः भक्तिशब्दसिद्ध्यङ्गीकारेण व्याख्याय मुख्यार्थबाधविषयतया" भञ्जो आमर्दे" इति धातोस्तत्सिद्धिमुपजीव्य भक्तिशब्दं व्युत्पादयति--**मुख्यस्य चेति** ॥ गङ्गास्रोतआदेः इहापि तत इत्यादेरनुषङ्गो द्रष्टव्यः। कथितव्याख्याप्रकारस्य फलमाह—**एवमिति** ॥ भङ्गार्थव्याख्यानस्य मुख्यार्थबाधारूपबीजसिद्धिः फलम्, सेवाभागार्थव्याख्यानस्य निमित्तसिद्धिः, श्रद्धातिशयार्थव्याख्यानस्य प्रयोजनम्–इति समग्रोपचारबीजसूचकत्वं भाक्तशब्दस्य प्रदर्शयितुमित्थं वितत्य व्याख्यानमस्माभिः कृतमिति, काव्यात्मानं गुणवृत्तिमित्यनेनैव व्याख्यातप्रायत्वादानर्थक्यं नाशङ्कनीयमित्यभिप्रायः ॥ ननु ध्वनिर्नाम गुणवृत्तिव्यतिरेकी नास्ति कश्चित् वक्तव्यः। तद्ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिमाहुरिति विधिमुखेन सामानाधिकरण्यनिर्देशे कोऽभिप्राय इत्याकाङ्क्षायामाह—**सामानाधिकरण्यस्यायं भाव इति** ॥ सामानाधिकरण्येन निर्देशस्येति यावत्। ध्वनिगुणवृत्त्योस्तादात्म्यमेव ध्वनिवादिभिर्निरा-

१. क. ख. ग. 'वा'
२. क. ख. ग. 'बाधननिमित्तप्रयो-'
३. क. ख. ग. घ. ङ. 'वृत्तिरिति'

## लोचनम्

"निःश्वासान्ध इवादर्शः" इत्यादावुपचारोऽस्ति, तथापि न तदात्मैव ध्वनिः, तद्व्यतिरेकेणापि भावात् विवक्षितान्यपरवाच्यप्रभेदादौ ; अविवक्षितवाच्येऽ[1]प्युपचार एव न ध्वनिरिति वक्ष्यामः । तथा च वक्ष्यति—

"भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया[2] ॥"

"कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ॥" इति च ।

गुणाः सामीप्यादयः , धर्मास्तैक्ष्ण्यादयश्च ; तैरुपायैर्वृत्तिर्[3]र्थान्तरे यस्य, तै[4]रुपायैर्वृत्तिर्वा

## कौमुदी

कर्तव्यम् , न तु ध्वनेः सर्वथोपचारस्पर्शित्वमपि इतीममर्थमुद्द्योतयितुं सिद्धान्तविरुद्धतादात्म्यपक्षोपक्षेपार्थोऽयं सामानाधिकरण्यनिर्देश इत्यर्थः । कुतो न तादात्म्यमित्याशङ्क्य यस्य यद्व्यतिरेकेऽपि भावः न तत्तदात्मकम् , यथा वृक्षत्वं शिंशपात्वव्यतिरेकेणापि भवन्न तदात्मकम् । ध्वनिश्चोपचारव्यतिरेकेणापि विवक्षितान्यपरवाच्यप्रभेदे भवति । तस्मान्न तदात्मक इत्याह—**तद्व्यतिरेकेणेति** ॥ ननु "निःश्वासान्धः" इत्यादौ यत्र तत्सद्भावोऽनुज्ञातस्तत्रास्तु तादात्म्यं न सर्वत्र, तावतापि चारितार्थ्या भवाम इत्याह—**अविवक्षितवाच्येऽपीति** ॥ "सुवर्णपुष्पाम्" इत्यादौ व्यापारचतुष्टयप्रकटनेन तत्रापि तादात्म्यं नास्तीति तदवसरे वक्ष्याम इत्यर्थः । तत्रापि न स्वकपोलपरिकल्पितमेव वक्ष्यामः , कारिकाकाराभिप्रेतमेवेत्याह—**तथा च वक्ष्यतीति** ॥ अथ व्यञ्जकशब्दव्यङ्ग्यार्थव्यञ्जनव्यापारात्मनो ध्वनेर्गुणवृत्तिव्यतिरेकेणाभावमेव प्रतिपादयितुं गुणवृत्तिशब्दस्यामुख्यशब्दार्थव्यापारवाचितां व्युत्पत्तिपूर्वकमाह—**गुणा इति** ॥ सामीप्यादय इति लक्षणाभिप्रायेण ॥ **धर्मा इति** ॥ गुणशब्दो द्रव्यपरतन्त्रवस्तुमात्रवचन इति भावः ॥ **तैक्ष्ण्यादय इति** ॥ गौणाभिप्रायेण ॥ **उपायैरिति** ॥ निमित्तभूतैः ॥ अर्थान्तरे तीरादि-

१. घ. '-विवक्षितवाच्यो' क. ख. ग. ङ. च. '-विवक्षिते वाच्ये'
२. घ. इदमर्धम् नास्ति ।
३. ग. 'स्मृतिः'
४. ग. 'तैरुपायैर्वृत्तिर्वा शब्दस्य यत्र गुणवृत्तः'

## लोचनम्

शब्दस्य यत्र स गुणवृत्तिः शब्दोऽर्थो वा ; गुणद्वारेण वा वर्तनं[1] गुणवृत्तिरमुख्योऽभिधाव्यापारः[2] । एतदुक्तं भवति—ध्वनतीति वा, ध्वन्यत इति वा, ध्वननमिति वा यदि ध्वनिस्तथाप्युपचरितशब्दार्थव्यापारातिरिक्तो नासौ कश्चित् । मुख्येऽर्थे ह्यभिधैवेति[3] पारिशेष्यादमुख्य एव

## कौमुदी

माणवकादिरूपे । यस्येति शब्दस्य गङ्गादिसिंहादिरूपस्येत्यर्थः ॥ **यत्रेति** ॥ अर्थे तटादिमाणवकादिरूप इत्यर्थः । यत्र यस्येत्यनयोर्यथाक्रमं स शब्दोऽर्थो वेत्याभ्यां सङ्गतिः । वाशब्दः चार्थे ॥ **वर्तनमिति** ॥ गङ्गादिशब्दस्य सिंहादिशब्दस्य तटमाणवकाद्यर्थे इति शेषः । किमिदं वर्तनमिति तदाह—**व्यापार इति** ॥ स तर्हि कतमो व्यापार इति तदाह—**अभिधेति** ॥ हन्त तर्हि गङ्गादिशब्दस्य तटाद्यर्थावगमने समयापेक्षत्वप्रसक्तिरित्यत उक्तम्—**अमुख्य इति** ॥ मुख्याभिधाव्यापारनियत एवायं समयसव्यपेक्षत्वनियमः ; तत्र तदपेक्षत्वमात्रेणैव वा[न] अत्रापि तत्सापेक्षत्वनियमा[मः] हानात्—इत्यभिप्रायः ॥ भवत्वेवं गुणवृत्तिशब्दप्रवृत्तिः, तथापि कथं गुणवृत्तिव्यतिरिक्तध्वन्यर्थाभाव इत्यपेक्षायामभिप्रायमाह—**एतदुक्तं भवतीति** ॥ ध्वनतीति व्यञ्जकः शब्दः, ध्वन्यत इति व्यङ्ग्योऽर्थः, ध्वननमिति व्यञ्जकस्य शब्दस्य व्यङ्ग्यविषयो व्यापारः ; एतत्त्रितयमेव ध्वनिशब्देनोच्यत इति हि ध्वनिवादिनामभ्युपगमः । तत्र यदि व्यञ्जकः शब्दो ध्वनिरित्युच्यते, तदा नासावुपचरितगङ्गादिशब्दातिरिक्तो भवितुमर्हति । यदि ध्वन्यत इति व्यङ्ग्योऽर्थो ध्वनिः, तर्ह्युपचरितोऽर्थो यस्तटादिरूपः तद्व्यतिरिक्तो नासौ कश्चित् । यदि पुनः ध्वननमिति व्यापारो ध्वनिः, तदा मुख्याभिधाव्यापारानतिरिक्त एवासाविति पक्षत्रयेऽपि गुणवृत्तिव्यतिरिक्तो ध्वनिरिति न कश्चिदर्थोऽस्तीत्यर्थः । शब्दश्चार्थश्च व्यापारश्चेति द्वन्द्वः । उपचरितेति त्रयाणामपि विशेषणम् ॥ ननु अमुख्याभिधाव्यापारातिरिक्तो व्यञ्जनव्यापार एव ध्वनिः , समयापेक्षत्वाभावादित्याशङ्क्य पारिशेष्यात् अभिधाव्यापारातिरेकं साधयति—**मुख्येऽर्थ इति** ॥ इह

१. क. ख. 'वर्तमानम्'
२. घ. 'मुख्यो व्यापारः'
च. '-मुख्याभिधाव्यापारः'
३. क. ख. 'मुख्यार्थे ह्यभि-'
ग. 'मुख्यार्थेऽप्यभि-

ध्वन्यालोकः

यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथापि गुणवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो

लोचनम्

ध्वनिः, तृतीयराश्यभावात्। ननु केनैतदुक्तम्[१] 'ध्वनिर्गुणवृत्तिः' इत्याशङ्क्याह—**यद्यपि चेति** ॥ **अन्यो वेति** ॥ गुणालंकारप्रकार इति यावत् ॥ **दर्शयतेति** ॥ भट्टोद्भटवामनादिना। भामहे-

कौमुदी

द्विविध एव लोके शाब्दोऽर्थः, मुख्यश्चामुख्यश्च; मुख्यो गङ्गादिशब्दस्य स्रोतःप्रभृति, अमुख्यस्तु तटादिः। अत एव शब्दस्य तद्गोचरस्य तद्व्यापारस्य च मुख्यामुख्यभेदेन द्वैविध्यम्। न चोक्तप्रकारद्वयातिरेकी तृतीयः कश्चित्प्रकारो जागर्ति। "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति। अन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वनैयत्येन प्रकारान्तरस्यासंभावनीयत्वात्। तत्र किं ध्वननव्यापरो मुख्यगोचरः किं वा अमुख्यगोचर इति विवेक्तव्यम्। आद्येऽभिधाव्यापाराभावापत्तिः। प्रयोगश्च विमतशब्दव्यापारोऽभिधात्मकः, मुख्यार्थविषयत्वात्, 'यादांसि गङ्गायाम्' इति वाक्यस्य गङ्गादिशब्दव्यापारवदिति। द्वितीये लक्षणागुणवृत्त्योरन्यतरत्वापत्तिः प्रयोगश्च, विमतो व्यापारो गुणवृत्तिः, अमुख्यार्थगोचरत्वात्, 'गङ्गायां घोषः' इति वाक्यस्थगङ्गादिशब्दव्यापारवदिति। तत्र समयापेक्षत्वविरहान्मुख्यत्वे प्रतिषिद्धे पारिशेष्यादमुख्याभिधाव्यापारमात्ररूपत्वं ध्वनेरायातमतिनिपुणधिषणेनापि नापह्नोतुं शक्यमिति गुणवृत्तिरेव ध्वनिः, न तु तदतिरिक्त इत्यर्थः। ध्वनेर्भाक्तत्वोक्तेरन्यकर्तृकाया अनुपलब्धिपराहतिमाशङ्कते—**ननु केनैतदिति** ॥ इतिशब्द एकोऽत्रोपस्कारेण योजनीयः। श्रुत एव वा काकाक्षिन्यायेनोभयत्रापि सम्बन्धनीयः। कोऽसावन्यः प्रकारः? अथवा गुणवृत्त्यपेक्षयान्यो मुख्य एव प्रकार इति स्यात्। तेन व्याचष्टे—**गुणालंकारप्रकार इति** ॥ यथा अभाववादिभिर्ध्वनि-

१. च. 'उक्तं भवति'

लोचनम्

नोक्तम् "शब्दः छन्दोऽभिधानर्थाः" इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे—"शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च" इति। वामनोऽपि "सादृश्याल्लक्षणा

कौमुदी

गुणालंकारप्रकार इति नोक्तम्, तथा भाक्तवादिभिरपि ध्वनिर्गुणवृत्तिरेवेति स्वकण्ठतो नोक्तमिति दृष्टान्ताभिप्रायेणात्र 'अन्यो वा' इत्युक्तमित्यर्थः। दर्शयतेत्येकवचनेन प्रकाशनकर्तृत्वेनोक्तेभ्यः काव्यलक्षणकारेभ्योऽन्यस्य न ग्रहणम्। किं तु त एव सङ्घातरूपेणैकत्वमापद्यमानास्तद्ग्रहण-गोचरा इत्याशयेन कर्त्राकाङ्क्षां पूरयति—**भट्टोद्भटवामनादिनेति** ॥ तत्र तावत् भामहवचनमुदाहरति—**भामहेनोक्तमिति** ॥

"शब्दश्छन्दोऽभिधानार्थौ इतिहासाश्रयाः कथाः।
लोको युक्तिः कलाश्चेति मन्तव्याः कार्यहेतवः॥" इति।

काव्यकरणज्ञाननिदानतया शब्दादिनवकमुक्तम्। ततः किमित्यत आह—**अभिधानस्येति** ॥ पुनरुक्तिशङ्कां परिहर्तुमित्यर्थः। अभिधानशब्दोऽयं नाभिधायकशब्द-वचनः; किंतु तद्व्यापारस्यार्थप्रतिपत्तिकार्यावगम्यस्य पारिस्पन्दादिविलक्षणस्य मुख्यगुण-वृत्तिभेदभिन्नस्याभिधाख्यस्यायमभिधायक इति न पुनरुक्तिरित्यर्थः। एवं भट्टोद्भटभणिति-मुक्तार्थोपपादनार्थमुदाहृत्य तत्रैव वामनवचनमुदाहरति—**वामनोऽपीति** ॥ बभाष इति संबन्धः। सादृश्यं नाम भूयोऽवयवसामान्ययोगः तन्निमित्ता या लक्षणा सा वक्रोक्ति-र्नामालंकार इति सूत्रार्थः। उदाहरणं तु—

"उन्मिमील कुमुदं सरसीनां पङ्कजं च निमिमील मुहूर्तात्।"

अत्रोन्मीलननिमीलनशब्दौ बाधितमुख्यार्थौ सादृश्यात्संकोचविकासलक्षकतया प्रयुक्तौ। यथा वा, ममैव—

"अरुणमणिसहोदराधरेषु[रोष्ठं] हसदसितोत्पलपत्रदीर्घनेत्रम्।
मदयति मधुरं मृदुस्मितं ते वदनमिदं मदिराक्षि मानसं मे॥"

अत्र सहोदरादिशब्दा बाधितमुख्यार्थाः सन्तः सादृश्यादारुण्यादिगुणविशेषलक्ष-कतया प्रयुक्ताः। ध्वनिमार्गो मनाक् स्पृष्टोऽपि न लक्ष्यत इत्यमुं भागं पूर्वपक्षोप-क्षेपानुगुण्येन व्याचष्टे—**तैस्तावदिति** ॥ संप्रतिपत्तौ तावच्छब्दः गुणवृत्तेः प्रयोजना-

१. क. ख. 'भामहोक्तम्' ग. 'सा लक्षणा'
२. क. ख. 'सा सादृ-'

ध्वन्यालोकः

**मनाक्स्पृष्टोऽपि न लक्ष्यत इति परिकल्प्यैवमुक्तम्—'भाक्तमाहुस्तमन्ये' इति ॥**

लोचनम्

वक्रोक्तिः" इति ॥ **मनाक्स्पृष्ट इति** ॥ तैस्तावद्ध्वनिदिगुन्मीलिता । यथालिखितपाठकैस्तु[2] स्वरूपविवेकं कर्तुमशक्नुवद्भिस्तत्स्वरूपविवेको[3] न कृतः,

कौमुदी

भावात् तस्य च वक्ष्यमाणविधया व्यञ्जनव्यापारैकगोचरत्वात् गुणवृत्तिव्यवहारं दर्शयद्भिरेव तैः ध्वनिमार्गोऽप्युत्सूत्रित एवेत्यर्थः । हन्त तर्हि ध्वनेर्भाक्तत्वोद्घाटनं निर्मूलमेव स्यात्; न हि तैः स्वकण्ठेन गुणवृत्तिरेव ध्वनिरित्यभ्यधायि, प्रत्युत ध्वनिमार्ग एव पर्यग्राहीत्याशङ्क्य तथापि लक्षणकरणेन पृथक् तत्स्वरूपानिरूपणात् 'गुणवृत्तिरेव ध्वनिः, न तदतिरिक्तः' इति तदुक्तिमर्थसिद्धामुपजीव्येदं भाक्तवादप्रस्थानं प्रवृत्तमित्याह—**यथालिखितेति** ॥ गुणवृत्तिव्यवहारविषयम्—

"उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात्" ॥

इत्यादि काव्यं लेखनानतिक्रमेण पठद्भिः 'न लक्ष्यते' इत्यस्य व्याख्या 'तत्स्वरूपविवेको न कृतः' इति । तत्र हेतुः—**स्वरूपविवेकं कर्तुमशक्नुवद्भिरिति** ॥ न केवलं ध्वनिस्वरूप-

उपलोचनम्

'मनाक्स्पृष्टोऽपि न लक्ष्यते' इति ध्वन्यालोके । अयमेव पाठो ज्यायान् लोचनसंमतश्च । कौमुदीकारेणापि अयमेव पाठः समादृतः । अत्रेदं बोध्यम्—'न लक्ष्यते' इत्यस्य 'न लक्षणेन विविच्य प्रतिपाद्यते विवेचनीयोऽपि ध्वनिः' इत्यर्थो वर्णनीयः । अन्यथा 'न दृश्यते' इति यथाश्रुतार्थग्रहणे 'गुणवृत्तिर्ध्वनिः' इति पूर्वपक्षकल्पनामूलमुच्छिद्येतेति । 'ध्वनिगुणवृत्त्योर्भेदो नाभ्युपगन्तव्यः' इति प्राचामुद्भटादीनां मतम् । भेदानभ्युपगमे प्रमाणं योग्यानुपलब्धिः; तत्र योग्यता 'न लक्ष्यते' इत्यनेन सूच्यते । अलक्षणेन भेदानभ्युपगमः कुतः प्रतीयेत ? ध्वनिस्वरूपापरिज्ञानादेव अलक्षणं कुतो न स्यादित्यत आह लोचने—प्रत्युतोपालभ्यत इति । एवं खलु ध्वनिगुणवृत्तिभेदानभ्युपगमसाधकानुपलब्धौ योग्यता सम्यक् समर्थिता स्यादिति भावः ।

१. क. ग. 'स्पृष्टो लक्ष्यते'
२. क. ख. '-प्रतिपादकै-'

ङ. च. '-प्रतिपाठकै-' ग. '-प्रतिपाङ्क्तै-'
३. क. ख. 'विवेकोद्यतः'

ध्वन्यालोकः

केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदय-

लोचनम्

प्रत्युतोपालभ्यते, अभग्ननारिकेलवत्[1] यथाश्रुततद्ग्रन्थोद्ग्रहणमात्रेणेति[2]। अत एवाह—परि[3]कल्प्यैवमुक्तमिति ॥ यद्येवं न योर्ज्यते[4] तदा[5] ध्वनिमार्गः स्पृष्ट इति पूर्वपक्षविधानं[6] विरुध्यते ॥

कौमुदी

विवेकाकरणमेव विवेचनार्हं तत्स्वरूपापलापश्च, अहो महदमीषामपाण्डित्यमिति सोत्प्रासमाह— **प्रत्युतेति** ॥ ध्वनिरिति शेषः । किमिति ध्वनिमार्गस्पर्शेऽपि सति तद्विवेकाभावतदुपालम्भावित्याशङ्कयाह—**अभग्नेति** ॥ दृष्टान्तेन विवेके सति ध्वनिवस्तुस्वरूपं स्फुटतरमवभासेतैवेति प्रतिपत्तृपुरुषापराध एवायमिति दर्शितम् । तद्ग्रन्थः ध्वनियुक्तग्रन्थः—उन्मिमीलेत्यादि । गुणवृत्तिव्यवहारदर्शनात् ध्वनिमार्गस्पर्शे सत्येव तत्स्वरूपविवेकाकरणात् भक्तिरेव ध्वनिः । तदतिरिक्त इति तदभिप्रायमुक्तिपर्यन्तमुररीकृत्यायं भाक्तवादः प्रवृत्त इत्यर्थः । लक्षणकरणयोग्यत्वे सति तदनुपलब्धिलक्षणप्रमाणगम्यत्वेनोपपादिते भाक्तव्यतिरिक्तध्वन्यर्थाभावरूपेऽर्थे वृत्तिगतं परिकल्प्येतिपदमनुकूलयति —**अत एवेति** ॥ नन्वत्र ध्वनिमार्गविस्पृष्टत्वं न दृश्यत इति प्रतीयमानमर्थमपहाय किमित्येवं कृच्छ्रावबोधार्थस्वीकरणमित्याशङ्कयाह—**यद्येवमिति** ॥ भक्तिरेव ध्वनिः न तु तदतिरिक्त इति हि पूर्वपक्षोऽत्र दिदर्शयिषितः । तस्योद्भटादिना स्वग्रन्थेषु ध्वनिमार्गास्पर्शे केवलं गुणवृत्तिव्यवहारमात्रकरणे विरोधः स्यात्, योग्यत्वा[ग्यानु]पलब्धेरभावोपस्थापकस्य तदानीमनुद्भावितत्वात् । यथोक्तप्रकारे तु व्याख्याने बलापादननिबन्धना तदुक्तिः शक्योपपादा स्यादित्येषैव ग्रन्थयोजना गरीयसीत्यर्थः ॥

१. क. ख. ग. ङ. च. '-कल्पयथा-'
२. क. ख. '-ग्रन्थनोद्ग्रन्थन-' ङ. '-श्रुततद्ग्रन्थोद्ग्रहणतदर्थानुग्रहण-'
३. ङ. '-इति परि-'
४. ग. 'योक्ष्यते'
५. ग. 'मनाक्'
६. क. ख. '-क्षेऽभि-' घ. च. '-क्षाभि-'

ध्वन्यालोकः

संवेद्यमेव समाख्यातवन्तः । तेनैवंविधासु विमतिषु स्थितासु सहृदयमनःप्रीतये

लोचनम्

**शालीनबुद्धय इति** ॥ अप्रगल्भमतय इत्यर्थः । एते च त्रय उत्तरोत्तरं भव्यबुद्धयः । प्राच्या हि विपर्यस्ता एव सर्वथा ; मध्यमास्तु तद्रूपं जानाना अपि संदेहेन निह्नुवते[1] ; अन्त्यास्तु अनिह्नुवाना[2] अपि लक्षयितुं न जानत इति क्रमेण विपर्ययसंदेहाज्ञान[3]प्राधान्यमेषाम्[4] ॥ **तेनेति** ॥

कौमुदी

नन्विह प्रथममभाववादः, तदनन्तरं भाक्तवादः, तदनन्तरमलक्षणीयत्ववाद इत्यस्मिन् क्रमाङ्गीकारे को हेतुरित्याकाङ्क्षायामर्थसतत्त्वसंस्पर्शभूमिभूतसिद्धान्तपक्षावतारहेतुत्वं सोपानपरंपरान्यायेनामीषामस्ति, तदौचित्यानुसृत्यर्थं क्रमसमाश्रयणं समञ्जसमेवेत्याह—**एते चेति** ॥ त्रिष्वप्यभावप्रकारेषु कथितविशेषास्तित्वशङ्कामेकपक्षत्वोक्त्या निराकर्तुं त्रय इत्युक्तिः । भाक्तालक्षणीयत्वपक्षयोः प्रकारभेदाभावादेव परिशेषादाद्यपक्षप्रकारभेदापरिग्रहः त्रित्वसंख्याव्यपदेशप्रयोजनमिमि भावः । एतदेव स्पष्टीकरोति—**प्राच्या हीत्यादिना** ॥ प्राच्या अभाववादिनः । सर्वथेत्यनेन परमार्थज्ञानगन्धवन्ध्यतया देहात्मवादिचार्वाकवदर्वाचीनत्वममीषां दर्शितम् । अत एवोत्तरवाक्ययोर्विशेषार्थः तुशब्दः । तमेव विशेषमाह—**तद्रूपं जानाना इति** ॥ संमुग्धतया 'यत्किञ्चिदस्ति वाच्यातिरिक्तम्' इत्युल्लिखन्तोऽपीत्यर्थः । तद्रूपज्ञत्वादेव तर्हि तदुक्तपक्षोपादेयत्वप्रसक्तिरिति शङ्कां शमयति—**सन्देहेन निह्नुवत इति** ॥ ते हि तत्त्वावबोधजन्यपरितोषाभावादपह्नुवते । अतश्च पर्यन्तदशायामभाववादिसोदरत्वैषामपीति भावः । मध्यमेभ्योऽप्यन्त्यनामुत्कर्षनिबन्धनं विशेषमाह—**अनिह्नुवाना इति** ॥ तद्रूपमित्यनुषङ्गः । एतत्पक्षानुपादेयत्वमूलमपकर्षमाह—**लक्षयितुं न जानत इति** ॥ विपर्ययस्य स्वरूपजिज्ञासाप्रतिबन्धकत्वाद्विपर्ययप्रधानतोक्त्याभाववादिनां सर्वापेक्षयात्यन्तापकर्षो दर्शितः । सन्देहस्य जिज्ञासाप्रसञ्जकतया भाक्तवादिनां तत्प्रधानत्वाभिधानेन शिक्षाधिकारयोग्यतया तेषामभाववाद्यपेक्षयोत्कर्षो दर्शितः । अन्त्यानां तु वस्तुतत्त्वावबोधवतां लक्षणकरणमात्रविषयमेवाज्ञानं न वस्तुतत्त्वविषयम् ; तच्च सुखोच्छेदमिति तेषां

१. क. ख. घ. 'अपह्नु-'
२. क. ख. 'अनपह्नु'
३. क. ख. ग. घ. 'विपर्यास-'
४. क. ख. ग. 'एतेषाम्'

## लोचनम्

एकैकोऽप्ययं विप्रतिपत्तिरूपो[1] वाक्यार्थो निरूपणे[2] हेतुत्वं प्रतिपद्यत इत्येकवचनम् । एवंविधासु विमतिष्विति निर्धारणे सप्तमी । आसु मध्ये एकोऽपि[3] यो[4] विमतिप्रकारस्तेनैव हेतुना तत्स्वरूपं ब्रूम इति ध्वनिस्वरूपमभिधेयम् । अभिधानाभिधेयलक्षणयो[5]र्ध्वनिशास्त्रयोर्वक्तृश्रोत्रोर्व्युत्पाद्यव्युत्पादक[6]भावः संबन्धः । विमतिनिवृत्त्या तत्स्वरूपज्ञानं

## कौमुदी

सर्वपूर्वापेक्षयोत्कर्षः । ध्वनिवाद्यपेक्षया कियानप्यपकर्ष इति दर्शितम् । अतश्च सिद्धान्तपक्षानन्तरितपूर्वभूमित्वादन्त्यपक्षस्य तदारोहे सति सम्यग्भूतध्वनितत्त्वदर्शनमयत्नलभ्यमधिकारिधियः सिद्धमित्येतत् क्रमेणेत्यनेन द्योतितम् । तेनेत्यत्र यदेकवचनं तत् तच्छब्दपरामृष्टवाक्यार्थभूतहेतुगतैकत्वप्रतिपादकत्वेन नाविवक्षितमिति मन्तव्यमित्याह—**एकैकोऽपीति** ॥ तच्छब्देन हि त्रयो विप्रतिपत्तिरूपा वाक्यार्थाः प्रकृतत्वेन परामृश्यन्ते । कारकविभक्त्या च तेषां ध्वनिस्वरूपनिरूपणं प्रति हेतुत्वमुच्यते । एकवचनेन तु नैतेषां समुदितानामेव हेतुत्वम्, किन्तु अन्यानपेक्षतयामीषां प्रत्येकमेव हेतुत्वमस्ति ; ततश्चैकस्यापि हेतोरेव कर्तव्ये सति ध्वनिस्वरूपनिरूपणेन बहुषु सत्सु हेतुषु तन्निरूपणमत्यन्तमावश्यकम् —इत्ययमर्थो दर्शितः । सप्तम्या अनेकार्थवृत्तितया प्रसिद्धत्वात् प्रतिपिपादयिषितार्थसमुचितमर्थमाह—**निर्धारण इति** ॥ तदेव स्फोटयति—**आसु मध्य इति** ॥ **एकोऽपीति** ॥ अभावादिविषयः । अतश्च तेनेत्यस्य प्रत्येकेषु प्रकृतेषु त्रिषु वाक्येषु यथाक्रममभिसम्बन्धोऽनुसन्धेयः । ततः 'तस्याभावं जगदुरपरे' तेन 'तत्स्वरूपं ब्रूमः' इत्यादिः सहृदयमनःप्रीतये व्याकुर्वता वृत्तिकारेण पार्यन्तिकमेव प्रयोजनं प्रदर्शितम् ; न तु विषयसंबन्धमुख्यप्रयोजनानि प्रदर्शितानि । न च तैर्विना श्रोतृप्रवृत्तिसंभव इति स्वयमेव 'तत्स्वरूपं ब्रूमः' इति भागस्य तत्प्रतिपादकतां वृत्तिकारेण स्वकण्ठतोऽनुक्तामपि हृदयस्थितां श्रोतृमनस्समाधानार्थं प्रदर्शयति—**ध्वनिस्वरूपमिति** ॥ वचनक्रियाकर्मकारकतया ध्वनिस्वरूपस्य निर्देशात्तस्याभिधेयत्वं तावत् साक्षादुपदर्शितम् ; अत एव तयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः ब्रूम इति वचनकर्तुरभिधानाद्वचनस्य श्रोतृप्रतिपत्त्यर्थत्वात् श्रोतुरर्थलाभात् तत्सम्बन्धोऽपि सम्बन्धि-

१. घ. '-रिति'
२. ग. ग 'निरूपणेऽपि'
३. ग. ग. 'एकोऽपि' नास्ति ।
४. ङ. 'योऽसौ'
५. घ. ङ. च. '-लक्षणः'
६. घ. च. 'व्युत्पादकव्युत्पाद्य-'

लोचनम्

साध्यसाधनभाव[1]: संबन्ध इत्युक्तम् । अथ[2] श्रोतृगत[3]प्रयोजन[4]प्रयोजनप्रतिपादनं[5] "सहृदयमनः-

कौमुदी

शब्दसामर्थ्यात् सिध्यति । विमतिप्रयुक्तत्वात्तत्स्वरूपाभिधानस्य तन्निवृत्त्यर्थत्वावगतेस्तत्त्वावधारणप्रतिपक्षभूतविमतिप्रतिक्षेपमुखेन तत्फलत्वं ध्वनिस्वरूपाभिधानस्य दर्शितम् । तद्द्वारेण च शास्त्रप्रयोजनयोरुत्पाद्योत्पादकभावसंबन्धोऽपि सूचित एवेति श्रोतृप्रवृत्त्युपयुक्तमनुबन्धत्रयमत्र तत्स्वरूपं ब्रूम इति कारिकाखण्डेन दर्शितं भवतीत्यर्थः ॥ **उक्तमिति** ॥ तत्स्वरूपं ब्रूम इत्यनेनेति शेषः । इदानीम् "सहृदयमनःप्रीतये" इति कारिकाखण्डस्य प्रयोजनम् "तस्य हि" इत्यादेः "लक्ष्यताम्" इत्यतःप्राक्तनस्य वृत्तिग्रन्थस्योपयोगं च दर्शयन्नवतारयति—**अथेति** ॥ ज्ञानस्य स्वतःसुखप्राप्त्यादिरूपत्वरहितस्य प्रयोजनत्वायोगात् प्रयोजनान्तरहेतुत्वेनैव तथात्वस्यावश्यवक्तव्यत्वात्तस्यैव प्रीतिरूपस्य स्वतःप्रयोजनतया प्रवृत्तावन्तरङ्गत्वं तदाक्रान्तिसमासादितप्रयोजकभावस्यैव मुख्यप्रयोजनस्य प्रयोजनत्वम् ; अत एव वृत्तिकारेण मुख्यप्रयोजनानभिधानेन सहृदयमनःप्रीतय इति भागं व्याकुर्वतेदमेव प्रयोजनं प्रादर्शि । अस्यैवेतरापेक्षयोद्धुरकन्धरीभावेन स्वसाधनसंक्रान्तिमुखेन वस्तुसामर्थ्यबलादेव श्रोतृप्रवृत्तिमूलकारणत्वादन्यस्य तदुपजीवनलब्धजीवितस्यैव प्रयोजकत्वमिति तत्प्रतिपादनं न व्यर्थमित्याशयेनाह—**श्रोतृगतेति** ॥ श्रोतृगतं यत्प्रयोजनं ध्वनिस्वरूपज्ञानरूपं तस्य प्रयोजनं प्रीतिरूपं तस्य प्रतिपादनमिति कर्तरि करणे वा ल्युट्प्रत्ययः ॥ **व्याख्यातुमाहेति**॥ अस्यार्थः "तस्य हि" इत्यादेः तावद्वृत्तिग्रन्थस्य साक्षाद्व्याख्यानरूपत्वं नास्ति, तथापि नानुपयोगः । आनन्दस्य सहृदयमनःप्रतिष्ठारूपप्रयोजनप्रतिपादनार्थतया तत्प्रयोजनत्वसमर्थनार्थं ध्वनेः काव्यजीवितत्वानन्यप्रतिपादितत्वप्रदर्शनमुखेन लक्ष्यतामित्यादिव्याख्यानशेषतयोपयोगसंभवात् । न हि प्रीतेः प्रीतिरूपत्वं ताद्रूप्येण प्रयोजनत्वं वा तद्विषयस्य तद्योग्यतोपाधिभूतानिरतिशयसाम्राज्यपदानभिषेके सुखोपपादं भवति इति तत्तादृशासौभाग्यविशेषभाजनत्वप्रतिपादकतया तस्य हीत्यादेरत्यन्तोपयोगित्वमनपवादमिति । तस्येत्यत्र तच्छब्दो न ध्वनिसंज्ञिपरः , किं तु तत्प्रकाशनावश्यकत्वसिद्ध्यर्थं विप्रतिपत्तिमयमहान्ध-

१. क. ख. '-साधकभाव इत्युक्तम्'
२. ग. 'अतः'
३. क. ख. 'त्रितय'
४. क. ख. ग. घ. च. 'प्रयोजनप्रति-'
५. क. ख. ग. ङ. 'प्रतिपादकम्'

ध्वन्यालोकः

तत्स्वरूपं ब्रूमः । तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणी-

लोचनम्

प्रीतये' इति भागं व्याख्यातुमाह—**तस्य हीति** ॥ विमतिपदपतितस्येत्यर्थः । ध्वनेः स्वरूपं लक्षयतां संबन्धिनि मनसि हृदये आनन्दो निर्वृत्यात्मा चमत्कारापरपर्यायः प्रतिष्ठां परैर्विपर्यासाद्युपहतैरनुन्मील्यमानत्वेन स्थेमानं लभतामिति प्रयोजनं संपादयितुं तत्स्वरूपं प्रकाश्यत

कौमुदी

कारतिरोहितत्वधर्मवैशिष्ट्यपर इत्याह—**विमतिपदपतितस्येति** ॥ ग्रन्थस्य चास्य स्पष्टसंगतिकत्वात् सुग्रहत्वाय सङ्गतिमाह—**ध्वनेः स्वरूपमिति** ॥ लक्षयतामित्यस्याव्यवधानादानन्दशब्देनैव सङ्गतिः सपदि भायात्; तद्व्यावृत्त्यर्थमुक्तम्—**सम्बन्धिनि मनसीति** ॥ न संकल्पविकल्पात्मकवृत्तिकमत्र मनो विवक्षितम् । किञ्च अध्यवसायवृत्तिकमन्तःकरणमात्रमित्याह—**हृदय इति** ॥ आनन्दप्रतिष्ठाशब्दयोरर्थान्तरपरतया व्याख्यास्यमानत्वादत्र विवक्षितमर्थं पदं ना[विदन्ना]नन्दशब्दस्य तावन्निर्वृत्यात्मेति आनन्दस्य निर्वृत्यात्मनोऽप्यव्यपदेश्यत्वाच्छब्दान्तरेणापि स्फुटयति—**चमत्कारेति** ॥ प्रतिष्ठामित्यस्याप्यर्थमाह—**स्थेमानमिति** ॥ हेत्वन्तरप्रापिताप्रतिष्ठत्व एवानन्दस्य प्रतिष्ठालम्भनप्रसक्तिरित्यत उक्तम्—**परैरिति** ॥ वक्ष्यमाणप्रकारेण यावदेतद्ध्वनिस्वरूपप्रतिपादनं न क्रियते, तावत्सहृदयहृदयमयमहालवालमध्यसीमनि तत्सतत्त्वसमास्वादनकन्दादानन्दमन्दारतरुप्ररोहः प्रादुर्भवन्नेव वा अभावादिवादिगदितयुक्तिसहस्रखनित्रसमुत्खातमूलोऽनुदितप्राय एव स्यादिति तदुन्मूलनहेतुनिरासेन तत्प्रतिष्ठापनं संगतमेवेत्यर्थः । परोक्तयुक्तीनां वास्तवे तदुन्मूलनसामर्थ्ये कुतोऽनुन्मूल्यमानत्वमपीत्याशङ्क्य तासामाभासतां दर्शयितुमुक्तम्—**विपर्यासाद्युपहतैरिति** ॥ आदिशब्देन सन्देहाज्ञानयोः संग्रहः । ननु "सहृदयमनःप्रीतये" इत्यस्य वाक्यान्तरेण प्रयोजनप्रयोजनप्रतिपादकत्वेनोक्तिः प्रतिष्ठां लभतामिति वाक्यान्तरेण निर्देशश्च कारिकायां सहृदयमनःप्रीतये तत्स्वरूपं ब्रूम

१. घ. 'स्वरूपम्' इत्यारभ्य 'लभतामिति' इत्यन्तं नास्ति ।

२. ग. घ. 'हृदये' नास्ति ।

लोचनम्

इति संगतिः । प्रयोजनं च नाम तत्संपादकवस्तुप्रयोक्तृताप्राणतयैव तथा भवतीत्याशयेन प्रीतये तत्स्वरूपम् इत्येकवाक्यतया व्याख्येयम् । तत्स्वरूपशब्दं व्याचक्षाणः संक्षेपेण तावत्पूर्वोदीरितविकल्पपञ्चकोद्धरणं प्रथयति—**सकलेत्यादिना** ॥ सकलशब्देन सत्कविशब्देन च

कौमुदी

इत्येकवाक्यत्वप्रतीतिविरुद्ध इत्याशङ्क्य कारिकामनुकूलयितुमुक्तम्—**इति प्रयोजनं संपादयितुमिति** ॥ न भिन्नवाक्यत्वेनैव व्याख्या वृत्तिकारस्याप्यभिमता । प्रयोजनप्रयोजनप्रतिपादकत्वोक्तिः पुनर्वैवक्षिक्येव, न शाब्दी । तन्मूल एव च वाक्यान्तरेण निर्देशः । वस्तुतस्तु एकवाक्यताङ्गीकारेणैषा यथाकारिकाक्षरं व्याख्या अवसेया, न भिन्नवाक्यतयेति भावः । एतदेवोपपत्त्योद्भेदयन्नाह—**प्रयोजनं चेति** ॥ चो हेत्वर्थे; नाम प्रसिद्धौ; तच्छब्दः प्रयोजनस्वरूपवचनं प्रयोजनस्वरूपसंपादकं यद्वस्तु क्रियारूपं तस्य प्रेरकत्वस्वभावशालितया तथा प्रयोजनत्वेनावभासते । प्रयोजयति स्वनिष्पादके साधने पुरुषं प्रवर्तयतीति प्रयोजनमित्युच्यते । न खलु डित्थादिशब्दवद्यादृच्छिकशब्दत्वमस्य शक्याङ्गीकारम्; अतस्तादृशप्रयोजनत्वप्रतीतिर्वाक्यभेदेन व्याख्याने न सिध्यतीति हृदये कृत्वा वृत्तिकार एकवाक्यतया व्याख्येयतामेवाभिसंहितवान् । यथाश्रुतग्रन्थच्छायानुरूपार्थावसायिनां पुनरन्यथापि प्रतीयेतेति भावः ॥ **इत्याशयेनेति** ॥ यस्मादेवमाशयो वृत्तिकारस्य तस्मादेकवाक्यतया व्याख्येयमिति योजना । अथवा व्याख्या इयमिति पदद्वयं वृत्तिकारस्य व्याख्यानमेतदित्यर्थः । सकलेत्यादिविशेषणानामुपयोगमाह—**तत्स्वरूपशब्दमिति** ॥ तद्व्याख्यानं वा किमर्थमित्यत उक्तम्—**पूर्वेति** ॥ तदप्युत्तरत्र कृतत्वादनर्थकमित्यत उक्तम्—**संक्षेपत इति** ॥ संक्षेपविस्ताराभ्यां प्रतिपाद्यमानो ह्यर्थः प्रतिपित्सूनां प्रतिपत्तिपथमनायासेनावतरेदिति भावः । उद्धरणं निरासः; तदेव विविच्य दर्शयति—**सकलेति** ॥ प्रकारलेशत्वं किमखिलकाव्यविषयव्याप्त्यभावकृतम्, आहोस्विदप्राधान्यकृतम्? आद्यं सकलपदेन शकलयति, सकलकविकाव्यविषयव्याप्त्युपलब्धेरनपलपनीयत्वादस्य न तत्कृतं प्रकारलेशत्वमिति । द्वितीयं सत्कविशब्देन निर्दलयति, कालिदासप्रभृतिभिर्महाकविभिस्तस्यात्यन्तमादृतस्य

१. घ. 'तत्त्वमुपपादक--'
२. क. ख. ग. 'तत्स्वरूपं ब्रूमः'
३. क. ख. ग. 'व्याख्यानम्'
४. ख. 'रूपम्'
५. च. '-द्धार-'
६. घ. ङ. च. 'सूचयति'

ध्वन्यालोकः

यसीभिरपि[1] चिरंतनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्। अथ च रामायण-

लोचनम्

प्रकारलेशे कस्मिंश्चिदिति निराकरोति। अतिरमणीयमिति भाक्ताद्व्यतिरेकमाह[2]। न हि 'सिंहो वटुः', 'गङ्गायां घोषः' इत्यत्र रम्यता काचित्[3]। उपनिषद्भूतशब्देन तु अपूर्वसमाख्यामात्र-करण[4] इत्यादि निराकृतम्। अणीयसीभिरित्यादिना गुणालंकारानन्तर्भूतत्वं सूचयति। अथ चेत्यादिना तत्समयान्तःपातिन इत्यादि[5] यत्सामयिकत्वं शङ्कितं तन्निरवकाशीकरोति। रामायणमहाभारत[6]शब्देनादिकवेः प्रभृति सर्वैरेव सूरिभिर[7]स्यादर इति दर्शयति। लक्ष्यता-मित्यनेन वाचां स्थितमविषय इति परास्यति। लक्ष्यतेऽनेनेति लक्षो[8] लक्षणम्। लक्षेण[9]

कौमुदी

नाप्राधान्यनिमित्तं लेशत्वमाशङ्कितुमपि शक्यमित्यर्थः। व्यतिरेकेमेव स्फोरयति—**न हीति**॥ **काचिदिति**॥ दूरेऽतिरम्यत्वकथेति भावः। भाक्तशब्दस्य गुणलक्षणावृत्ति-साधारणतयोक्तत्वादिह तदुभयोदाहरणदानम्। किं सिंहादिशब्दैः वट्वाद्यर्थप्रतिपादने रम्यत्वम् उत शौर्यादिप्रत्यायने? नाद्यः, अनुपलम्भात्। न द्वितीयः, यतो गुणादिसंबन्ध-सुन्दरत्वविरहान्न ध्वनित्वापादनपर्याप्तं रामणीयकमिह सचेतसामवभासत इति भावः। उपनिषद्भूतत्वेन सर्वोत्कृष्टत्वमुक्तम्, तेन च समाख्यामात्रत्वस्य सुदूरनिरासः सूचित इत्यर्थः॥ ननु लक्षणकृद्भिरनुन्मीलितपूर्वत्वे प्रत्युत तस्य नृशृङ्गादिवदत्यन्तासत्त्वमेव पर्यवस्येदिति तद्विशेषणं तावन्न परपक्षप्रतिक्षेपकमित्याशङ्क्य, तस्य लक्ष्येषु प्रसिद्धतरत्वात् नृशृङ्गादिसमान-योगक्षेमत्वस्य दूरदुर्वचत्वात् स्थूलबुद्धिगम्यगुणादिव्यतिरिक्तित्वं तद[न]भिधानमिषेण सूच्यत इत्युक्तम्—**अणीयसीभिरित्यादिनेति**॥ **रामायणादीति**॥ लक्ष्यविशेषोपादानेऽभिप्रायमाह—**आदिकवेः प्रभृतीति**॥ ननु विकल्पपञ्चकोद्धरणपरेऽस्मिन् ग्रन्थे अभावभाक्तवादनिराकरण-वदलक्षणीयत्वपक्षापाकरणं न लक्ष्यत इत्याकाङ्क्षायां लक्ष्यतामित्यस्य तन्निराकरणपरत्व-

१. क. ख. 'अपि' नास्ति।
२. क. ख. ङ. च. 'व्यतिरिक्त'
३. ख. 'क्वचित्'
४. घ. 'करणमात्र-'
५. क. ख. ग. 'इत्यादिना'
६. घ. 'भारतादि'
७. क. ख. ग. 'मुनिभिः'
८. क. ख. ग. 'लक्ष्यो'
९. क. ख. ग. 'लक्ष्येण'

ध्वन्यालोकः

**महाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि**

लोचनम्

निरूपयन्ति लक्षयन्ति तेषाम्, लक्षणद्वारेण निरूपयतामित्यर्थः ॥ **सहृदयानामिति** ॥ येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः । यथोक्तम्—

कौमुदी

माह—**लक्षयतामित्यनेनेति** ॥ तदेव तच्छब्दनिर्वचनेनोपपादयति—**लक्ष्यतेऽनेनेति** ॥ लक्षणं निरूपयन्तीत्यस्मिन्नर्थे लक्षयन्तीति रूपं भवति । "प्रातिपदिकात् धात्वर्थे बहुल-मिष्ठवच्च" इति निरूपयन्तीति धात्वर्थे वर्तमानाल्लक्षप्रातिपदिकाण्णिच्, तस्येष्ठवद्भावात् । टिलोपः । एवं चैतच्छास्त्रप्रदर्शितलक्षणद्वारा सहृदयानां ध्वनिस्वरूपनिरूपणरूपो योऽर्थस्तमभिदधतां लक्षयतामिति सहृदयविशेषणेनालक्षणीयत्वपक्षः प्रतिक्षिप्त इत्यर्थः । अस्मिन् शास्त्रे यत्र यत्र सहृदयशब्दस्तत्सर्वसाधारण्याभिप्रायेण वृत्तिग्रन्थस्थं सहृदयशब्दं सहृदयलक्षणाभिधानेन व्याचष्टे—**येषामिति** ॥ अनुशीलनं शब्दपाठः अर्थपर्यालोचनं च; तस्याभ्यास आम्रेडनम्; ततो हेतोर्विशदीभूते पूर्वमविशदे संप्रति विशदतां गते मनोमुकरे मणिमुकुरवदतिस्वच्छे मनसि वर्णनीयं विभावादि तत्संबन्धिनस्तद्विषयतया तन्मयी-भवनस्य तत्तादात्म्यापत्तिरूपस्य योग्यता सामर्थ्यमस्ति, ते सहृदया इति लक्षणमुक्तम् । अथ सहृदयशब्दार्थनिर्वचनाभिप्रायेणाह—**स्वहृदयसंवादभाज इति** ॥ हृदयस्य ताद्रूप्येण सर्वत्रैकत्वात्तस्य यस्मिन्नर्थे संवादोऽस्ति, तत्र संवादकान्तरनैरपेक्ष्येण ये काव्यार्थमनुभवन्ति, ते विशुद्धतया तत्त्वावधारणनिपुणतया प्रशस्तहृदयवन्तः सहृदया इत्युच्यन्ते । एतच्च सर्वत्रानुसन्धेयमित्यर्थः । यथोक्तलक्षणसहृदयसिद्धौ संवादकं किञ्चिद्वाक्यमुदाहरति—**यथो-क्तमिति** ॥ यो विभावादिरूपः सत्कविवर्णनाधिरूढोऽर्थः । हृदयसंवादी हृदयसंवादविषयी-

१. क, ख. 'ते हृदय-'　　ग. 'त एव हृदय-'　　घ. 'ते सहृदय-'

लोचनम्

"योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥" इति ।

**आनन्द इति** ॥ रसस्य[1] चर्वणात्मनः प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वं[2] दर्शयति[3] । तेन यदुक्तम्—

"ध्वनिर्नामापरो योऽसौ व्यापारो व्यञ्जनात्मकः ।
तस्य [4]सिद्धेऽपि भेदे स्यात् काव्येंऽशत्वं न रूपता[5] ॥" इति ।

कौमुदी

भवनशीलः ; तस्यार्थस्य भावः निर्मलहृदयमणिमुकुरसीमनि समुन्मेषः, रसोद्भवः रसोत्पत्ति-हेतुर्भवति ; तेन च तथाभूतेनार्थेन न केवलं हृदयमेव व्याप्यते ; तद्व्याप्तिपूर्वकं कृत्स्नमेव शरीरं व्याप्नोति ; तत्र कार्त्स्न्येन झटित्येव तदैकरूप्येण च व्याप्तौ दृष्टान्तः—"शुष्कं काष्ठमिवाग्निना" इति ; काष्ठमेव च व्याप्यते, न शिलादिकम् ; तेन च दार्ष्टान्तिके रत्यादिवासनाविरहितहृदयस्य श्रोत्रियादेः सहृदयत्वाभावः ; शुष्कमिति काव्यानुशीलनकृतमनोवैशद्यशालित्वं सूचितम् ; अग्निनेति गुणालंकारसंबन्धसौन्दर्यनिबन्धनं विभावत्वं दर्शितम् । इदानीमानन्दशब्दोपादानस्य परपक्षप्रतिक्षेपपर्यवसायितां दर्शयितुं प्रयोजनमाह—**आनन्द इतीति** ॥ **रसचर्वणैवात्मा** स्वरूपं यस्य स आनन्दस्तथोक्तः । वक्ष्यति हि रसचर्वणाव्यापारो रसनीय इति । अथवा रसचर्वणाया आत्मा य आनन्दस्तस्येति वस्त्वलंकाररसेषु रसध्वनेरेव मुख्यमात्मत्वमिति । इतरयोस्तु तत्पर्यवसायितया गौणमिति दर्शयितुमानन्दस्य प्राधान्येन प्रयोजनत्वं दर्शितमित्यर्थः । अस्य फलं परपक्षनिरास इत्याह—**तेनेति** ॥ तत्प्रदर्शनेन हेतुना तदपहस्तितं भवतीत्यन्वयः । किं तदित्यत उक्तम्—**यदुक्तमिति** ॥ वक्ता चेह भट्टनायकः । ध्वनिर्ध्वननम् । नामशब्दः परप्रसिद्धिसूचनार्थः । योऽपीत्यपिशब्दः तुशब्दस्यार्थे । अपरः प्रसिद्धेभ्योऽभिधादिभ्योऽन्यः विलक्षणश्च । स किंलक्षण इत्यत

१. घ. ङ. च. 'रसचर्व-'
२. क. ख. ग. ङ. 'आत्मत्वमिति'
३. ङ. 'दर्शयति' नास्ति ।
४. ग. 'असिद्धे'
५. क. ख. 'काव्याङ्गत्वं न रूपिता'
घ. 'काव्येऽङ्गत्वं न रूपता'

ध्वन्यालोकः

**लभतां प्रतिष्ठामिति प्रकाश्यते ॥**

लोचनम्

तदपहस्तितं[1] भवति । तथा हि अभिधाभावनारसचर्वणात्मकेऽपि[2] त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति[3] भवतोऽप्यविवादः । यथोक्तं त्वयैव—

"काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्" इति ।

कौमुदी

**उक्तम्—व्यञ्जनात्मक इति** ॥ सिद्धेऽपीत्यनेनाभ्युपगम्यवादोऽयमिति दर्शयति । न तावदभिधादिभ्योऽस्य भेदो न्यायाघातसहः । तथाप्यभ्युपगम्यापि ब्रूमह इत्यर्थः । तस्य काव्येंऽशत्वमेव स्यात्, न स्वरूपत्वमात्मत्वं यद्भवतोऽभिलषितमित्यर्थः । विमतो ध्वनिः काव्यांशभूतो भवितुमर्हति, शब्दव्यापारत्वादभिधादिव्यापारवत्, इत्यनुमानबाधितं काव्यात्मत्वाभिधानमित्यर्थः **॥ अपहस्तितं भवतीति ॥** साक्षात्तदपहस्तनाप्रतिपत्तावपि तदभिप्रायसद्भावो दर्शित इति तमुद्घाटयति—**तथा हीति** ॥ उक्तानुमानस्य स्वाभ्युपगमविरोधं दर्शयिष्यन् स्वाभ्युपगमं तावदाह—**अभिधेत्यादि ॥**

व्यापारस्त्रिविधो बुधैरभिमतः काव्येऽभिधाभावना-
भोगोत्पादकतात्मना तदधिको नास्ति ध्वनिर्नाम नः ।
सिद्धाद्या व्यवहारभूमिषु विभावाद्यर्थसाधारणी-
कारात्मा त्वपरा निरर्गलरसास्वादात्मिकैवान्तिमा ॥

**रसचर्वणेति** भोगकृत्त्वमित्यर्थः **॥ त्र्यंश इति ॥** त्रयोंऽशा व्यापाररूपा अस्येति । भवतोऽपीत्यपिशब्दः त्र्यंशेऽपीत्यत्र योज्यः । रसचर्वणाया जीवितत्वेन तदभ्युपगमे तदीयमेव वचनं प्रमाणयति— **यथोक्तमिति ॥ त्वयैवेति ॥** नास्माकमिदमलीकारोपणदौर्जन्यविष्फूर्जितमित्यर्थः । रसयिता रसचर्वणशीलः सर्व एव काव्येऽधिक्रियत इति शेषः । न बोद्धा जनः इतिहासादाविव, न नियोगभाक् नियोज्यः वेदादाविव ; तेन रसचर्वणाया अधिकारसंपादकत्वं स्वकण्ठतो वदता तस्याः प्राधान्येन जीवितत्वमुक्तमेव भवतीति भावः । एवं पराभ्युपगमं प्रदर्श्य तद्विरोधमनुमानस्य वक्तुं किं वस्त्वलंकारध्वन्योरंशत्वमात्रं

१. ग. घ. 'एतेन तदपहसितम्'
२. ष. च. --'केति,
३. घ. ङ. च. 'जीवभूते-'

## लोचनम्

तद्वस्त्वलंकारध्वन्यभिप्रायेणांशमात्रत्वमिति सिद्धसाधनम् । रसध्वन्यभिप्रायेण तु स्वाभ्युपगमप्रसिद्धसंवेदनविरुद्धमिति ॥

तत्र कवेस्तावत्कीर्त्यापि प्रीतिरेव संपाद्या । यदाह—"कीर्तिं स्वर्गफलामाहुः"—इत्यादि[2] । श्रोतॄणां च व्युत्पत्तिप्रीती यद्यपि[3] स्तः, यथोक्तम्—

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्[4]॥" इति ।

## कौमुदी

सिसाधयिषितं किं वा रसध्वनेरिति विकल्पं हृदि कृत्वा आद्यं दूषयति—**तदिति** ॥ तत्र एवं स्वाभ्युपगमं स्थिते सतीत्यर्थः । यदंशमात्रत्वसाधनं तद्वस्त्वलंकारध्वन्यभिप्रायेण चेत् क्रियते, तयोरेवांशत्वं साध्यते चेदित्यर्थः, तदा सिद्धसाधनत्वं रसध्वनेरेव मुख्यतयात्मत्वेनास्माभिरभ्युपगमात्, इतरयोस्तु तत्पर्यवसायितया वाच्यादुत्कृष्टत्वमात्रमेव न वास्तवं मुख्यमात्मत्वमित्ययमर्थः "काव्यस्यात्मा स एव" इत्यत्रान्तरे वक्ष्यत इत्यर्थः । द्वितीयं दूषयति—**रसध्वनीति** ॥ स्वाभ्युपगमः काव्यस्य त्र्यंशत्वस्वीकारः । तत्र प्रसिद्धं यद्रसचर्वणाया जीवितत्वसंवेदनं तेन विरुद्धं तदंशत्वानुमानमित्यर्थः ; स्वाभ्युपगमेन च प्रसिद्धेन रसविदां संवेदनेन च विरुद्धमिति वा, स्वाभ्युपगमप्रसिद्धिस्वसंवेदनविरुद्धमिति वा पाठे स्वाभ्युपगमेन रसविदां प्रसिद्धया स्वसंवेदनेन च विरुद्धमित्यर्थः । इतिशब्दः परमतनिराससमाप्त्यर्थः ॥

नन्वानन्दस्य प्राधान्ये सिद्धे स्यादेवम्; तदेव कथमिति तावद्वाच्यम्; फलत्वादिति चेत् भवत्वेवम्; तथापि फलान्तरस्यापि विद्यमानत्वात् तस्यैव प्राधान्यमिति नियमेनाध्यवसातुमशक्यमित्याशङ्क्य फलान्तरं किमेतत् कवेराहोस्विच्छ्रोतुरिति विकल्पमुपजीव्याद्यं प्रत्याह—**तत्रेति** ॥ काव्यविषय इत्यर्थः । तावदिति संप्रतिपत्तौ ; कीर्त्यापीति फलान्तरानुवादः, कीर्तेः स्वरूपेण सुखप्राप्त्यादिरूपत्वाभावेन पुरुषार्थत्वाभावादिति । एतदभियुक्तोक्त्या द्रढयति—**यदाहेति** ॥ स्वर्गशब्दस्य निरतिशयप्रीतिवचनत्वेन प्रसिद्धत्वादिति भावः । द्वितीयमनुवदति—**श्रोतॄणां चेति** ॥ **धर्मार्थेति** ॥ अत्र पूर्वार्धेन व्युत्पत्तिलक्षणं फलमुक्तम् ; कीर्तेः प्रीतिपर्यन्तत्वात् तृतीयपादेन प्रीतिरेवोक्ता भवति ; एवमुभयोरपि सममेव फलरूपत्वं प्रतीयत इत्यर्थः । तथापि परमार्थपर्यालोचनायां प्रस्तुतायां प्रीतिरेव फलं पर्यवस्यतीत्याह—

१. क. ख. --'ह्लत्वमा--'
२. क. ख 'इत्यादौ'
३. क. ख. 'व्युत्पत्तिर्यद्यपि'
४. क. ख. ग. 'निबन्धनम्'

## लोचनम्

तथापि तत्र[1] प्रीतिरेव प्रधानम् । अन्यथा प्रभुसंमितेभ्यो वेदादिभ्यो[2] मित्रसंमितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतोर्जाया-[3]संमितत्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः । चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम् । आनन्द इति च ग्रन्थकृतो नाम । तेन स[4] आनन्दवर्धनाचार्यः एतच्छास्त्रद्वारेण सहृदयहृदयेषु प्रतिष्ठां देवतायतनादिवदनश्वरीं[5][6]

## कौमुदी

**तथापीति** ॥ तत्रेति व्युत्पत्तिप्रीत्योर्मध्य इत्यर्थः ॥ **प्रधानमिति** ॥ फलमिति शेषः । एतदेव विपक्षे बाधकप्रदर्शनेन द्रढयति—**अन्यथेति** ॥ यस्मादानन्दस्यैव प्रधानतया काव्यफलत्वमितरस्यानुषाङ्गिकत्वमेव तस्मादिह आनन्दो मनसि इति तस्य फलत्वं सूक्तमित्याह—**इतीति** ॥ एवमनिच्छन्तमेव विपक्षे दण्डोद्यमनेनाभ्युपगमय्य परमतानुरोधेन व्युत्पत्तेः फलत्वमभ्युपगम्य कीर्तेरिव तस्या अपि स्वयमपुरुषार्थतया फलान्तरशेषत्वेन तथात्वसिद्धौ तद्बलादेवानपेक्षतया आनन्दस्य प्रधानफलत्वं पर्यवस्येदित्याह—**व्युत्पत्तेरपि चेति** ॥ आनन्दो मनसि प्रतिष्ठामित्येतत् ग्रन्थकारप्रयोजनाभिधानोपयोगितया प्रकारान्तरेण व्याचष्टे—**आनन्द इति चेति** ॥ न केवलं प्रीतिवचन एवेत्यर्थः । भीमसेनो भीम इतिवदानन्दवर्धन एवानन्द इत्युच्यत इत्यर्थः । कथं पुनरस्य मनसि प्रतिष्ठालाभो नेय इत्यत्राह—**तेनेति** ॥ नामत्वे स्थिते तदानुगुण्येन कथञ्चिदितरपदगमनिका सुगमेति तेनेति नामत्वस्य हेतुत्वेन निर्देशः । मनसीत्यस्य व्याख्या सहृदयहृदयेष्विति । एकवचनं तु इहाप्यविवक्षितमिति भावः । केन प्रकारेण तस्य मनसि प्रतिष्ठेत्याशङ्क्य ग्रन्थग्रन्थकृतोरभेदाभिप्रायेणेत्याह—**एतच्छास्त्रेति** ॥ प्रतिष्ठामित्यस्य व्याख्या—**अनश्वरीमिति** ॥ प्रवाहनित्यतया सहृदयहृदयमन्दिरेषु श्रूयमाणव्याख्यायमानशास्त्रात्मना नित्यप्रतिपन्नत्वरूपनित्यसन्निहितत्वलक्षणा स्थितिः प्रतिष्ठाशब्देनोच्यत इत्यर्थः । अत्र दृष्टान्तः—**देवतायतनादि-**

१. क. ख. ग. 'तत्र' नास्ति.।
२. क. ख. 'वेदादिशास्त्रेभ्यो'
३. ग. 'हेतुजायाः'
४. क. ख. ग. 'स एव'
५. घ. ङ. च. 'देवा-'
६. घ. 'निश्चलीं'

## लोचनम्

[1]स्थितिं लभताम् गच्छत्विति भावः । यथोक्तम्—

"उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
[2]आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥" इति ।

तथा—**मनसि प्रतिष्ठामिति** ॥ [3]एवंविधमस्य मनः । सहृदयचक्रवर्ती खल्वयं ग्रन्थकृदिति [4]यावत् । यथा—

## कौमुदी

**वदिति** ॥ यथा विष्ण्वादीनां विशिष्टसन्निवेशशालिषु क्षेत्रशब्दवाचिषु [वाच्येषु] स्थानविशेषेषु भक्त्यादिसमुपबृंहितसाधकजनमनोवृत्तिविशेषसमारोपकृता स्वरूपेण तथा स्थित्यभावेऽपि नित्यसान्निध्यलक्षणा प्रतिष्ठाशब्दवाच्या विशिष्टा काचन लोकशास्त्रादिप्रसिद्धा, तथा अस्यापि सहृदयहृदयेषु भक्तिबहुमानादिसमुपचितसमुचितप्रतिपत्तिविशेषे विषयीभावेनाभूतसंप्लवमवस्थानमेव प्रतिष्ठेत्युच्यत इत्यर्थः । लभतामित्यस्य व्याख्या—**गच्छत्विति** ॥ उक्तमानन्दपदस्य नामत्वमुपजीव्य मनसि प्रतिष्ठां लभतामित्यस्य अर्थान्तरमाह—**तथेति** ॥ अस्मिन्नर्थे लभतामिति लङन्तत्वेन विपरिणमय्य योज्यः—मनसि प्रतिष्ठां लभत इति । एतत् व्याचष्टे—**एवंविधमस्य मन इति** ॥ अस्य ग्रन्थकृत आनन्दवर्धनाचार्यस्य मन एवंविधं प्रतिष्ठां लब्धवद्भवति नेतरहृदय[वत्] परिनिष्ठितार्थविषयसमुन्मेषरहितम्—इत्ययमर्थो मनसि प्रतिष्ठां लभत इत्यनेनोच्यत इत्यर्थः । उक्तार्थस्य पर्यवसानभूमिं निष्कृष्याह—**सहृदयेति** ॥ प्रतिष्ठाशब्दस्योक्तार्थवाचकत्वं प्रयोगप्रदर्शनेन साधयति—**यथेति** ॥ ननु अनर्थकमिदं

## उपलोचनम्

"यथा मनसि प्रतिष्ठा भवति—एवंविधमस्य मनः; सहृदयचक्रवर्ती खल्वयं ग्रन्थकृत् इति यावत्"—इति पाठः अञ्जनानुसारी । सहृदयहृदयेषु तात्पर्यरूपिणीं प्रतिष्ठाम्, यथा युद्धेऽर्जुनस्य तात्पर्यरूपिणी प्रतिष्ठा—इति व्याख्यात्यञ्जनकारः । वस्तुतस्तु मनसि मनोविषये सहृदयताविषये, प्रतिष्ठां यशः—इति सुयोजम् ॥

१. क. ख. 'स्थितिं लभताम्' नास्ति। ग. 'स्थितिं लभतां सिद्धिं' घ. ङ. च. 'स्थितिं गच्छ-'
२. ग. 'आस्थयेव'
३. क. ख. ग. 'एवं विधस्य मनसः'
४. ग. 'भावः'

## लोचनम्

"युद्धे प्रतिष्ठा परमार्जुनस्य" इति ।

स्वनामप्रकटीकरणं श्रोतॄणां[1] प्रवृत्त्यङ्गमेव संभावनाप्रत्ययोत्पादनमुखेनेति[2] ग्रन्थान्ते वक्ष्यामः । एवं ग्रन्थकृतः कवेः श्रोतुश्च मुख्यं प्रयोजनमुक्तम् ॥१॥

तत्रेति[3] ॥ एवंभूतेऽभिधेये[4] प्रयोजने च स्थिते इत्यर्थः । ननु

## कौमुदी

स्वनामप्रदर्शनम्, प्रत्युत आत्मबहुमानातिशयसूचकतया दौर्जन्यावहम्, शिष्टप्रतिषिद्धत्वादनुचितं चेत्यत्राह—**स्वनामेति** ॥ नामनिर्देशे खल्ववसिताप्तभावाः व्याख्यातृश्रोतार एतच्छास्त्र[स्त्रे] व्याख्यानश्रवणयोग्योऽयमित्यवधार्य निराशङ्कमेव प्रवर्तेरन् । अनवधृताप्तभावविषय एव आत्मबहुमानशङ्कादिदोषावसरः नैवंविधेषु प्रख्यातप्राप्तकाष्ठाप्रकर्षप्रामाण्येषु विद्वदग्रगण्येषु । अत एव नायं शिष्टप्रतिषेधविषयोऽपीति भावः । संभावनात्मकः प्रत्ययो विश्वासः ॥ **ग्रन्थान्त इति** ॥ "आनन्दवर्धन इति प्रथिताभिधानः" इत्येतद्व्याख्यानावसर इत्यर्थः । प्रकृतस्य व्याख्यानप्रपञ्चस्य प्रयोजनं वदन् प्रेक्षावदुपादेयत्वं सूचयति—**एवमिति** ॥ उक्तेन व्याख्यानप्रकारेण ग्रन्थकृतः स आनन्दवर्धनाचार्य इत्यादिना, कविश्रोत्रोः कवेस्तावदित्यादिना प्रयोजनमुक्तमित्यर्थः ॥

एवं "काव्यस्यात्मा" इत्याद्यकारिकार्थविषयं वृत्तिग्रन्थं व्याख्यायाधुना "अर्थः सहृदयश्लाघ्यः" इति द्वितीयकारिकार्थगोचरं व्याचिख्यासुः प्रथमं तत्रेति तच्छब्देन किं परामृश्यत इत्याकाङ्क्षायां पूर्वकारिकायां तात्पर्यविषयतया प्रदर्शितं श्रोतृप्रवृत्त्यङ्गभूतं विशिष्टमभिधेयं प्रयोजनं च ध्वनिलक्षणारम्भहेतुतया प्रतिपाद्यत इत्याह—**एवंभूत इति** ॥ यतो विमतिपदपतितत्वाविशिष्टध्वनिस्वरूपात्मकमभिधेयमनन्यार्थतया

१. घ. च. 'त्यर्थ-'
२. क. ख. 'त्पादक'
ङ. 'त्पादनत्वेनेति'
३. क. ख. ङ. 'तत्रेति ॥ 'एवंभूतेऽभिधेये प्रयोजने च स्थित इत्यर्थः' नास्ति ।
४. ग. '-विधे'

ध्वन्यालोकः

तत्र ध्वनेरेव लक्षयितुमारब्धस्य भूमिकां रचयितुमिदमुच्यते—

लोचनम्

'ध्वनिस्वरूपं ब्रूमः' इति प्रतिज्ञाय वाच्यप्रतीयमानाख्यौ द्वौ भेदावर्थस्येति व्याख्याभिधाने का संगतिः कारिकाया इत्याशङ्क्य संगतिं कर्तुमवतरणिकां करोति[2]—**ध्वनेरेवेत्यादिना** ॥ भूमिरिव[3] भूमिका । यथा अपूर्वनिर्माणे चिकीर्षिते पूर्वं भूमिरेव[4] विरच्यते तथा ध्वनिस्वरूपे प्रतीयमानाख्ये निरूपयितव्ये[5] निर्विवादसिद्धवाच्याभिधानं

कौमुदी

विश्रान्तिधामभूतं निर्वृत्यात्मकं सहृदयप्रीतिरूपं प्रयोजनं च स्थितम्, अतोऽवश्यं ध्वनिलक्षणं प्रारब्धव्यम्, सन्दिग्धत्वसप्रयोजनत्वयोर्लक्षणारम्भप्रयोजकत्वात् । ततश्च लक्षणकथनारम्भहेतुत्वविषयतात्पर्यपर्यवसायितया सप्तमी व्याख्येयेति भावः । यद्यपि प्रतीयमानार्थाभिधानपर्यालोचनायां लक्षणाभिधानोपयोगितया लक्ष्यार्थनिर्देश-परतयोत्तरकारिकाया नासङ्गतिः शङ्कार्हा, तथापि वाच्यार्थाभिधानप्रसञ्जिका कस्याचिदसङ्गतिशङ्का प्रादुःष्यात्; तत्परिहारार्थं ध्वनेरेवेत्यादिग्रन्थ इत्याह—**ननु ध्वनि-स्वरूपमित्यादिना** ॥ पूर्वकारिकायां हि ध्वनिस्वरूपाभिधानं सहेतुकं प्रतिज्ञातम्, उत्तरकारिकायां तु वाच्यार्थाभिधानं कृतमिति किं केन सङ्गतम्—इतीमां शङ्कां निराकर्तुं ध्वनेरेवेत्यवतरणिकाग्रन्थ इत्यर्थः । यो लक्षयितुमारब्धो ध्वनिस्तस्यैव भूमिकां रचयितुमित्युक्त्या वाच्यार्थोक्तेरसङ्गतिरेवकारेण निवारिता । "इवे प्रतिकृतौ" इति कन्प्रत्ययान्तमिदं भूमिकेति पदमित्याह—**भूमिरिवेति** ॥ तदेव स्फुटी करोति—**यथेति** ॥ अपूर्वं यन्निर्माणं निर्मीयत इति ॥ **निर्विवादेति** ॥ ध्वनिवादिन-स्तद्ध्वंसवादिनश्च संप्रतिपत्तिविषयतया सिद्धो योऽयं वाच्योऽर्थस्तस्य भूमिसादृश्यात्

१. ग. 'अस्य'
२. क. ख. ङ. 'करोति—तत्रेति । एवंविधेऽभिधेये प्रयोजने च स्थित इत्यर्थः'
३. क. ख. घ. ङ. 'एव'
४. च. 'इव'
५. क. ख. 'निरूपितव्ये'

## लोचनम्

भूमिः, तत्पृष्ठेऽधिकप्रतीयमानांशोल्लिङ्गनात्[1]। वाच्येन समशीर्षिका[2]गणनं तस्याप्यनपह्न[3]वनीयत्वं प्रतिपादयितुम्। स्मृतावित्यनेन 'यः समाम्नातपूर्वः' इति द्रढयति।

## कौमुदी

भूमित्वम्; वाच्यप्रतीयमानार्थयोरधिष्ठानाधिष्ठेयभावेन प्रतीतेः प्रतीयमानार्थोपयोगितयेह वाच्यार्थाभिधानं सङ्गतमेवेत्यर्थः। कथं तस्य भूमिसाधर्म्यमित्यत उक्तम्—**तत्पृष्ठ इति** ॥ तस्य वाच्यस्य पृष्ठे तत्प्रतीत्युत्तरकालमिति यावत्। अधिकतया वाच्यव्यतिरिक्तत्वेन प्रतीयमानांशस्य ध्वनेरुल्लिङ्गनादुल्लेखनाद्धेतोः वाच्यस्य भूमित्वं युज्यत इति योजना। तत्पृष्ठोत्थितेति पाठे तस्य वाच्यस्य पृष्ठेऽनन्तरमुत्थितत्वेनोद्धुरकन्धरीभावेन व्यतिरिक्तत्वेन प्रतीयमानस्योल्लिङ्गनादुल्लेखनादित्यर्थः। नन्वेवं वाच्यव्यङ्ग्ययोः पूर्वोत्तरभूमिभावेन व्यवस्थानाभ्युपगमे वाच्यप्रतीयमानाविति तुल्यवन्निर्देशो विरुध्यते। तुल्यवन्निर्देशस्य तयोरगृह्यमाणविशेषत्वगमकत्वेन तदभावे सत्यनुपपत्तेरिति शङ्कां तत्प्रयोजनोक्त्या परिहरति—**वाच्येनेति** ॥ **तस्यापीति** ॥ अपिशब्देन वाच्यसमुच्चयः। ननु "तस्य भेदावुभौ स्थितौ" इति वक्तव्ये "स्मृतौ" इति वदतः कोऽभिप्रायः? न ह्येतद्विषयं धर्माचार्यवचनं सूचयितुमिति संभावयितुं शक्यमित्याशङ्क्य तदभिप्रायमाह—**स्मृतावित्यनेनेति** ॥ ध्वनेः यत् स्वकपोलपरिकल्पितत्वशङ्काकलङ्कसंक्षालनार्थं बुधैः समाम्नातपूर्वत्वमाद्यकारिकायामुक्तं तन्नार्थवादमात्रमिति मन्तव्यम्, किन्तु तथाभूतार्थमेवेति सूचयितुं तदर्थस्यैव पुनर्वचनं स्मृतावित्यनेन कृतम्; 'अभ्यासे हि भूयस्त्वमर्थस्य भवति' इति न्यायादित्यर्थः। ननु अभाववादिगादितयुक्तिशतग्रस्तस्य वाच्यातिरिक्तस्य ध्वननव्यापारगम्यस्य प्रतीयमानाख्यस्यार्थस्य कथं वाच्यवदनपह्नवनीयत्वं तुल्यनिर्देशमात्रेण सेद्धुमर्हति; न हि महीतलसरसीरुहसहकथनमात्रेण नभस्तलनलिनसत्ता शक्याधिगमा प्रेक्षावतामित्याशङ्क्य सहृदयश्लाघ्य इति विशेषण-

१. ग. 'आलिङ्गनात्'
२. ङ. '-कया'
३. घ. च. 'तस्यान-'

ध्वन्यालोकः

**अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ २ ॥**

लोचनम्

'शब्दार्थशरीरं काव्यम्' इति यदुक्तं तत्र शरीरग्रहणाद[1]ेव केन[2]चिदात्मना तदनुप्राणकेन भाव्यमेव । तत्र शब्दस्तावच्छरीरभाग एव संनिविशते, सर्वजनसंवेद्यधर्मत्वात् स्थूल-

कौमुदी

संगृहीतमर्थं दर्शयन् परिहरति—**शब्दार्थशरीरमिति** ॥ यदुक्तमित्यत्र वक्तारोऽभाववादिनो ग्राह्याः । शब्दार्थयोः शरीरत्वं तावत् भवद्भिरेवास्मदीयं पक्षं प्रतिक्षिपद्भिः स्वकण्ठेनोक्तमिति तत्र शरीरविशेषस्य स्वव्यतिरिक्तात्मशब्दवाच्यवस्त्वन्तरानुप्राण्यमानत्व-नियमोपलम्भात् इहापि तदनुप्राणकः तद्व्यतिरिक्तात्मशब्दाभिधेयोऽर्थोऽवश्याभ्युपेयः । विमतं स्वव्यतिरिक्तवस्त्वन्तरानुप्राणितं भवितुमर्हति, विशिष्टशरीरशब्दवाच्यत्वात्, संप्रतिपन्नवदिति प्रयोगबलात्सामान्यतस्तावद्वाच्यातिरिक्तवस्त्वन्तरसिद्धिरित्यर्थः ॥ ननु शब्दार्थोभयव्यतिरिक्तवस्त्वन्तरसद्भावस्यानुपलम्भहतत्वात् अनुपलब्धस्य नृशृङ्गादिवदभ्युप-गमनीयासद्भावत्वात् तयोरन्यतरस्यैवात्मतयानुप्राणकत्वमभ्युपगम्यतामिति कथं प्रतीय-मानांशसिद्धिरित्याशङ्क्य शब्दस्यात्मत्वं तावदपाकरोति—**तत्रेति** ॥ आत्मतया कस्मिं-श्चित्कल्पयितव्ये स्थिते सतीत्यर्थः । शब्दार्थसमुदायस्य शरीरत्वात् शब्दस्य शरीरभागे विनिवेश इहोक्तः । तत्र हेतुमाह—**सर्वजनेति** ॥ सर्वजनसंवेद्यास्तीव्रत्वादयो धर्मा यस्य स तथा तद्भावस्तत्त्वं तस्माद्धेतोरित्यर्थः । दृष्टान्तमाह—**स्थूलेति** ॥ स्थूलादिशरीरं हि सर्वजनसंवेद्यस्थूलत्वकृशत्वादिधर्मकत्वाच्छरीरतां नातिवर्तते ; एवं शब्दोऽपि । तदयं प्रयोगः—विमतः शब्दो नात्मा भवितुमर्हति, सर्व-जनसंवेद्यधर्मकत्वात्, स्थूलकृशादिशरीरवदिति । तन्न शब्दस्यात्मतया काव्यशरी-

१. ग. 'निर्वहणा-' २. ब. 'तेन'

## लोचनम्

कृशादिवत् । अर्थः पुनः सकलजनसंवेद्यो न भवति ; न ह्यर्थमात्रेण काव्यव्यपदेशः, लौकिकवैदिकवाक्येषु तदभावात् । तदाह—**सहृदयश्लाघ्य इति** ॥ स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्या विभज्यते । तथा हि—तुल्येऽर्थरूपत्वे किमिति

## कौमुदी

रानुप्राणकत्वमित्यर्थः । अर्थस्य पुनरात्मत्वमस्माकमनुमतमेवेति दर्शयितुं तस्य सामान्यसिद्धिसिद्धस्य वाच्यातिरिक्तविभवत्वगमकं विशेषमाह—**अर्थ इति** ॥ अमुमेव विशेषं पुनःशब्देन प्रत्याययति । वक्ष्यति हि "शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते । वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्" ॥ इति । काव्यार्थस्य सर्वजनसंवेद्यत्वाभावमनुपलम्भप्रमाणसिद्धमपि व्युत्थितं प्रति प्रमाणान्तरेण दर्शयति—**न हीति** ॥ व्युत्पत्तिसंस्कृतमात्रगम्येनेत्यर्थः । काव्यवाक्यस्य लौकिकवाक्यान्तर्भावेऽपि 'नद्यास्तीरे फलानि सन्ति' इत्यादिकं काव्यव्यपदेशानाघ्रातमत्र वाक्यजातं लौकिकवाक्यशब्देन गृहीतम् ॥ **तदभावादिति** ॥ काव्यव्यपदेशविषयत्वाभावादित्यर्थः । यदिदं शब्दस्यानात्मत्वम्, अर्थस्य सहृदयहृदयैकसंवेद्यत्वेन काव्यात्मीभावयोग्यत्वं चास्माभिरुपपादितं तत् "अर्थः सहृदयश्लाघ्यः" इति प[पा]देन दर्शितमित्याह—**तदाहेति** ॥ यदि काव्यार्थस्येतरवाक्यार्थवदखिलजनसंवेद्यता स्यात्, तदा यथोक्तलक्षणसहृदयवदविशेषेण तस्य सकलजनश्लाघ्यतापि स्यात् ; न चैवमुपलभामहे ; तेनेतरवाक्यार्थवैलक्षण्येन काव्यार्थस्य सहृदयैकसंवेद्यत्वं सिद्धमित्यर्थः । भवतु सहृदयैकसंवेद्यत्वं तैरेव श्लाघ्यत्वमपि, तथापि कथमस्य आत्मत्वमित्यपेक्षायामुक्तादेव सहृदयश्लाघ्यत्वाद्धेतोस्तत्समर्थनार्थं तस्य हेयोपादेयांशद्वयवत्तामपोद्धारबुद्धिगम्यामुत्सूत्रयति—**स एक एवेति** ॥ स इति सहृदयश्लाघ्यभूतः ॥ **एक एवेति** ॥ प्रथमानः सन्निति शेषः । न हि गवाश्वादिवदात्यन्तिको भेदो वाच्यव्यङ्ग्ययोः धर्मधर्मिभावन्यायस्य समनन्तरमेव वक्ष्यमाणत्वात् इति भावः । कथमेकस्यैव सतोऽनेकत्वलक्षणो विभाग इत्याशङ्क्य ऐक्यसहिष्णुं विभागं दर्शयति—**द्विशाख-**

१. ग. 'व्यवहारः'	२. क. ख. '-भियुज्यते'

## लोचनम्

कस्मैचित् सहृदया:[1] श्लाघन्ते । तद्भवितव्यं तत्र[2] केनचिद्विशेषेण । यो[3] विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसंवलनाविमोहितहृदयैस्तु

## कौमुदी

**तयेति** ॥ शाखाशब्दोंऽशवचनः ह्यंशकतयेत्यर्थः । अत एव वक्ष्यति "ह्यंशत्वे सति" इत्यादि ॥ **विभज्यत इति** ॥ विभक्ततयोल्लिख्यत इत्यर्थः । अविभक्ततयावभासमानस्य कथं विभक्ततया परिच्छित्तिः इत्यत उक्तम्—**विभागबुद्ध्येति** ॥ विभागमुट्टङ्कयन्त्या यौक्तिक्या बुद्ध्या इत्यर्थः । तादृश्या बुद्धेरनुपलम्भात् , कथं तद्विभाग इत्याशङ्क्य विवेकासमर्थानामेव तदनुपलब्धिः न तु तत्समर्थानामित्याह—**विवेकिभिरिति** ॥ तमेव विभागप्रकारं विवृणोति—**तथा हीति** ॥ द्विविधो ह्यर्थः—काव्यार्थः तदितरवाक्यार्थश्च । तयोरुभयोरप्यर्थ्यते गम्यते ज्ञायत इति यदर्थरूपत्वं तत्तावत् समानमेव । सहृदयश्लाघ्यत्वतद्राहित्यकृतस्तु तयोर्विशेषो दृश्यमानो नापलापमर्हति । तस्यास्य विशेषस्य हेतुविशेषमन्तरेणाघटमानत्वादन्यथानुपपत्तिप्रसूतार्थापत्तिप्रमाणसिद्धोऽयं काव्यार्थगतो विशेषो धर्मरूपः ; स प्रतीयमानाख्योंऽशः, यत्संवलनादश्लाघ्योऽपि वाच्यांशः श्लाघ्यतां प्रतिपन्नः दहनसंवलनादिव अयःपिण्डो दहनव्यवहारगोचरताम् ; स एव तु काव्यस्यात्मेति विवेचनकुशलैर्निर्णीतः । कथमस्यात्मत्वमित्यपेक्षायामात्मगुणयोगात् गौणोऽयं वाद इत्याह—**विशेषहेतुत्वादिति** ॥ आत्मनो हि स्वसान्निध्यविशेषमात्रेण जडात्मकघटादिविलक्षणतया सशिरस्कदेहपिण्डेषु स्वचैतन्यारोपणमुखेनात्मभावप्रतीतिहेतुत्वम् अत एव तच्छ्लाघ्यतापादकत्वं च प्रसिद्धम् । एवं प्रतीयमानभागोऽपीतरवाक्यार्थापेक्षया कमप्यतिशयं काव्यार्थे संपादयतीत्यात्मगुणयोगादात्मत्वं विवेकिभिरुपपत्त्या निर्धार्यत इत्यर्थः । कुतस्तर्हि सर्वेषां तथा न प्रतीतिः प्रत्युत विमतिश्चेत्याशङ्कायां तदप्यात्माप्रतीतिविपरीतप्रतीतिवदेवेति हेतुप्रदर्शनपूर्वकमाह—**वाच्येति** ॥ प्रतीयमानस्य वाच्यसंवलना

१. क. ख. 'सहृदयः श्लाघते'
२. क. ख. 'तत्र' नास्ति ।
३. ग. 'यतो'
४. क. ख. 'संकल-'

## लोचनम्

तत्पृथग्भावे विप्रतिपद्यते चार्वाकैरिवात्मपृथग्भावे[1] । अत एवार्थ[2] इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायापोद्धार[3]दृशा तस्य द्वौ भेदावंशावित्युक्तम्, न तु द्वावप्यात्मानौ काव्यस्येति[4] । कारिकांगतं[5]

## कौमुदी

तावत्प्रसिद्धा लावण्यदृष्टान्तेन । ततश्च वाच्यस्य शरीरत्वं दर्शितं भवति । तया निरूढनिबिडतरताद्रूप्यभावनावासनाधिरूढया विमोहितं विवेकसामर्थ्यविरहितं हृदयं कृतं येषां तथाभूतैः ॥ **पृथग्भाव इति** ॥ तस्य प्रतीयमानात्मनो वाच्याच्छरीरभूतात्पृथग्भावे । व्यतिरिक्तत्वं विषयीकृत्योक्तमर्थं ग्रन्थारूढं करोति—**अत एवेति** ॥ यस्माद्देहात्मन्यायेन वाच्यव्यङ्ग्ययोः व्यवस्थानम्, विवेचकाविवेचकजनदृष्टिद्वयानुरोधिनी च तत्पृथग्भावादिपरिच्छित्तिः अत एवेत्यर्थः ॥ **एकतया** ॥ अविवेचकजनदृष्ट्यनुरोधिन्या अविभागबुद्ध्योपस्थापितेन वाच्यव्यङ्ग्यांशभेदद्वयावधीरणेन काव्यार्थ इत्येतावन्मात्ररूपेण अखण्डात्मनेत्यर्थः ॥ **उपक्रम्येति** ॥ एकस्यैवार्थस्य काव्यात्मतया व्यवस्थानमनुवादभागे विनिवेश्येत्यर्थः । अपोद्धारदृक् प्रागुक्तलक्षणा विभागबुद्धिः । भेदावित्यस्य व्याख्या अंशाविति, अत्यन्तभेदप्रतिपत्तिनिरासार्थम् । ननु अविभक्तबुद्धावेकत्वेनावभासमानस्य कथं विभागबुद्धौ द्व्यंशत्वेनावभासः ? द्व्यंशत्वप्रयोजकपरामर्शमुखेन हि विभागबुद्धेरंशद्वयोल्लेखित्वं भवेत् ; न च तत्प्रयोजकं किञ्चिदत्र कथितमित्यत उक्तम्—**विशेषणद्वारा हेतुमभिधायेति** ॥ लौकिकवैदिकवाक्यार्थाधिकस्य सहृदयश्लाघ्यत्वलक्षणस्य काव्यार्थगतस्य धर्मस्य दर्शनात् "तुल्येऽर्थरूपत्वे" इत्युक्तदिशा तदर्थस्येतरवाक्यार्थविलक्षणं द्व्यंशत्वं गम्यते । तत्र यो वाच्यभागः स पूर्वमात्मत्वेन व्यवस्थितोऽपि प्रसिद्धशरीरवच्छ्लाघाविषयत्वाच्छरीरभागनिवेश्येवेति निगम्यते—यस्तु प्रतीयमानभागः स आत्मवदतिशयसमर्पकत्वेन सारतया स्थितत्वादात्मेति । सहृदयश्लाघ्यत्वहेतुबलादेवायमर्थः सर्वोऽपि निरूपणायां लभ्यत इत्यर्थः ॥ **न तु द्वावपीति** ॥ अपि तु एक एव प्रतीयमानोंऽश इत्यर्थः ।

१. क. ख. 'भावो विप्रतिपद्यते चार्वाकैरिवात्मपृथग्भावः'
घ. 'भावे विवृतिरापद्येत'
२. ग. 'एवार्थतया'
३. क. ख. '-द्धारण-'
४. क. ख. 'काव्यात्मेति'
ग. 'काव्यस्य । काव्यात्मेति'
५. क. ख. 'कारिकाभागगतं'

ध्वन्यालोकः

काव्यस्य हि ललितोचितसंनिवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ ।

लोचनम्

काव्यशब्दं व्याकर्तुमाह—**काव्यस्य हीति** ॥ ललितशब्देन गुणालङ्कारानुग्रहमाह । उचितशब्देन रसविषयमेवौचित्यं भवतीति दर्शयन् रसध्वनेः जीवितत्वं

कौमुदी

अत्रेयं कारिकाक्षरयोजना—यः सहृदयश्लाघ्योऽर्थः काव्यात्मेति लोके व्यवस्थितः तादृशस्य तस्य द्वावंशौ स्मृताविति । अत्राविभागबुद्धिगम्याकारेण प्रसिद्धस्यार्थस्य पूर्वार्धे यच्छब्देनानुवादः, उत्तरार्धेन तु विभक्तबुद्धिगम्याकारेण प्रसिद्धसहृदयश्लाघ्यत्वहेतुनिर्देशपूर्वकं विधानमिति विवेकः । अथवा यः सहृदयश्लाघ्योऽर्थः तस्य द्वौ भेदौ वाच्यप्रतीयमानाख्यौ ; तत्र प्रतीयमानांशः काव्यात्मेति व्यवस्थित इति ॥ वृत्तिग्रन्थोऽप्येवमेव योज्यः । ललितोचितसन्निवेशचारुण इति पदं न व्यवच्छेदकतया काव्यविशेषणम्, स्वरूपप्रतीतिहेतुतयैवेति नानुपयोगित्वमाशङ्कनीयमित्याह—**काव्यशब्दं व्याकर्तुमिति** ॥ काव्यशब्दवाच्यस्वरूपं प्रदर्शयितुमिति यावत् । ननु गुणालंकारकृतसौन्दर्यस्य व्यञ्जकत्वस्य चानेन पदेनाप्रतिपादनात् कथं स्वरूपप्रतिपादनपरत्वमपीत्याशङ्क्य ललितोचितपदाभ्यां तत्प्रदर्शनाददोष इत्याह—**ललितशब्देनेति** ॥ शब्दार्थसन्निवेशललितत्वं नाम गुणाभिसम्बन्धकृतं सौन्दर्यमत्र विवक्षितम्, स्वरूपसंघटनापर्यवसितस्य तस्यान्यतोऽसंभवात् । विशिष्टरसाभिव्यञ्जनसामर्थ्यमेवौचित्यं नाम, "प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा" इति वक्ष्यमाणत्वात् । ततश्च न केवलं रसादिव्यञ्जनसामर्थ्यमेवोचितशब्देन दर्शितम्, यावत्तन्मुखेन तस्यैव काव्यजीवितत्वं न वस्त्वलंकारध्वन्योरित्यपि दर्शितं भवति । तयोर्हि रसध्वनिपर्यवसायितयैव न मुख्यमात्मत्वमिति वक्ष्यति । कथमुचितशब्देन तत्प्रदर्शनमित्याह—

१. क. ख. 'स्मृतः'
२. क. ख. 'यः' नास्ति ।
३. ग. 'मिलित-'
४. क. ख. '-कारग्रहण-'
५. घ. '-चित्यं शब्दं'

## लोचनम्

सूचयति[1] । तदभावे हि किमपेक्षयेदमौचित्यं[2] नाम सर्वत्रोद्घोष्यत इति[3] भावः । योऽर्थ इति यदा अनुवदन् परेणाप्येतत्तावदुपगतमिति[4] दर्शयति[5] । तस्येत्यादिना तदभ्युपगम एव[6] व्यंशत्वे[7] सत्युपपद्यत इति दर्शयति । तेन यदुक्तम् '[8]चारुत्व-हेतुत्वात् गुणालङ्कारव्यतिरिक्तो न ध्वनिः' इति, तत्र ध्वनेरात्मरूपत्वाद्धेतुरसिद्ध[9] इति दर्शितम् । [10]न ह्यात्मा चारुत्वहेतुः देहस्येति भवति । अथाप्येवं स्यात्, तथापि

## कौमुदी

**तदभावे हीति** ॥ रसध्वनेरभावे ॥ **सर्वत्रेति** ॥ लक्षणग्रन्थेषु ॥ ननु अर्थस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदावित्येव वक्तव्ये योऽर्थस्तस्य भेदाविति यच्छब्देनानुवादः किमभिप्राय इत्याशङ्क्य तत्फलमाह—**योऽर्थ इति** ॥ **यदा** ॥ यच्छब्देन । सहृदयश्लाघ्यत्वं हेतुरुक्त इत्याह—**तस्येत्यादिनेति** ॥ तदभ्युपगमः सहृदयश्लाघ्यत्वाभ्युपगमः । एवं ध्वनेरात्मत्वप्रदर्शनपरां कारिकां तद्वृत्तिं च व्याख्याय तयोरेवाभाववाद्युक्तहेत्वाभासीकरणेऽभिप्रायमाह—**तेनेति** ॥ काव्यार्थस्य व्यंशत्वाभिधानपूर्वकं प्रतीयमानांशस्य काव्यात्मत्वाभिधानेनेत्यर्थः । तेन इति दर्शित-मित्यन्वयः । ध्वनिर्गुणालंकारव्यतिरिक्तो न भवति, चारुत्वहेतुत्वात्—इत्यनुमाने ध्वनेरात्मत्वेनाभ्युपगमात् आत्मनश्च कटककुण्डलादिवच्छरीरशोभाहेतुत्वस्याप्रसिद्धत्वादसिद्धो हेतुरित्यर्थः । ननु प्रतीयमानार्थस्य वाच्यार्थश्लाघातिशयहेतुत्वादात्मत्वमिदानीमेव व्यवस्था-पितवता भवतैव चारुत्वहेतुत्वमात्मनोऽप्यङ्गीकृतमेवेति कुतोऽसिद्धत्वमित्याशङ्क्याभ्युप-गम्याह—**अथाप्येवं स्यादिति** ॥ एवमिति देहस्य चारुत्वहेतुरात्मेत्येवमित्यर्थः । यदि यथाकथञ्चिदात्मत्वेऽपि चारुत्वहेतुत्वं प्रतीयमानाख्यस्य ध्वनेः स्यात् तर्हि तद्वदेव तन्नित्यसंवलनोपाधिकं वाच्यस्यापि चारुत्वहेतुत्वं दुर्निवारोपनिपातमिति गुणालंकारव्यतिरिक्तत्वेन विपक्षभूते वाच्यार्थे चारुत्वहेतुत्वहेतोः वर्तमानत्वा-

१. ग. 'सूत्रयति'
२. घ. '-क्षयेद[म]नौ'
३. ग. 'इत्येवेति'
४. क. ख. ग. 'अभ्युप-'
५. ङ. 'तदभावे' इत्यादि 'दर्शयति' इत्यन्तं नास्ति ।
६. घ. '-गतमेव'
७. क. ख. ग. 'बुद्धयंशत्वे'
८. क. ख. 'चारुत्वहेतुत्वाद्धेतुरसिद्ध इति दर्शितम्'
९. क. ख. ग. '-स्वरूप-'
१०. ग. 'न तु'

ध्वन्यालोकः

**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।**

**बहुधा व्याकृतः सोऽन्यैः ................**

काव्यलक्ष्मविधायिभिः भट्टोद्भटप्रभृतिभिः[1] ।

**ततो नेह प्रतन्यते ॥ ३ ॥**

केवलमनूद्यते यथोपयोगमिति ।

लोचनम्

वाच्येनानैकान्तिको हेतुः ; न[2] ह्यलङ्कार्य एवालङ्कारः, गुणी वा[3] गुणः ; एतदर्थमपि[4] वाच्यांशोपक्षेपः । अत एव वक्ष्यति "वाच्यः प्रसिद्धः" इति ॥

**तत्रेति** ॥ [5]द्व्यंशकत्वे सत्यपीत्यर्थः ॥ **प्रसिद्ध[6] इति** ॥ वनितावदनोद्यानेन्दूदयादि-

कौमुदी

दनैकान्तिकत्वापत्तिरित्यर्थः । वाच्यस्य गुणादिव्यतिरिक्तत्वमुक्तानैकान्तिकत्वसिद्ध्यर्थं समर्थयते—**न हीति** । अलंकार्यत्वादलंकारव्यतिरिक्तत्वं गुणित्वाच्च गुणव्यतिरिक्तत्वं वाच्यस्य स्वध्यवसानमित्यर्थः । अनैकान्तिकत्वदोषोद्भावनं चैतत् कारिकायामेव वाच्यांशोपक्षेपमुखेन दर्शितत्वान्नोत्सूत्रमेवास्माभिरत्र कृतमित्याशयेनाह—**एतदर्थमपीति** ॥ न केवलं ध्वनेः भूमिकार्थमेव अनैकान्तिकत्वप्रदर्शनार्थमपीत्यर्थः । उत्तरकारिकायां वाच्यस्य प्रसिद्धत्वोक्तिरप्येतदभिप्रायेत्याह—**अत एवेति** ॥

पूर्वकारिकायां प्रतीयमानोंऽश एव काव्यस्यात्मेति पार्यन्तिकोऽर्थ उक्तः ; ततस्तत्रेति तत्परामर्शकता प्रतीयेत ; तद्व्युदासाय वाच्यव्यङ्ग्यरूपांशद्वयपरामर्शकतामाह—**द्व्यंशकत्व इति** ॥ न च पूर्ववन्निर्धारणसप्तम्येषा, किन्तु सतिसप्तमीत्याह—**सतीति** ॥ द्वयोरंशयोः सतोरित्यर्थः । द्वयोरंशयोः सतोरेकस्यैव प्रतिपादनं विरुद्धमिति अपिना

१. क. ख. 'भ···भिः' नास्ति ।
२. घ. 'सः'
३. क. ख. 'एव'
४. क. ख. 'एतदर्थे'
५. क. ख. ग. ङ. च. 'द्व्यंशत्वे'
६. घ. ङ. च. 'प्रसिद्धवनिता'

ध्वन्यालोकः

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति[1] लावण्यमिवाङ्गनासु ॥ ४ ॥**

लोचनम्

वल्लौकिक[2] एवेत्यर्थः । उपमादिभिः प्रकारैः स व्याकृतो बहुधा इति सङ्गतिः । अन्यैरिति कारिकाभागं काव्येत्यादिना व्याचष्टे । "ततो नेह प्रतन्यते" इति[3] विशेषप्रतिषेधेन शेषाभ्यनुज्ञा इति दर्शयति—**केवलमित्यादिना** ॥

पुनःशब्दो [4]वाच्यांशाद्विशेषद्योतकः ॥ **अन्यदेव वस्त्विति** ॥ तद्व्यतिरिक्तं

कौमुदी

दर्शितम् । अत्र वाच्यस्याप्रतिपादने हेतुः प्रसिद्धत्वम् । तद्व्यङ्ग्यस्यापि प्रसिद्धत्वाभ्युपगमादगमकमित्याशङ्क्याह—**लौकिक एवेति** ॥ व्यङ्ग्यस्य हि रसात्मनो मुख्यस्य अलौकिकत्वं वितनिष्यत इति भावः । आपातप्रतीयमानं प्रकारैः प्रसिद्ध इति पूर्वशेषतयान्वयं प्रतिषेधन्नाह—**उपमादिभिरिति** ॥ स्वरूपेण व्याकरणानुपपत्तेः विधेयांशनिवेशितया संगतिर्युक्तेत्यर्थः । काव्येत्यादेः वृत्तसम्बन्धात् कारिकान्तःपातित्वशङ्कामपाकर्तुमाह—**अन्यैरितीत्यादि** ॥ **विशेषप्रतिषेधेनेति** ॥ अज्ञातज्ञापनलक्षणं प्रतिपादनं हि प्रतननम् ; तस्य विशेषरूपस्य प्रतिषेधे कृते तत्प्रतिद्वन्द्वितया परिशिष्टमनुवदनमनुज्ञातं भवति, यथा दक्षिणेनाक्ष्णा न पश्यतीत्युक्ते सव्येन पश्यतीति तद्वदित्यर्थः । अनुवादस्य प्रयोजनविशेषाक्षिप्ततयोपादानाददोषावहतामाह—**यथोपयोगमिति** ॥

प्रतीयमानमित्यादिकारिकाभिप्रायकथनेनैव "स ह्यर्थः" इत्यतः प्राक्तनस्तद्व्याख्यानरूपो वृत्तिग्रन्थोऽपि प्रदर्शिताभिप्रायो भवतीत्यभिप्रायेण व्याचष्टे—**पुनःशब्द इति** ॥ **वाच्यांशादिति** ॥ स खल्वत्र प्रकृत इति भावः । अन्यदित्येतावता भेदे सिद्धेऽपि यदेवकारग्रहणं तत् देहात्मनोऽपि वा भेदाभिमाने [देहात्मनोरिवाभेदाभिमाने]

१. ग. 'आभाति'
२. घ. ङ. '-वत्' नास्ति ।
३. घ. ङ. च. 'इति' नास्ति ।
४. क. ख. च. 'वाच्याद्विशेष-'

## लोचनम्

सा[1]रभूतं चेत्यर्थः । म[2]हाकवीनामिति बहुवचनमशेषविषयव्या[3]पकत्वमाह । एतदभिधास्यमानप्रतीयमानानुप्राणितकाव्यनिर्माणनिपुणप्रतिभाभाजनत्वेनैव महाकविव्यपदेशो भवतीति भावः । [4]यदेवंविधमस्ति तद्भाति[5]; न ह्यत्य[6]न्तासतो भा[7]नमुपपन्नम्;

## कौमुदी

सत्यपि प्रत्युतात्यन्तिकभेदसद्भावप्रत्यायनार्थमित्युक्तं तद्व्यतिरिक्तत्वमवस्तुनोऽप्यस्तीति तद्व्यावृत्त्यर्थतया वस्तुशब्दोऽयं तद्विलक्षण[असद्विलक्षण]समानार्थनीलाद्यर्थवाचितया प्रयुक्त एव—इह "क्रिया हि वस्तूपहिता प्रसीदति" इत्यादाविव तद्विशेषभूतसारत्वादिधर्मान्तरपरिणतधर्मिस्वरूपपरः—इत्याशयेनाह—**सारभूतमिति** ॥ अयमेवार्थश्चकारेणापि दर्शितः । महाकवीनामिति बहुवचनस्वीकृतमभिप्रायमाह—**बहुवचनमिति** ॥ **व्यापकत्वम्** ॥ प्रतीयमानस्येति शेषः । प्रकृत्यंशस्वीकृतं प्रदर्शयति—**एतदिति** ॥ एतस्मिन् ध्वनिशास्त्रेऽभिधास्यमानं यत्प्रतीयमानम्, यदि वा एतेनाभिधास्यमानेनेति । कथं प्रतीयमानस्यार्थस्य सद्भावः प्रमाणमन्तरेणावगन्तुं शक्यः ? न चात्र किञ्चित् प्रमाणमुपन्यस्यमुपलभ्यत इत्याशङ्कयानुपलम्भमसिद्धयत् प्रमाणमुपन्यस्यति—**यदेवंविधमिति** ॥ एवंविधत्वं व्यतिरिक्तत्वं सारभूतत्वं च । अत्र च प्रतीयमानाख्यं वस्त्वस्तीति विधाय तस्य भासमानत्वोपदर्शनमुखेन भासमानत्वसत्त्वयोः व्याप्तिप्रदर्शनद्वारा भासमानत्वलिङ्गकं सत्त्वविषयमनुमानं प्रमाणमुपन्यस्तम्; तत्र हेतोरसिद्धत्वशङ्कापाकरणार्थं यच्छब्देन साध्यरूपं सत्त्वमनूद्य भासमानत्वहेतुं साधयति—**तद्भातीति** ॥ ननु [न तु] भातीति स्वसंवेदनसिद्धत्वाद्धेत्वसिद्धिरनुपलब्धविरुद्धेति भावः । यदाहुः—"इदं भाति न भातीति संविद्विप्रतिपत्तिषु । परप्रत्यायने पुंसां शरणं शपथोक्तयः ॥" इति । भवतु नाम भासमानत्वम्, तावता कथं सत्त्वसिद्धिरित्यत उक्तम्—**न हीति** ॥ हिश्चार्थे । नन्वसतो न भानमिति नैकान्तिकमदः, शुक्तिकादावसतोऽपि रजतादेर्भानदर्शनादित्याशङ्कय नासत्त्वमात्रमभानप्रयोजकम्, किन्तु आत्यन्तिकमसत्त्वम्;

१. ग. '-क्तासार-'
 घ. 'सारसार-'
२. ग. 'महा-' नास्ति ।
३. क. ख. 'व्यापकमाह'
४. ग. 'यद्येवं'
५. ग. 'भवति'
६. ङ. '-अत्यन्त-' नास्ति ।
७. क. ख. 'मानं'
 ग. 'भागं'

लोचनम्

रजताद्यपि नात्यन्तमसद्भाति ; अनेन सत्त्वप्रयुक्तं तावद्भानमिति भानात्[1] सत्त्वमवगम्यते ; तेन[2] यद्भाति तदस्ति तथा—इत्युक्तं भवति । तेनायं प्रयोगः[3]—प्रसिद्धं वाच्यं[4] धर्मि प्रतीयमानेन व्यतिरिक्तेन तद्वत्,

कौमुदी

न च रजतादेरेव तदस्ति, कान्ताकरनगरादावन्यत्र विद्यमानस्यैव शुक्तिकादौ संसर्गमात्रेणारोप्यमाणत्वादित्याह—**रजताद्यपीति** ॥ **भाति** ॥ शुक्तिकादाविति शेषः । अन्यथाख्यातिमतोपजीवनेन चैषोक्तिरिति तन्मतानुसारिभिरुक्ता युक्तय इहानुसरणीयाः प्रस्तुतानुपयुज्यमानदर्शनान्तरलेखनेन सहृदयजनमनःखेदसंपादनपरिभयादिह न लिखिताः । कारिकायाः प्रतीयमानसत्तासाधकानुमानपर्यवसायितां दर्शयति—**अनेनेति** ॥ उक्तन्यायानुगृहीतेन अस्तीति भातीति च कारिकाखण्डलकेनेत्यर्थः ॥ **तावदिति** ॥ न कस्याप्यत्र विमतिरित्यर्थः । तेनेत्यस्य [अनेनेत्यस्य] उक्तं भवतीत्यनेन संबन्धः ॥ **सत्त्वप्रयुक्तमिति** ॥ सत्त्वस्य भानोत्पत्तौ हेतुत्वात् तत्प्रयुक्तत्वम् ; यस्मात्सत्त्वकार्यभूतं भानं तस्माद्धेतोः धूमाद्धूमध्वजवत् कारणतया भानात् सत्त्वमवगम्यत इत्याह—**इतीति** ॥ अस्तु भानात् सत्त्वावगतिः, तथापि किमित्यत्राह—**तेनेति** ॥ भानात् सत्त्वावगमेन हेतुनेत्यर्थः ॥ **तथेति** ॥ यथा भाति तथा तद्वस्तु भवत्येवेत्यर्थः । एवं सत्त्वावभासमानत्वयोः व्याप्तिं कारिकार्थभूतां प्रदर्श्य तयोरेवाभिप्रेतमनुमानं प्रकटीकरोति—**तेनेति** ॥ यस्माद्भानसत्त्वयोरस्त्यविनाभावसम्बन्धस्ततो हेतोरित्यर्थः । अयं वक्ष्यमाणप्रकारः ; प्रयुज्यत इति वाक्यरचनयाभिधीयत इति परार्थानुमानं प्रयोग इत्युच्यते ; प्रयोगार्थ इति पाठे प्रयोगो वाक्यं तस्यार्थोऽनुमानम् ; अथवा अनुमानस्य प्रयोग इत्थमित्यर्थः ; प्रयोगोऽनुमानं तद्रूपोऽर्थः कारिकावृत्त्योरभिधेय इति वा । धर्मित्वे हेतुः—प्रसिद्धमिति ; यदाह—"सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयते" इति । ननु वाच्यस्यैव प्रतीयमानस्वरूपत्वमभ्युपगच्छतः स्वरूपभूतेन प्रतीयमानेन तद्वत्त्वं सिद्धमेवेति सिद्धसाधनत्वमुद्धर्तुमुक्तम्—**व्यतिरिक्तेनेति** ॥ **तथेति** ॥ व्यतिरिक्त-

१. क. ख. 'भासनात्मत्वं' ३. क. ख. ग. घ. ङ. च. 'प्रयोगार्थः'
२. ग. 'अतो' ४. घ. 'वाच्यधर्मप्र-'

लोचनम्

तथाभासमानत्वात्, लावण्योपेताङ्गनाङ्गवत्[1]। प्रसिद्धशब्दस्य [2]सर्वप्रतीतत्वमलङ्कृतत्वं चार्थः। यत्तदिति सर्वनामसमुदायः चमत्कारसारताप्रकटीकरणार्थमव्यपदेश्यताम्[3] अन्योन्यसंवलनाकृतं चाव्यतिरेकभ्रमं[4] दृष्टान्तदार्ष्टान्तिकयोर्दर्शयति। एतच्च किमर्पीत्यनेन[5] व्याचष्टे। लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं[6]

कौमुदी

प्रतीयमानवत्तया। प्रसिद्धशब्देन "त्रिभुवने सिद्धाः प्रसिद्धास्ततः" इत्यादाविव सर्वजनप्रतीतत्वं कङ्कणादिविभूषणजनितशोभाविशेषशालित्वं च विवक्षितम्, संभवादुपयोगाच्चेत्याह —**प्रसिद्धशब्दस्येति**॥ करचरणाद्यवयवव्यतिरिक्तत्वं भूषणशोभाया अपि समानमिति ततोऽपि लावण्यस्य व्यतिरेकं परामर्शपदवीमारोपयितुमलंकृतत्वमपि ग्रहीतव्यमिति भावः। अत एव वृत्तौ वाशब्दः समुच्चयार्थ इति शिक्षितम्॥ ननु यद्वि प्रसिद्धावयवव्यतिरिक्तमिति वा [एव] वक्तव्ये यत्तदिति वचनस्योपयोगमाह —**सर्वनामेति**॥ समुदायशब्देनैतदाह—न पृथक् पृथगेवैते स्वार्थं प्रत्याययतः, किन्तु समासादितसमुदायभावे एव; न च 'अपि च' इत्यादिवत् एकार्थत्वलक्षणं समुदायरूपत्वम्, किं तु संभूयकारित्वलक्षणमिति॥ **अव्यपदेश्यतामिति**॥ इदमीदृशमित्यादिवदभिवदनं व्यपदेशः; तद्विषयत्वानर्हतां यच्छब्दसहितस्तच्छब्दो दर्शयत्यनुभवैकगम्यत्वप्रत्यायनद्वारेणेत्यर्थः। किमर्थं तत्प्रदर्शनमित्यत उक्तम्—**चमत्कारेति**॥ रसादेः प्रतीयमानार्थस्याङ्गनालावण्यस्य चासाधारणस्वरूपप्रदर्शनार्थमित्यर्थः। वक्ष्यति हि "चर्व्यमाणतासारः" इति॥ एतत्प्रदर्शनद्वारान्यदपि प्रदर्शितमित्याह—**अन्योन्येति**॥ उक्तं हि प्राक् "वाच्यसंवलनाविमोहितहृदयैः" इति ऐक्यभूतमिति [ऐक्यं भ्रान्तमिति।] दार्ष्टान्तिके वाच्यप्रतीयमानयोः, दृष्टान्तेऽङ्गलावण्ययोरिति विभागः। उक्तार्थस्य वृत्तावनुद्भिन्नत्वाशङ्कां शमयितुमाह—**एतच्चेति**॥ दृष्टान्तस्य साध्यवैकल्यशङ्कां शिथिलयितुमाह—**लावण्यं हीति**॥ हिः प्रसिद्धौ; नामेत्यपि; तेन प्रसिद्धयति...योऽवगमितः। अस्तु विशिष्टसन्निवेशावयवसमुदाय एव लावण्यं न धर्मान्तरमिति, तत्राह—**अवयवव्यतिरिक्तमिति**॥ समुदायस्य समुदायिव्यतिरेकेणानि-

१. घ. '-ङ्गानामङ्गवत्-'
२. क. ख. 'शब्दप्रती-'
३. क. ख. ग. '-देश्यत्वम्-'
४. घ. 'चाप्यतिरेकिभूमं' क. ख. 'चाव्यतिरेकि भ्रमं'
५. घ. 'इत्यादिना'
६. ग. '-व्यङ्ग्य इवावयव-' घ. '-व्यङ्ग्यावयव-'

ध्वन्यालोकः

प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्सहृदय-[1]हृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलंकृतेभ्यः प्रतीतेभ्यो वा[2]वयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु ; यथा ह्यङ्गनासु लावण्यं पृ[3]थक्पृथङ्निर्वर्ण्यमान-

लोचनम्

धर्मा[4]न्तरमेव ; न चावयवानामेव निर्दोषता वा[5] भूषणयोगो वा[6] लावण्यम् । पृ[7]थक्पृथङ्निर्वर्ण्यमानका[8]णादिदोषशून्यशरीरावयवयोगिन्यामलङ्कृतायामपि 'लावण्यशून्येयम्' इति, अतथाभूतायामपि कस्यांचित् 'लावण्यामृतचन्द्रिकेयम्' इति च सहृदयानां व्यवहारात् ।

कौमुदी

रूपणादित्यर्थः । तथाप्यवयवव्यतिरेके किं प्रमाणमित्यत उक्तम्---**अवयव-संस्थानाभिव्यङ्ग्यमिति** ।। संस्थानं विशिष्टसन्निवेशः, तेनाभिव्यङ्ग्यं निरूपणीयम् । विमतम् अवयवव्यतिरेकि भवितुमर्हति, तत्सन्निवेशाभिव्यङ्ग्यत्वात् आकृतिवदिति न साध्यवैकल्यं दृष्टान्तस्येति भावः ।। **धर्मान्तरम्** ।। धर्मविशेषः । अस्यैतदनुवृत्त-प्रत्ययव्यवहारादर्शनात् नाकृतिसमानयोगक्षेमत्वं शक्यावसानम् ; तत्प्रतीतेश्चावयव-निर्दोषत्वगुणवत्वान्यतरविषयतयान्यथासिद्धेर्न तावन्मात्रे व्यतिरिक्तधर्मान्तरसिद्धिरित्यत आह---**न चावयवानामिति** ।। अन्वयव्यतिरेकावगम्यं हि तद्व्यवहारस्य तदुभया-न्यतरविषयत्वम् । तत्र निर्दोषत्वेऽलंकृतत्वे वा सत्यपि लावण्यव्यवहारादर्शनादन्वय-स्तावन्नास्तीत्युक्तम्---**पृथक्पृथगिति** ।। प्रत्येकं निर्वर्ण्यमानैः सद्भिः काणत्वादि-

उपलोचनम्

यद्यपि 'अपृथक्पृथङ्निर्वर्ण्यमानम्' इति ग. पुस्तके, 'पृथङ्निर्वर्ण्यमानम्' इति क. ख. पुस्तकयोश्च पाठः, तथापि 'पृथक्पृथङ्निर्वर्ण्यमाननिखिलावयवव्यतिरेकि' इत्येव पाठः लोचन-स्वरसानुरोधीत्युपरि निवेशितः ।।

१. क. ख. '-हृदय-' नास्ति ।
२. ख. 'चावयव-'
३. क. ख. 'पृथङ्निर्वर्ण्यमानं'
ग. 'अपृथक्पृथङ्निर्वर्ण्यमानं'
४. ग. 'धर्माक्रमं'
५. ङ. 'बा' नास्ति ।
६. ङ. 'बा' नास्ति ।
७. क. ख. ग. ङ. च. 'पृथाङ्नि-'
८. च. 'कारणा-'

ध्वन्यालोकः

**निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरम्, तद्वदेव**

लोचनम्

ननु लावण्यं तावत् व्यतिरिक्तं प्रथितम्; प्रतीयमानं किं तदित्येव[1] न जानीमः। दूरे[2] व्यतिरेकप्रथेति[3] तथाभासमानत्वमसिद्धो हेतुः इत्याशङ्क्य "स ह्यर्थः" इत्यादिना स्वरूपं तस्याभिधत्ते। सर्वेष्वेवेत्यादिना[4] च व्यतिरेकप्रथां साधयति। तत्र[5]

कौमुदी

दोषशून्यैरवयवैः संयुक्तायामपीति निर्दोषत्वान्वय उक्तः; अलंकृतायामपीति भूषणयोगान्वयः। अतथाभूतायामपीति तयोरुभयोर्व्यतिरेकः। 'लावण्यामृतचन्द्रिका' इति अश्लिष्टपरंपरितरूपकेण लावण्यस्य पारिपूर्ण्यमुपवर्णितम्। तथा च लक्षितम्—"प्लवमानमिवाभाति यदङ्गं कान्तिपाथसि। मनःप्रह्लादजननं तल्लावण्यमिति स्मृतम्॥" इति। स ह्यर्थ इत्यादिना यत्प्रतीयमानस्वरूपाभिधानं तस्य प्रागुक्तानुमानदूषणोद्धारपरत्वेनासङ्गतिं परिहरन्नवतारयति—**ननु लावण्यमिति**॥ विवेचकानामविवेचकानां च व्यतिरिक्ततया प्रसिद्धमित्यर्थः। तद्वदेव तर्हि प्रतीयमानमपि कुतो न प्रसिद्धमिति नेत्याह—**प्रतीयमानमिति**॥ यत्प्रतीयमानं वस्तु भवद्भिरुद्घोष्यते तदेव किं तदीयं स्वरूपमपि कीदृशम्—इति न जानीमः; व्यतिरेकस्य भेदस्य, प्रथा प्रतीतिस्तु दूर एव; धर्मिस्वरूपसिद्ध्यधीनत्वाद्धर्मसिद्धेस्तदसिद्धौ तद्धर्मभूतव्यतिरेकासिद्धिर्दूरनिरस्तावकाशेत्यर्थः। कथं वृत्तिकारेण वस्त्वलंकाररसभेदेनानेकप्रकारत्वमुक्तमित्यपेक्षायामुपपादयति—**तत्रेति**॥ प्रतीयमानस्यास्तित्वे स्थिते सतीत्यर्थः; तावच्छब्दः प्राथम्ये; काव्यशब्देन शब्दार्थयोरुभयोर्ग्रहणम्; तस्य यो व्यापारो व्यञ्जनात्मकस्तस्यैव केवलं विषयभूतः; अत एवालौकिको न पूर्ववल्लोकप्रसिद्धोऽपि स द्वितीयो भेद इत्यर्थः। भवत्वेवं ततः

१. ग. 'तदित्येवं'
२. क. ख. ग. 'दूरे तु'
३. क. ख. 'व्यतिरिक्त'-
४. ख. ग. 'सर्वेषु च'
५. ग. 'तत्तु'

ध्वन्यालोकः

**सोऽर्थः । स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकारा रसादयश्चेत्यनेकप्रभेद-**

लोचनम्

प्रतीयमानस्य तावत् द्वौ भेदौ, लौकिकः काव्यव्यापारगोचरश्च[1] । लौकिको[2] यः[3] स्वशब्दवाच्यतां[4] कदाचिदध्यशेते[5], स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्देनोच्यते[6] ; सोऽपि द्विविधः ; यः पूर्वं क्वापि वाक्यार्थेऽलङ्कारभावमुपमादिरूपतयान्वभूत्[7], इदानीं तु

कौमुदी

किमित्यपेक्षायामाद्यं भेदं लक्षयति—**लौकिक इति** ॥ स्वशब्द आत्मीयवचनः ; आत्मनो वाचको यः शब्दः तेन वाच्यताम् अभिधेयताम्, कदाचित् वाच्यत्वावस्थायाम् ; अत एव वाच्यत्वं व्यङ्ग्यत्वं च कालभेदाद्वस्तु भजते, न रसादिवद्व्यङ्ग्यत्वमात्रमिति दर्शितम् ; एवंविधो यः स लौकिक इत्यन्वयः । एवमाद्यभेदं प्रदर्श्य तद्विषयतां वृत्तिगतस्य वस्तुशब्दस्य दर्शयति— **स चेति** ॥ "भम धम्मिअ" इत्यादौ विध्यादेरेव व्यङ्ग्यत्वात् कथं तत्र वस्तुध्वनिव्यपदेश इत्याशङ्क्य वस्तुन एव प्रकाररूपत्वाद्विध्यादेर्न व्यपदेशान्तरापादकत्वमित्याह—**विधिनिषेधाद्यनेकप्रकार इति** ॥ किमर्थमत्र मात्रग्रहणमित्याशङ्क्य तस्य वस्तुविशेषभूतालंकारव्यवच्छेदकत्वेनोपयोगं दर्शयन् लौकिकावान्तरभेदत्वेनालंकारध्वनिं दर्शयति—**सोऽपीति** ॥ न केवलं प्रतीयमानस्यैव द्वैविध्यं तद्विशेषस्य लौकिकस्यापि द्वैविध्यमस्तीत्यर्थः । वार्तमानिकीं व्यङ्ग्यत्वावस्थामपेक्ष्य वाच्यत्वावस्था पूर्वमित्यनेनोच्यते । उक्तं हि प्राक् लौकिकस्यावस्थाद्वयम्—वाक्यार्थे रसादौ प्रधानतया, अलंकार्ये स्वयमुपमाद्यन्य-तरा[मा]त्मनालंकारभावमनुभूय पश्चादिदानीं व्यङ्ग्यत्वावस्थायामलंकारभावमपहायालं-कार्यतया प्राधान्येन वर्तमानः सन् वस्तुध्वनिरित्येव व्यपदेष्टुं योग्योऽपि अलंकारध्वनिरिति

१. ग. '.व्यवहारगोचरश्चेति-'
 ङ. 'व्यापारैक'
२. ग. 'लौकिको' नास्ति ।
३. ग. 'यः' नास्ति. ।
 घ. 'यथा'
४. क. ख. 'स्व-' नास्ति ।
५. क. ख. '-अधि शेते'
६. क. ख. '-भेदेन'
७. क. ख. 'वाक्यार्थो'
 ग. 'वाक्यालङ्कार-'

ध्वन्यालोकः

प्रभिन्नो दर्शयिष्यते । सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम् । तथा

लोचनम्

अ[1]नलङ्काररूप एवान्यत्र गुणीभावाभावात्[2], स पूर्वप्रत्यभिज्ञानबलात् अलङ्कारध्वनिरिति व्य[3]पदिश्यते ब्राह्मणश्रमणन्यायेन ; तद्रूपता[4]भावेन तूपलक्षितं वस्तुमात्रमुच्यते ; मात्रग्रहणेन हि रू[5]पान्तरं निराकृतम् । यस्तु[6] स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः

कौमुदी

व्यपदिश्यत इत्यर्थः ॥ **अन्यत्रेति** ॥ वाच्येऽर्थे । व्यपदेशान्तरावाप्तौ हेतुः—**पूर्वप्रत्यभिज्ञानबलादिति** ॥ पूर्वमतिचिरमनुभूतस्यालङ्कारभावस्य प्ररूढसुदृढसंस्कारद्वारेणेदानीं प्राधान्यावस्थायामपि वस्तुसामर्थ्यायातस्य स एवायमित्युत्कटतयानुसन्धीयमानत्वादित्यर्थः । नन्वेवं वस्तुशब्देनालङ्कारस्यापि संग्रहसंभवात् किमिति पृथक् ग्रहणमित्याशङ्क्य, वस्तुत्वे सत्यपि उक्तादेव विशेषात् पृथक् चमत्कारकारित्वात् अवान्तरभेदोपजीवनेन पृथक् तद्ग्रहणमिति प्रदर्शयन्—वस्तुमात्रमिति मात्रग्रहणमुक्ताभिप्रायगर्भितं वृत्तिगतमनुकूलयन्नाह—**तद्रूपताभावेनेति** ॥ अलङ्काररूपत्वाभावेन यदुपलक्षितं वस्तु तत् वस्तुध्वनिव्यपदेश्यम् ; अलङ्कारत्वविशिष्टं यद्वस्तु तत्प्रागुक्तनीत्यालङ्कारध्वनिः इत्येवमवान्तरभेदनिबन्धन एव तद्भेदः, न तु रसादिध्वनिवदात्यन्तिकभेदनिबन्धन इत्यर्थः । रूपान्तरं वस्तुरूपव्यतिरिक्तमलङ्कारत्वादिरूपम् । एवं वस्त्वलङ्कारध्वनिस्वरूपमभिधाय रसादयश्चेति वृत्त्युक्तं रसादिध्वनिस्वरूपं प्रदर्शयति—**यस्त्वित्यादिना** ॥ **स्वप्नेऽपीति** ॥ तत्र खल्वघटमानमपि घटामटतीति [घटमानतीति]प्रसिद्धमदः । यदाहुः—"खमपि खादति खण्डितमीक्षते निजशिरो नयनेन करार्पितम् । किमपि दुर्घटमस्य न विद्यते यदि विमूढमतिर्भवति स्वयम् ॥" इति । स्वशब्दवाच्यत्वाभावेऽपि लौकिकत्वं किं न स्यादिति नेत्याह—**न लौकिकव्यवहारपतित इति** ॥ हन्त तर्हि नभोनलिनादिवदसत्त्वमेव स्यात्, नालौकिक-

१. घ. 'ध्वन्य-'
२. क. ख. '-भावात्मपू-'
ग. '-भावादपू-'
घ. '-भावात् स्व-'
३. क. ख. 'अप-'
४. क. ख. 'रूपाभा-'
५. घ. च. 'स्वरूपा-'
६. घ. 'तु' नास्ति ।

लोचनम्

किन्तु शब्द[1]समर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासना[2]नुरागसुकुमारस्वसंविदानन्दचर्वणा[3]व्यापाररसनीयरूपो रसः, स[4] काव्यव्यापारैकगोचरो रसध्वनिरिति ; स च ध्वनिरेवेति स एव मुख्यतयात्मेति ॥

कौमुदी

त्वमिति नेत्याह—**किन्तु शब्दसमर्प्यमाणेति** ॥ शब्दैः गुणालङ्कारसुन्दरैः सम्यक्तया रसाभिव्यञ्जनसमुचितत्वेन अर्प्यमाणाः सहृदयहृदयमणिमुकुरोदरे संक्रामिता इत्यनेन विभावादेर्वास्तवत्वमप्रयोजकमिति दर्शितम् ; उपलक्षणमेतन्नटगतचतुर्विधाभिनयसामग्रीसमर्पणस्यापि ; न केवलं काव्यशब्दसमर्पणकृतमेव विभावादित्वं सहृदयहृदयसंवादकृतमपीत्युक्तम्—**हृदयसंवादसुन्दरेति** ॥ शब्दसमर्प्यमाणा हृदयसंवादसुन्दराश्च ये विभावानुभावास्तेषां समुचिताः, प्राक् स्थायित्वादेव जन्मन आरभ्य न ह्येतच्चित्तवृत्तिशून्यः प्राणी भवतीत्युक्तदिशा आत्मनि विशेषतो निविष्टा या रत्यादिवासनाः तासामुद्बोधद्वारकेणानुरागेण रञ्जनेन, सुकुमाराया रसचर्वणयोग्यतां गतायाः, स्वस्य चर्वयितुः, संवित् सम्यक् वेत्त्यनेनेति संविन्मनः, तस्य य आनन्दघनः चर्वणारूपो व्यापारस्तेन रसनीयमास्वादनीयं रूपं यस्य। यदाह मुनिः—“आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः” ॥ इति। “स काव्यव्यापारैकगोचरः” इत्यनेन विभागोद्देशे “काव्यव्यापारैकगोचरश्च” इति यदुक्तं तद्घटयति। इतिशब्दस्यानन्तरम् उच्यत इत्यनुषङ्गः। रसध्वनेरेव काव्यात्मत्वमिति दर्शयितुं वस्त्वलङ्कारध्वनिभ्यां विशेषमाह—**स चेति** ॥ चशब्दः तुशब्दस्यार्थे ; स रसादिः ध्वनिरेव भवति, न वाच्यादिरूपोऽपि ; इतरयोर्हि वाच्यत्वमपि कदाचिद्भवतीत्युक्तं प्राक्। ततः किमित्यत आह—**इति स एव मुख्यतयात्मेति** ॥ यस्मात्तस्य ध्वन्यात्मकत्वमेव न रूपान्तरसंबन्धोऽपि तस्मात्स एव काव्यस्यात्मा भवति, न वस्त्वलङ्कारध्वनी अपि ॥ ननु तयोरपि रसध्वनिपर्यवसायितया काव्यात्मत्वं स्थास्यति तत् कथं तदवध्रियत इत्यत उक्तम्—**मुख्यतयेति** ॥ औपचारिकमेवेतरयोरात्मत्वं न मुख्य-

१. घ. ‘शब्द’ नास्ति।
ग. ‘शब्दसमीक्ष्यमाण-’
२. क. ख. ‘समुदितप्राङ्निविष्ट-’
३. क. ख. च. ‘-चर्वण-’
४. क. ख. ‘स च’

## लोचनम्

यच्चोच्यते[1] भट्टनायकेन[2]—"अंशत्वं[3] न रूपता[4]", इति तत् वस्त्वलङ्कारध्वन्योरेव यदि नामोपालम्भः[5], रसध्वनिस्तु[6] तेनैवात्मतयाङ्गीकृतः, रसचर्वणात्मनः[7] तृतीयस्यांशस्याभिधा-भावनांशद्वयोत्तीर्णत्वेन[8] निर्णयात् ; वस्त्वलङ्कारध्वन्योः रसध्वनिपर्यन्तत्वमेवेति वयमेव

## कौमुदी

मित्यर्थः । इतिशब्दानन्तरमत्रापि उच्यत इत्यनुषञ्जनीयम् ॥

यद्यप्यानन्दपदव्याख्यानान्तरे भट्टनायकभणितमेतदेवानुभाष्य दूषितम् ; तथापि तत्र ध्वनेरंशत्वप्रसाधनं सिद्धसाधनत्वाद्युद्भावनया निरस्तम् , अधुना[9]त्वात्मत्व-निषेधो यः "न रूपता" इत्यंशेन , तद्दूषणाभिप्रायेणोपक्रमते—**यच्चोच्यत इति** ॥ उपालम्भ आत्मत्वप्रतिषेधः । "यदि नाम" इति निश्चये सत्यनिश्चयवचनम् ; तद्वचनं वस्त्वलङ्कारध्वन्योरात्मत्वोपालम्भरूपमेव न रसध्वनेरात्मत्वोपालम्भरूपम् । तच्चास्मदभिमतमेवेति सिद्धसाधनमेवैतदित्यर्थः । ननु सामान्यवाचिध्वनिशब्दवाच्यस्यात्मत्वं निराकृतमेवेति कथं सिद्धसाधनत्वमित्याशङ्क्य स्वाभ्युपगमविरोधान्नैवमित्याह—**रसध्वनिस्त्विति** ॥ तुर्हेतौ । ननु रसध्वनेरात्मत्वविषया तदुक्तिर्न दृश्यत इति कुतः स्वाभ्युपगम-विरोध इत्यत्राह—**रसचर्वणात्मन इति** ॥ कथं पुनः रसध्वनेरेवात्मत्वं यावता 'ध्वनिः काव्यस्यात्मा' इति ध्वनेरेव काव्यात्मत्वं प्रतिजानता भवता वस्त्वलङ्कारध्वन्योरप्यात्मत्वमनुमत-मेवेत्याशङ्क्याह—**वस्त्वलङ्कारेति** ॥ विश्रान्तिधामत्वकृतं हि मुख्यमात्मत्वं युक्तम् ; न च ध्वन्यमानयोरपि वस्त्वलङ्कारयोः विश्रान्तिधामत्वम् , तयोर्वाच्यवद्विभावतया अन्ततो रसध्वनिं प्रति धावनात् ; ध्वन्यमानत्वकृतस्त्वनयोर्वाच्यादुत्कर्ष इत्यमुख्यमात्मत्वमपेक्ष्य 'ध्वनिः काव्यात्मा' इति सामान्यनिर्देश इत्यर्थः ॥ **वयमेवेति** ॥ ये वयं ध्वन्यात्मसद्भाववादिन

१. क. ख. ग. ङ. च. 'यदूचे'
घ. 'यत्तूचे'
२. ग. 'भट्टनायकः'
३. ग. 'अङ्गत्वं'
४. क. ख. 'रूपिता'
५. ख. 'उपालब्धः'
ग. 'उपारम्भः'
६. घ. 'स ध्व-'
७. क. '-त्मना'
८. ग. 'द्वयोक्तिः न तैरुन्नयाद्वस्त्व-'
घ. 'द्वयोः निर्णीतत्वेन'
९. कू. 'इदानी'

ध्वन्यालोकः

हि—आद्यस्तावत्प्रभेदो वाच्याद्दूरं[1] विभेदवान् । स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः । यथा —

"भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥"

लोचनम्

वक्ष्यामस्तत्र तत्र[2] इत्यास्तां तावत् । 'वाच्यसामर्थ्याक्षिप्तम्'[3] इति भेदत्रयव्यापकं सामान्यलक्षणम् । यद्यपि हि[4] ध्वननं शब्दस्यैव व्यापारः, तथाप्यर्थसामर्थ्यस्य सहकारिणः सर्वत्रानपायात् वाच्यसामर्थ्याक्षिप्तत्वम् । शब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽप्यर्थसा[5]मर्थ्यादेव[6] प्रतीय[7]मानावगतिः, शब्दशक्तिः केवलमवान्तरसहकारि[8]णीति वक्ष्यामः ॥

कौमुदी

इत्यर्थः ॥ **तत्र तत्रेति** ॥ "काव्यस्यात्मा स एवार्थः" इत्याद्यन्तरेष्वित्यर्थः । वाच्यसामर्थ्याक्षिप्तमिति वस्तुनो विशेषणत्वेनोक्तत्वात् वस्तुध्वनेरेवैतदसाधारणं लक्षणमिति प्रतीतिर्माभूदित्याह—**सामान्यलक्षणमिति** ॥ तदेवोपपादयति—**भेदत्रयव्यापकमिति** ॥ यत एतद्वस्त्वलङ्काररसादिध्वनिरूपं भेदत्रयमपि व्याप्नोति, तदेव च व्याप्नोति, ततोऽस्य सामान्यलक्षणत्वं युक्तम्, अव्याप्त्यादिदोषविरहितत्वादित्यर्थः । ननु व्यञ्जनाव्यापारस्याभिधादिव्यापारवत् शब्दाश्रयत्वात् व्यङ्ग्यत्रयस्य वाच्यसामर्थ्याक्षिप्तत्वलक्षणमसम्भविलक्षणमिति शङ्कामनूद्य दूषयति—**यद्यपीति** ॥ एतच्चाभ्युपगम्योक्तम् अर्थशक्तिमूलेऽर्थस्यापि व्यञ्जनव्यापारसद्भावाभ्युपगमात् । नन्वेवं शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यप्रकारे कथमेतद्योज्यताम्, तस्य वाच्यसामर्थ्याक्षेपलभ्यत्वाभ्युपगमे शब्दशक्तिमूलत्वभाषाभ्रेषापत्तेरित्यत आह—**शब्दशक्तिमूलेति** ॥ दूरशये दूरदृष्टाशय [दूरशब्दः 'दूरदुष्टाशयः'] इतिवत् अत्यर्थवाची स्वाभाविकविरोधमूलत्वेन भेदस्यात्यन्तिकतां दर्शयितुं प्रयुक्त इत्याशयेनाह—

१. ग. 'दूरप्रवि-'
२. क. 'तत्र तम्यः'
 ख. ग. 'तत्रेत्यास्तां'
३. ग. '-क्षिप्तः'
४. क. ख. 'हि' नास्ति ।
५. घ. 'अर्थः'
६. क. ख. 'एव' नास्ति ।
७. ग. 'प्रतीयमानाव' नास्ति ।
८. क. ख. ग. '-करण इति'

## लोचनम्

**दूरं विभेदवानिति** ॥ विधिनिषेधौ विरुद्धाविति न कस्यापि[1] विमतिः । एतदर्थं प्रथमं तावेवोदाहरति[2]—**भम धम्मिअ इति**[3] ॥

"भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य[4] मारितस्तेन ।
गोदावरीनदीकूललतागहनवासिना[5] दृप्तसिंहेन ॥"

कस्याश्चित् सङ्केतस्थान जीवितसर्वस्वायमानं धार्मिकसंचरणान्तरायदोषात्तदवलुप्यमान-

## कौमुदी

**विधिनिषेधाविति** ॥ **विरुद्धौ इति** ॥ अमुमर्थं विषयीकृत्येत्यर्थः ; भावाभावयोरेव साक्षाद्विरोधस्तन्मुखेनैवेतरेषामिति सकलतीर्थिकसम्मतैषा स्थितिरिति भावः । विपर्यस्ता वा मतिर्विमतिः, 'न विरुद्धौ' इत्येवंरूपा । ननु विधिरूपयोरपि वाच्यव्यङ्ग्ययोर्भेद-सम्भवात् तत्प्रदर्शनार्थमुदाहरणसम्भवे विधिनिषेधात्मकवाच्यव्यङ्ग्योदाहरणे किमस्ति कश्चिदभिप्राय इति शङ्कायामस्त्येवेत्याह—**एतदर्थमिति** ॥ आत्यन्तिकभेदप्रदर्शनार्थ-मित्यर्थः । गाथा चैषा मुक्तकरूपापि प्रबन्धायमान इवेति गाढतरकाव्याभ्यास-पुरातनपुण्यपरंपरापरिप्रापितकाष्ठाप्राप्तसहृदयाग्रेसरभावः परिमितविभावाद्युन्मीलनेऽपि विमलतरमतिमणिमुकुरतलपरिलसितचारुतरगाथारूपकाव्यार्थसतत्त्वस्थितिराचार्यस्तत्समुचित-पूर्वापरपरिकल्पनपुरःसरं वक्तृतदभिप्रायतदवसरादिविशेषप्रदर्शनेन गाथां व्याख्यातुं पीठबन्धं विधत्ते—**कस्याश्चिदिति** ॥ 'कस्याश्चिदियमुक्तिः' इत्यनेन वक्तृ-विशेषोपदर्शनम् ; संकेतस्थानं परित्रातुमिति प्रयोजनम् ; अनेनाभिप्रायविशेषः अवसरविशेषश्च दर्शितः । तस्य रक्षितव्यत्वे हेतुः—**जीवितसर्वस्वायमानमिति** ॥ धार्मिकस्य सञ्चरणेन योऽन्तरायः—न तु रहस्योद्भेदः, धार्मिकत्वादेवैतादृग्विषयवैदे-शिकत्वात्—तादृशस्तस्य सञ्चरणमात्रेणापि स्वच्छन्दसम्भोगमहोत्सवस्य त्रुटिमात्रकाल-विच्छेदरूपोऽपि दोषः प्रादुःष्यात् इति तत्तादृशान्महाभयाद्रक्षितुमित्यर्थः । तादृशस्या-न्तरायदोषस्य परिमितविशेषकालसम्भविनः परिहारे किमेतावानपि यत्न आस्थेय इति मन्वानं प्रति सार्वकालिकदोषापाकरणार्थतां तदुक्तेर्दर्शयति—**तदवलुप्यमानेति** ॥

१. क. ख. ङ. च. 'कस्यचिदपि' नास्ति ।
२. क. ख. 'तावदेवो-' ग. 'तावदेताववो-'
३. क. ख. 'भम धम्मिअ इति'
४. क. ख. घ. ङ. च. 'श्वाद्य'
५. ग. 'वासिना' नास्ति ।

## लोचनम्

पल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः । तत्र स्वतस्सिद्धमपि भ्रमणं श्वभयेनापोदितमिति[1] प्रतिप्रसवात्मको[2] निषेधाभावरूपः न तु नियोगः[3] प्रैषादिरूपः अत्र[4] विधिः । अतिसर्गप्राप्तकालयोर्हि अयं लोट् ; तत्र भावतदभावयोर्विरोधात्

## कौमुदी

तेन धार्मिकेण अवलुप्यमानैः पल्लवादिभिर्हेतुभिः यदानुषङ्गिकं तत्कर्तृकं स्वतो निरतिशयच्छायस्य विच्छायत्वापादनं तस्मादपि परित्रातुमित्यर्थः । अथास्यामुदाहृतायां गाथायां यो व्यङ्ग्योऽर्थः प्रतिषेधरूपः तत्स्वरूपमधिकृत्य न किञ्चिद्वक्तव्यमस्तीति यो वाच्यो विधिरूपः तस्य स्वरूपं निरूपयति—**तत्रेति** ॥ गाथाया यथोक्तार्थपरत्वे स्थिते सतीत्यर्थः । अत्र वाच्यार्थकक्ष्यायां यो भ्रमेति विधिः स निषेधाभावरूप एव, न तु प्रैषादिरूपो नियोगः । नियोगो ह्यप्रवृत्तप्रवर्तनात्मको मुख्यतयावस्थितो विधिः प्रसिद्धः ; स च प्रवर्त्यपुरुषापेक्षया क्रमेण ज्यायःसमकनीयोभिर्नियोक्तृभिः पुरुषैः प्रतिपाद्यमानः सन् प्रैषामन्त्रणाध्येषणभेदेन भिन्नव्यपदेशगोचरभावमाचरतीति विधिस्वरूपनिरूपणधुरीणधिषणाः प्रतिपेदिरे ॥ यथाहुः—"कार्यमेव हि वक्तॄणां ज्यायःसमकनीयसाम् । प्रवर्त्यापेक्षया भेदात् प्रैषादिव्यपदेशभाक् ॥" इति । इह तु नासावुक्तरूपो विधिः सम्भवति प्रवृत्तपुरुषविषयत्वात् ; अतः प्रवृत्तिप्रतिबन्धकप्रतिषेधेन प्रवृत्तिहेतुत्वस्य प्रतिषेधाभावे विधौ च तुल्यत्वात् उपचारात् प्रतिषेधाभावोऽपि विधिरित्युच्यत इत्यर्थः । प्रसिद्धश्चायमेवंविधो विधिरन्यत्र विधिवृत्तपरीक्षकव्यवहारेष्विति दर्शयति—**प्रतिप्रसवात्मक इति** ॥ प्रथमं सामान्योपाधौ प्रतिषिद्धस्य पश्चात् क्वचिद्विशेषविषयेऽनुज्ञानं प्रतिप्रसवः प्रतिषेधनिवर्तनरूपः । तदेवोपपादयति—**स्वतस्सिद्धमिति** ॥ अपवादः प्रतिषेधः । उक्तरूपविधिवाचकत्वं मुख्यविध्यर्थस्य लोटः कथमित्यत्राह—**अतिसर्गेति** ॥ 'अतिसृष्टोऽसि' इत्यादिनैतदेव स्पष्टयिष्यति । इदानीं गाथायाः प्रतिषेधरूपस्यार्थस्य वाच्यत्वनिरासेन पारिशेष्याद्व्यञ्जनव्यापारैकगम्यत्वं साधयितुं वाच्यत्वपक्षे किं द्वयोरप्यर्थयोर्वाच्यत्वं यौगपद्येन, आहोस्वित् पर्यायेणेति विकल्पं हृदि कृत्वा आद्यं तावदपनुदति—**तत्र भावतदभाव-**

१. क. ख. ग. '-हितमिति'
२. ग. '-प्रसवार्थको न विषयाभावरूपो'
३. क. ख. ग. 'वियोगः'
४. ग. 'रूपो विधिरिति सर्वं प्राप्तकालयोग्यम् । तत्र'

लोचनम्

द्वयोस्तावन्न[1] युगपद्वाच्यता ; न[2] क्रमेण, विरम्यव्यापारा[3]भावात् ; "विशेष्यं नाभिधा गच्छेत्" इत्यादिनाभिधाव्यापारस्य विरम्या[4]संभवाभिधानात् । ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया दृप्तधार्मिकतदा[5]दिपदार्थानन्व[6]यरूपमुख्यार्थबाधकबलेन विरोधनिमित्तया विपरीत-

कौमुदी

योरिति ॥ वाच्यत्वव्यङ्ग्यत्वविचारे सतीत्यर्थः । परस्परस्वरूपोपमर्दनस्वभावत्वेन युगपदुभयोरपि प्रतिपत्तृबुद्धिपथानारोहित्वादित्यर्थः । द्वितीयमपवदति—न क्रमेणेति ॥ कथं विरम्यव्यापारासम्भव इत्यत आह—विशेष्यमिति ॥ विशेषणविषये क्षीणा विरतिमुपगता शक्तिः अर्थप्रतीतिजननसामर्थ्यलक्षणा यस्याः सा पुनर्विशेष्यं वस्तु न गच्छेत् स्पृशेत् बोधयितुं शक्नोतीत्यर्थः । एवमभावस्य वाच्यत्वाभावाद्व्यङ्ग्यत्वं सम्भाव्य संप्रत्यभिहितान्वयवादिमीमांसकमतानुसारेण तावद्वाच्यत्वमुपपादयितुमशक्य-मिति वक्तुं तन्मतानुसारेण वाच्यत्वोपपत्तिमुद्भावयति—ननु तात्पर्यशक्तिरिति ॥ तात्पर्यरूपा शक्तिस्तात्पर्यशक्तिः, सैव निषेधप्रतीतिं करोति इत्यत्र हेतुः निषेधस्य वाक्यार्थीभूतत्वम् ; यद्विश्रान्तिधामभूतं तदेव हि वाक्यार्थः ; निषेधस्य च विश्रान्तिधाम-त्वमस्त्येवेति तस्यैव वाक्यार्थत्वमित्यर्थः । वाक्यार्थत्वेऽपि कथं तत्प्रतीतिजनकत्वमित्यत उक्तम्—अपर्यवसितेति ॥ वाक्यार्थ एव हि तत्परस्य वचनस्य पर्यवसानं युक्तम्, इतरथा तत्परत्वस्यैवाभावप्रसङ्गादित्यर्थः । निषेधस्य वाक्यार्थत्वे हेतुः—विवक्षयेति ॥ शब्देनार्थ-प्रतिपिपादयिषा हि विवक्षा । सा चेह निषेधविषयैव, न विधिविषया । अतस्तस्मिन्नर्थे वचनस्य तात्पर्यात्तस्यैव वाक्यार्थत्वम्, तत्रैव च तात्पर्यपर्यवसानं वाच्यम्, न विधिरूपेऽर्थे, तस्य द्वारमात्रत्वादित्यर्थः ॥ ननु पदार्थस्यैव विशिष्टावस्थस्य वाक्यार्थत्वात् निषेधस्य चापदार्थत्वात् न वाक्यार्थत्वमित्याशङ्क्य तस्य वाच्यत्वाभावेऽपि लक्ष्यत्वेन पदार्थत्वसम्भवाददोष इत्याह—दृप्तेति ॥ 'गङ्गायां घोषः' इत्यादाविवान्वयप्रतीत्यनुत्पत्ति-लक्षणोऽत्र मुख्यार्थबाधो भावाभावात्मकत्वप्रयुक्तश्च विरोधो लक्षणाया निमित्तमिति भ्रमणविधेर्निषेधलक्षकत्वं 'विषं भुङ्क्ष्व' इत्यादाविवोपपन्नमित्यर्थः ॥ भवतु तात्पर्यशक्तेः

१. घ. 'न' नास्ति । ग. 'विरम्य व्यापारासंभ-'
२. क. ख. 'न' नास्ति ।
३. क. ख. ग. 'व्यापारद्वया-'
४. क. ख. 'विरम्य' नास्ति ।
५. घ. ङ. च. 'तादि'
६. क. ख. ग. '-र्थान्वय-'

लोचनम्

लक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः ; एवमनेनोक्तमिति हि[2] व्यवहारः ; तन्न[3] वाच्यातिरिक्तोऽन्योऽर्थ इति ॥

नैतत् । त्रयो ह्यत्र व्यापाराः संवेद्यन्ते—पदार्थेषु सामान्यात्मसु अभिधाव्यापारः । समयापेक्षयार्थावगमनशक्तिः[6] अभिधा । संकेतश्च तावत्येव न विशेषांशे,

कौमुदी

निषेधप्रतीतिकरत्वम्, ततः किमित्यत्राह—**इति शब्दशक्तिमूल एव सोऽर्थ इति** ॥ शब्दशक्तिरभिधाव्यापारस्तन्मूलत्वं तात्पर्यशक्तेः वाच्यवाचकभावाश्रयत्वेन व्यवस्थानात् । न केवलं वाक्यवित्समयप्रसिद्धमेवैतत् लोकव्यवहारसिद्धमपीत्याह—**एवमिति** ॥ हिश्चार्थे । निगमयति—**तन्नेति** ॥ अन्य इति यो व्यङ्ग्यत्वेन भवतोऽभिमतः ।

सिद्धान्तमुपक्षिपति "नैतत्" इत्यादिना "एवमभिहितान्वयवादिनाम्" इत्यतः प्राक्तनेन ग्रन्थेन ॥ **नैतदिति** । वक्ष्यमाणन्यायविरोधादेतत्प्रत्यवस्थानं न युक्तमित्यर्थः । तमेव प्रदर्शयन् वाचकत्वाश्रयाभिधातात्पर्यलक्षणाव्यापारगम्यत्वनिरासेन तदतिरिक्तरूपव्यञ्जनव्यापारावगम्यत्वं व्यङ्ग्याभिमतस्यार्थस्य प्रदर्शयितुं प्रथमं तेषां स्वरूपं तावदाह—**त्रयो हीति** ॥ हिशब्दः प्रसिद्धौ ; अस्मिन्नर्थे तावन्न कस्यापि विमतिरित्यर्थः । ते चाभिधातात्पर्यशक्तिलक्षणाख्या इति वक्ष्माणगत्या सिध्यन्ति । संवेद्यन्त इति कार्यलिङ्गकानुमानगम्यत्वममीषां दर्शितम् । किंविषया किंलक्षणा वा ते व्यापारा इत्याकाङ्क्षायामाह—**पदार्थेष्विति** ॥ सामान्यसदृश आत्मा अनुवृत्तत्वरूपं स्वरूपं येषां ते तथा । तस्य तथाविधपदार्थमात्रविषयत्वे हेतुमाह—**समयापेक्षयेति** ॥ शब्दस्य व्यापारो नामार्थविषयस्तद्बुद्धिजननसामर्थ्यलक्षणः । तत्र "शब्दाः संकेतितं प्राहुः" इति दर्शितदिशा संकेतस्मरणं सहकारितयापेक्ष्यार्थबोधनसामर्थ्यं यच्छब्दस्य तदभिधाव्यापार इति शब्दप्रस्थानविदां प्रसिद्धमित्यर्थः । ततः किमित्यत आह—**संकेतश्चेति** ॥ **तावतीति** ॥ सामान्यात्मकपदार्थांशमात्र एवेत्यर्थः । एवकारव्यावर्त्यमाह—

१. क. ख. '-शक्ति-' नास्ति ।
२. घ. 'हि' नास्ति ।
३. क. ख. 'तत्र'
४. ग. 'व्यवहाराः'
५ क. ख. ग. घ. ङ. च. '-समयापेक्षार्था-' ।
६. क. ख. ग. 'हि' इत्यधिकम् ।
७. क. ख. ग. घ. ङ. च. 'समयश्च'

## लोचनम्

आनन्त्याद्व्यभिचाराच्चैकस्य ; ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते[1] ; "सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि" इति न्यायात् । तत्र च द्वितीयकक्ष्यायां

## कौमुदी

**न विशेषांश इति** ॥ कुत इत्यत आह— **आनन्त्यादिति** ॥ विशेषाणां व्यावृत्तरूपाणामनन्तत्वेन प्रतिविशेषं संकेतकरणमशक्यसंपादमित्यर्थः । इतोऽपि न तत्संभव इत्याह —**व्यभिचाराच्चेति** ॥ एकस्येत्यत्र वीप्सालोपोऽवगन्तव्यः एकैकस्येति । एकस्मिंस्तावद्विशेषे शब्दस्य संकेतग्रहेऽपि तस्य विशेषान्तरे व्यभिचारादबोधकत्वमेव शब्दस्यापद्येतेत्यर्थः । न च विशेषसमुदाये भवति संकेतग्रह इति वाच्यम् ; सामान्यस्यैव नामान्तरेण संकेतविषयतयोपयुक्तत्वात् समुदायसमुदायिभेदाभेदादिविकल्पदोषग्रस्तत्वात् । न च सकलविशेषगोचर एक एव सङ्गतिग्रह इति वाच्यम् ; एकस्मादेव शब्दादवनिवलयनिलयसकलसमुदायिरूपविशेषसंवेदनापत्तेरखिलव्यवहारविशेषविलोपापत्तेः । यदाहुः— "आनन्त्याद्व्यभिचाराच्च न शक्या व्यक्तयो मताः" इति । नन्वेवं सति विशेषार्थावगतिरुपलभ्यमाना निर्निबन्धनैवापन्नेत्याशङ्क्य तात्पर्यशक्तेस्तन्निबन्धनत्वाददोष इति दर्शयन् द्वितीयं व्युत्पादयति—**तत इति** ॥ यतोऽभिधाव्यापारः[रा]स्पृष्टो विशिष्टोऽर्थस्तस्माद्धेतोः, विशेषस्येव रूपं व्यावृत्तबुद्धिविषयत्वलक्षणं यस्य तथाभूते । तथापि किं तत्स्वरूपमित्यत उक्तम्—**परस्परेति** ॥ आकाङ्क्षादिवशात् गुणप्रधानभावेनान्विते पदार्थसमुदाय इत्यर्थः । यदाहुः—"पदार्थान् प्रतिपाद्यैव निवर्तन्ते पदान्यतः । पदार्था एव संसर्गं बोधयन्त्यूर्ध्वमञ्जसा ॥" इति । पदार्थमुखेन वाक्यार्थप्रतिपादकत्वं तात्पर्यशक्त्या शब्दानामित्यत्राभियुक्तवचनं प्रमाणयति—**सामान्यानीति** ॥ सामान्यात्मकाः पदैः प्रतिपादिताः पदार्था एव विशेषं विशिष्टरूपं वाक्यार्थमवगमयन्तीति ; अत्र हेतुः—**अन्यथासिद्धेरिति** ॥ विशेषस्यानवगमे सति "न हि पदं पदार्थमात्रप्रतिपत्तये प्रयुञ्जते" इत्याद्युक्तदिशा पदार्थप्रतीतेरेव परिनिष्पत्त्यसंभवादित्यर्थः । एवमभिधातात्पर्यशक्तिरूपं व्यापारद्वयं प्रदर्श्य तृतीयं लक्षणाव्यापारं दर्शयन् तस्य तात्पर्यशक्तिविषयानुप्रवेशे तत्सहकारिधुरंधरत्वं[धरं] पूर्वपक्ष्यभिमतं प्रतिक्षिपन्नाह—**तत्र चेति** ॥ तस्यां तात्पर्यशक्तिविषयतायाम् अभिधाव्यापारविषयापेक्षया

१. घ. च. 'परस्परान्विते सामान्ये'

## लोचनम्

भ्रमेति प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात् । न हि—'गङ्गायां घोषः' 'सिंहो वटुः' इत्यत्र[1] यथा अन्वय एव बुभूषन् प्रतिहन्यते योग्यताविरहात्, तथा—तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः, तदिदानीं भ्रमणनिषेधक[2]कारणवैकल्यात् भ्रमणं तवोचितम् इत्यत्रा[3]न्वयस्य—[4]काचित् क्षतिः । [5]अत एव मुख्यार्थबाधा नाशङ्क्या इति न विपरीता[6]र्थलक्षणाया अवसरः । भवतु वासौ । तथापि द्वितीयस्थानसंक्रान्तौ[7] तावदसौ न भवति । तथा हि—मुख्यार्थबाधायां [8]लक्षणायाः प्रवृत्तिः ; [9]बाधा च विरोधप्रतीतिरेव ; न चात्र पदार्थानां

## कौमुदी

द्वितीयस्यां कक्ष्यायां यो वाच्यो भ्रमणविधिः स एव प्रतीयते ; न तु सपरिकरो लक्ष्याभिमतोऽर्थ इत्यर्थः । कुतो विधेरेव प्रतिपत्तिरित्यत उक्तम्—**अन्वयमात्रस्येति** ॥ गुणप्रधानभावेन योऽन्योन्यं पदार्थानां संसर्गः सोऽन्वयः । ननु 'गङ्गायां घोषः' इत्यादाविव मुख्यार्थबाधकबलेन निषेधस्य विपरीतलक्षणया प्रतीतिरत्रास्त्येवेति कुतो विध्यतिरिक्तार्थाप्रतिपत्तिः इत्याह—**न हीति** ॥ 'बुभूषन् प्रतिहन्यते' इत्यन्वयप्रतीत्यनुत्पत्तिरुक्ता । गङ्गास्रोतःप्रभृतेर्घोषाद्यधिकरणत्वयोग्यताविरहादित्यर्थः । बाधाभावमेव दर्शयितुम् अन्वयस्य स्वरूपमुक्तम्—**तवेति** ॥ एवंप्रकारस्यान्वयस्येत्यन्वयः । क्षतिर्बाधा । बाधाभावे फलितमाह—**अत एवेति** ॥ अन्वयक्षत्यभावादेव हेतोः । मुख्यार्थबाधा या लक्षणाबीजतया प्रसिद्धा ॥ **विपरीतार्थलक्षणाया इति** ॥ सा खल्वत्र तात्पर्यशक्तिसहकारितया भवतामभिप्रेतेत्यर्थः । नन्वेवमपि वक्तुरौचित्याद्यनुसरणेऽन्वयक्षत्यवभासरूपमुख्यार्थबाधबलात् विरोधनिबन्धना लक्षणावसरं लभेतैवेति कथं द्वितीयकक्ष्यायां तदभाव उक्त इत्याशङ्क्य अभ्युपगम्यापि लक्षणाम्, तस्या द्वितीयकक्ष्यायां निवेशं निषेधति—**भवतु वासाविति** ॥ उक्तमेवोपपादयति—**तथा हीति** ॥ **विरोधप्रतीतिरेवेति** ॥ न त्वनन्वयरूपेत्यर्थः ।

१. ग. '-त्रापि'
२. क. ख. '-निषेधकका-'
३. क. ग. 'अत्र' नास्ति ।
४. क. ख. ग. ङ. च. 'न काचित्'
५. घ. 'अत एव' इत्यादिः 'बाधा च' इत्यन्तो भागो नास्ति ।
६. क. ख. ग. घ. च. 'विपरीतलक्षणायाः'
७. क. ख. ग. '-संक्रान्ताभावादसौ'
८. क. 'लक्षणायां प्रवृत्तिः' ख. ग. 'लक्षणाप्रक्लृप्तिः'
९. क. ख. 'सा च' च. 'बाधा च न'

## लोचनम्

स्वात्मनि विरोधः ; परस्परं विरोध इति चेत्, सोऽयं तर्हि अन्वये विरोधः प्रत्येयः[1] ; न चाप्रतिपन्ने[2]ऽन्वये विरोधप्रतीतिः[3] ; प्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या, तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्य[4]व्यापारात्—इति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः । नन्वेवमपि[5] 'अङ्गुल्यग्रे करिवर[6]शतम्' इत्यत्राप्यन्वयप्रतीतिः स्यात् ; किं न भवत्यन्वय-प्रतीतिः[7] दशदाडिमादिवाक्य[8]वत् ? किं तु प्रमाणान्तरेण सोऽन्वयः[9] प्रत्यक्षादिना बाधितः

## कौमुदी

तत्रान्वयी पदार्थसार्थोऽन्वयश्चेति द्वावर्थौ स्तः । तत्रान्वयिनां पदार्थानामेव स्वरूपनिष्ठोऽयं विरोधः आहोस्विदन्वयोपाधिगत इति विवेक्तव्यम् । तत्र नाद्यः, स्वात्मनि विरोधे वस्तुनो नृशृङ्गादिवन्निरुपाख्यत्वापातादित्याह—**न चेति** ॥ द्वितीयमुत्थाप्य कदर्थयति—**परस्परमिति** ॥ **सोऽयमिति** ॥ यो लक्षणानिदानत्वेन मूर्धाभिषिक्त इत्यर्थः ॥ **न चाप्रतिपन्न इति** ॥ 'अस्य विरोधः' इति विशिष्टप्रतीतेर्विशेषणभूता-न्वयप्रतीतिपुरःसरत्वादित्यर्थः । भवतु तर्हि तत्प्रतिपत्तिरित्याशङ्क्य तत्प्रतीतेस्तात्पर्यशक्ति-जन्यत्वात्तदुत्तरकालीनबाधादिप्रतिपत्तेस्तात्पर्यशक्तिकक्ष्यानवतारमाह—**प्रतिपत्तिश्चेति** ॥ नन्वन्वयप्रतीतिरत्र प्रतिहन्यमा[ना]नैवोत्पद्यते इति तद[इत्येतद]वश्याभ्युपेयम्, इतर[था] अङ्गुल्यग्रादिवाक्येभ्योऽपि कथितन्यायेनान्वयप्रतीतिप्रसङ्गात् ; न च तत्रान्वयप्रतीतिरस्ति, असंभावनाप्रत्ययप्रतिबन्ध[बद्ध]प्रसरत्वात्—इति शङ्कामुद्भाव्य परिहरति—**नन्वेवमिति** ॥ प्रमाणसामग्रीबलायाता तत्प्रतीतिरनुत्पत्तुमपारयमाणा वस्त्वसंभावनामपि तिरस्कुर्वाणैव समुत्पद्यमाना न निवारयितुं शक्येत्यर्थः । तत्किमिदानीं "भम धम्मिअ" इत्यादि-वाक्यार्थप्रतीतिनिर्विशेषैव तत्प्रतीतिरित्यत्राह—**किं तु प्रमाणान्तरेणेति** ॥ प्रतिपन्नोऽपि सोऽन्वयो नैतदेवमिति प्रमाणान्तरेण बाधितः संवृत्त इत्यर्थः । तत्र दृष्टान्तः—

१. ङ. 'प्रत्ययः'
२. क. ख. ग. 'च प्र-'
३. घ. 'प्रतिपत्तिः'
४. क. ख. ग '-म्य व्या-'
५. ग. ङ. 'अपि' नास्ति ।
६. घ. ङ. च. '-वर-' नास्ति ।
७. घ. 'प्रतिपत्तिः'
८. घ. ङ. च. '-वाक्य-' नास्ति ।
९. घ. 'समन्वयः'

## लोचनम्

प्रतिपन्नोऽपि[1] शुक्तिकायां रजतमिवेति[2] तदवगमकारिणो[3] वाक्यस्याप्रामाण्यम् । 'सिंहो माणवकः' इत्यत्र तु[4] द्वितीयकक्ष्यानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधक-समुल्लासानन्तरमभिधातात्पर्यशक्तिद्वयातिरिक्ता[5] तावत्[6] तृतीया[7] शक्तिः तद्बाधकविधुरी-[8]करणनिपुणा लक्षणाभिधाना समुल्लसति । नन्वेवं 'सिंहो वटुः' इत्यत्रापि काव्यरूपता[9] स्यात्, ध्वननलक्षणस्यात्मनोऽत्रापि[10] समनन्तरमेव[11] वक्ष्यमाणतया[12] भावात् । ननु[13] घटेऽपि जीवव्यवहारः स्यात्, आत्मनो विभुत्वेन तत्रापि भावात् ।

## कौमुदी

**शुक्तिकायामिति** ॥ ततः किमित्यत आह—**इतीति** ॥ तर्हि 'सिंहो वटुः' इत्यादावप्यङ्गुल्यग्रादिवाक्यवदुक्तन्यायेनाप्रामाण्यमेव गृह्यतामित्याशङ्क्य नेति विशेषं दर्शयन् लक्षणायास्तृतीयकक्ष्यानिवेशमाह—**सिंह इत्यादि** ॥ एवं "त्रयो ह्यत्र व्यापाराः संवेद्यन्ते" इत्येतन्निर्वाहितम् । इदानीमभिधादिव्यापारत्रयोत्तीर्णं प्रतितन्त्रसिद्धान्तसिद्धं ध्वननव्यापारं चतुर्थकक्ष्यानिवेशिनं प्रदर्शयिष्यन् प्रथमं तृतीयकक्ष्याविनिवेशेन काव्यव्यवहारप्रयोजकत्व-प्रसङ्गदूषणमपाकर्तुमाह—**नन्वेवमिति** ॥ लक्षणायास्तृतीयकक्ष्यानिवेशाभ्युपगमे सतीत्यर्थः । कुत इत्याह—**ध्वननेति** ॥ **समनन्तरमेवेति** ॥ चतुर्थ्यां तु कक्ष्यायामित्यादिसमनन्तरग्रन्थे । अत्र प्रतिबन्दिं गृह्णाति—**ननु घटेऽपीति** ॥ कुत इत्याह—**आत्मन इति** ॥ अणुपरिमाणत्वं तावदात्मनो न संभवति, युगपदुभयत्र वेदनानुसन्धानानुपपत्तेः ; कार्यत्वादिभिरनित्यत्वप्रसङ्गान्मध्यमपरिमाणत्वमपि नेति परिशेषप्रमाणसिद्धं विभुत्वमात्मन इति घटे तत्सद्भावोऽवश्याभ्युपेय इति तन्निबन्धनो जीवव्यवहारो दुर्वार इति भावः । नात्मसद्भावमात्रं जीवव्यवहारं प्रति प्रयोजकम् ;

१. घ. '-न्नेऽपि'
२. घ. ङ. च. 'रजतत्वमिवेति'
ग. 'रजतमेवेति'
३. ग. 'तदपगम-'
ङ. 'तदनवगमं-'
४. क. ख. ग. च. 'तु' नास्ति ।
घ. 'चतुर्थी-'
५. क. ख. ग. '-बाधकोल्लासना-'
ङ. 'बाधकोल्लसान-'
६. ग. 'तावत्' नास्ति ।
७. क. ख. ग. 'तृतीयैव'
८. क. ख. ग. '-कशक्तिवि-'
९. ग. '-रूपत्वं'
१०. ग. ङ. 'ध्वानिलक्षणात्म-'
घ. च. '-ध्वानि-'
११. क. ख. 'एव' नास्ति ।
१२. ग. 'लक्ष्य-'
१३. क. 'न घटे'

## लोचनम्

शरीरस्य खलु विशिष्टाधिष्ठानयुक्तस्य सत्यात्मनि जीवव्यवहारः, नेतरत्र[1]—इति चेत्, तर्हि[2] गुणालङ्कारौचित्यसुन्दरशब्दार्थशरीरस्य[3] सति ध्वननाख्यात्मनि[4] काव्यरूपताव्यवहारः ; न चात्मनोऽसारता काचिदिति[5] समानम् ॥

न चैवं भक्तिरेव ध्वनिः । भक्तिर्हि लक्षणाव्यापारः तृतीयकक्ष्यानिवेशी ; चतुर्थ्यां तु कक्ष्यायां ध्वननव्यापारः । तथा हि—त्रयसन्निधौ[6] लक्षणा प्रवर्तत इति तावत् भवतां[7] मतम् । तत्र मुख्यार्थबाधा[8] तावत् प्रत्यक्षादिप्रमाणान्तर[9]-मूला । निमित्तं च यदभिधीयते सामीप्यादि, तदपि प्रमाणान्तरावगम्यमेव[10] ।

## कौमुदी

अपि तर्हि भोक्तृभोगायतनभावेन अधिष्ठानाधिष्ठेयभावः संबन्ध इति परिहरति—**शरीरस्येति** ॥ विशिष्टं भोक्तृत्वेनाधिष्ठेयाभिमतस्य शरीरस्य यदधिष्ठानमात्मकर्तृकं शरीरकर्मकं तेन युक्तस्येत्यर्थः ॥ **नेतरत्रेति** ॥ तद्रहिते घटादाविति शेषः । तुल्यमुत्तरमस्माकमित्याह—**तर्हीति** ॥ गुणाश्चालङ्काराश्चौचित्यं चेति द्वन्द्वः ॥

नन्वेवमपि न भवदभिमतव्यञ्जनव्यापारसिद्धिः, अभिधातात्पर्यशक्तिभ्यां व्यतिरेके सत्यपि लक्षणातो व्यतिरेकानिरूपणात् 'सिंहो वटुः' इत्यादौ लक्षणाविषय एव प्रयोजनरूपव्यङ्ग्यार्थव्यवस्थितेः स्वयमेव संपन्नत्वात् व्यञ्जनव्यापारस्य लक्षणाव्यतिरेकेण दुर्निरूपत्वाच्चेति भक्तिरेव ध्वनिरिति शङ्कां परिहरति—**न चैवमिति** ॥ यथाभिधा-तात्पर्यशक्तिकक्ष्यानन्तर्भूतस्तृतीयकक्ष्यानिवेशी लक्षणाव्यापारः, तथा तद्व्यतिरिक्तश्चतुर्थ-कक्ष्यानिवेश्येव व्यञ्जनाव्यापार इत्यर्थः । तथा हीत्युक्तार्थोपपादनम् । मुख्यार्थबाधा निमित्तं प्रयोजनम्—इतीदं त्रयं तस्य सन्निधिः सहकारितयावस्थानरूपः ।

१. ग. 'अन्यस्य कस्यचित्-'
क. ख. घ. ङ. च. 'न यस्य कस्यचित्'
२. क. ख. ग. 'तर्हि' नास्ति ।
३. ग. 'गुणालङ्कारौचित्य-' नास्ति ।
४. क. ख. 'ध्वननात्मनि'
ग. 'ध्वन्याख्ये आत्मनि'
ङ. 'ध्वन्याख्यात्मनि'
५. घ. च. 'कदाचित्'
६. क. ख. 'त्रितय-'
ग. 'इति त्रितय-'
७. क. ख. 'भवन्त एव वदन्ति'
८. क. ख. '-बाधता'
९. घ. 'प्रत्यक्षान्तरप्रमाणादि-'
१०. च. '-रादव-'

## लोचनम्

यत्तु इदं घोषस्य अतिपवित्रत्वशीतलत्वसेव्यत्वादिकं[1] प्रयोजनमशब्दवाच्यं[2] प्रमाणान्तराप्रतिपन्नं वटौ[3] वा पराक्रमातिशयशालित्वं तत्र शब्दस्य न[4] तावन्न व्यापारः। तथा हि—तत्सामीप्यात् तद्धर्मत्वानुमानमनैकान्तिकम्[5], सिंहशब्दवाच्यत्वं च वटोः[6] असिद्धम्; अथ यत्र यत्र एवंशब्दप्रयोगः तत्र तत्र[7] तद्धर्मयोगः इत्यनुमानम्[8], तस्यापि व्याप्तिग्रहणकाले मौलिकं प्रमाणान्तरं वाच्यम्[9]; न चास्ति[10];

## कौमुदी

तत्रेति त्रये। तावदिति संप्रतिपत्तौ ॥ **यत्त्विति** ॥ तुशब्दो विशेषे। अशब्दवाच्यमित्यभिधादिव्यापारत्रयविषयत्वव्युदासः। प्रमाणान्तराप्रतिपन्नमिति शब्दातिरिक्तप्रमाणविषयत्वनिरासः। तत्र प्रमाणान्तराविषयत्वेन शब्दव्यापारैकगम्यत्वं तावदाह—**तत्र शब्दस्येति** ॥ नन्वनुमानगम्यमस्तु तत् प्रयोजनम्; तथा हि—विमतो घोषोऽतिपवित्रः गङ्गासमीपस्थत्वात् तटगततरुलतादिवत्; अयं वटुः शौर्यादिधर्मकः सिंहशब्दवाच्यत्वात् संप्रतिपन्नसिंहवत् इति; तन्न शब्दगोचरत्वमित्यत आह—**तत्सामीप्यादिति** ॥ समीपावस्थितनरशिरःकपालादौ विपक्षे तत्सामीप्यहेतोः विद्यमानत्वाद्व्याप्यत्वासिद्धिरित्यर्थः। द्वितीयानुमाने स्वरूपासिद्धो हेतुरित्याह—**सिंहशब्देति** ॥ अनुमानान्तरमाशङ्क्य परिहरति—**अथेति** ॥ **एवमिति** ॥ 'गङ्गायां घोषः' 'सिंहो वटुः' इत्येवमन्यविषयस्य शब्दस्यान्यस्मिन्नर्थे विशिष्टार्थविवक्षया प्रयोग इत्यर्थः ॥ **तद्धर्मयोग इति** ॥ घोषवट्वादेः प्रधानतया प्रतिपाद्यस्य मुख्यार्थधर्मभूतपवित्रत्वशूरत्वधर्मसम्बन्ध इत्यर्थः। एकसामान्योपधानसमासादितैकभावसकलव्यक्तिविशेषविषयप्रमाणमूलत्वं हि व्याप्तिग्रहणस्य सर्वत्रावश्याभ्युपेयम्, यथा धूमत्वाग्नित्वसामान्यरूपसंगृहीतसकलधूमाग्निव्यक्तिविषयप्रत्यक्षप्रमाणैकनिबन्धनम् 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति व्याप्ति-

१. ग. '-त्वादिः'
२. क. 'सशब्दान्तर-'
ग. घ. 'शब्दान्तर-'
ख. च. 'अशब्दान्तरवाच्यं'
३. क. ख. 'वटोः'
ग. 'पदेन'
४. क. ख. च. 'न' नास्ति।
५. ग. '-कत्वं'
६. ङ. 'वटौ न'
७. घ. 'तत्रानुमानयो'
८. क. ख. 'इत्यनुमानान्तरं कथं तथापि'
९. क. ख. 'वाच्यं' नास्ति।
१०. क. ख. ग. 'च' नास्ति।

लोचनम्

न[1] च स्मृतिरियम्, अननुभूते[2] तदयोगात्, नियमा[3]प्रतिपत्तेः वक्तुरेतदेवं[4] विवक्षितमित्यध्यवसायाभावप्रसङ्गाच्च—इत्यस्ति तावदत्र शब्दस्य[5] व्यापारः ; व्यापारश्च

कौमुदी

ग्रहणम्। तदिह यत्र यत्रेति सामान्यरूपसंग्राहकं किञ्चन [न किञ्चन] प्रमाणमस्ति, अत्यन्तव्यावृत्तात्मनामसमासादितैकसामान्यरूपसंग्रहाणामेव विशेषाणां व्याप्तिग्रहविषयत्वादिति व्याप्तिग्राहकप्रमाणाभावप्रयुक्ता व्याप्यत्वासिद्धिरुद्ध[रनुद्ध]तैवेत्यर्थः । नन्वेवमपि न शब्दैकगम्यत्वम्, स्मरणविषयत्वसंभवात्प्रयोजनस्य ; गङ्गापदेन हि मुख्यार्थबाधावगमे सामीप्यादिनिमित्तं प्रमाणान्तरेणावगच्छतः प्रतिपत्तुः प्रयोजनं पर्यालोच्य तीरादिविषया लक्षणाव्यापारनिबन्धना प्रतीतिरुत्पद्यते ; पर्यालोचना च नामोत्प्रेक्षा स्मृतिरेव नान्या, प्रमाणसामान्यजन्यत्वात्—इति स्मर्यमाणमेव प्रयोजनमित्यत्राह—**न चेति** ॥ स्मृतिः पुनः "पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ।" इत्युक्तत्वादित्यर्थः । ननु मुख्यवृत्तिपरित्यागे गुणवृत्त्यार्थप्रतिपादने प्रयोजनास्तित्वं तावदवगम्यते ; कीदृशं तु तत्—इति वीक्षणायाम् 'नूनमनेनैव प्रयोजनेन भवितव्यम् ; अन्यस्यासंभवात्, समाने वाक्यान्तरे वा तस्यैव वा तज्जातीयस्य वा प्रयोजनस्यानुभूतचरत्वात्' इति युक्त्यनुसन्धानसनाथीकृता विमर्शापरपर्याया स्मृतिरेवेत्थं प्रयोजनं गोचरीकरिष्यतीति कुतोऽत्र शब्दव्यापारोपारोहपरिकल्पनाप्रयासोपगम इत्याशङ्क्याह—**नियमाप्रतिपत्तेरिति** ॥ नियामकस्य कस्यचित् एतदेवानेन प्रयोजनमत्र विवक्षितमित्यस्मिन्नर्थेऽनुपलम्भादित्यर्थः । व्यञ्जनव्यापारोपगमे हि सहकारिविशेषबलान्नियमः सेत्स्यतीति भावः । संप्रति शब्दव्यापारगम्यत्वममुष्य पारिशेष्यसिद्धमिति निगमयति—**इत्यस्ति तावदिति** ॥ प्रतीतिकार्योत्पत्तेरखण्डिताया उपलम्भात् तस्याश्च वर्णितदिशान्यतोऽसंभवे शब्दनिबन्धनं[नत्वं] बलायातं नापोदितुं शक्यमित्यर्थः । तथापि कथं व्यञ्जनव्यापारसिद्धिरित्याशङ्क्य तदपि पारिशेष्यादेवेत्याह—**व्यापारश्चेति** ॥ उक्त[उक्तात्]लक्षणायास्तु [त्रय]सान्निध्यापेक्षत्वनियमात् तस्य च प्रमाणान्तरानवगम्यतया प्रयोजनासम्भवात् न प्रयोजनविषये

१. घ. 'न च……प्रसङ्गाच्च' नास्ति।
२. क. ख. ग. '-तेः'
३. ग. 'नियम्या-'
४. क. ख. '-रेवं विव-' ग. '-रेतदवि-'
५. ग. 'शब्दस्यैव'

## लोचनम्

नाभिधात्मा[1], समयाभावात् ; न तात्पर्यात्मा, तस्यान्वयप्रतीतावेव परिक्षयात् ; न[2] लक्षणात्मा, उक्तादेव हेतोः स्खलद्गतित्वा[3]भावात् ; तत्रापि हि[4] स्खलद्गतित्वे पुनर्मुख्यार्थबाधा निमित्तं प्रयोजनमित्यनवस्था स्यात् ; अत एव यत् केनचित् लक्षितलक्षणेति नाम कृतं तद्व्यसन[5]मात्रम् । तस्मात् अभिधातात्पर्य-लक्षणा[6]व्यतिरिक्तः चतुर्थोऽसौ व्यापारो ध्वननद्योतन[7]व्यञ्जनप्रत्यायनावगमन[8]ादिसोदर-व्यपदेशनिरूपितोऽभ्युपगन्तव्यः । यद्वक्ष्यति—

## कौमुदी

स्खलद्गतित्वं शब्दस्य शक्यावगमम्, येन तत्र लक्षणा स्यादित्यर्थः । विपक्षे दण्डं क्षिपति —**तत्रापीति** ॥ प्रथमं तटादौ लक्ष्ये त्रयम्, अनन्तरं तत्रैव प्रयोजने तदपेक्षणीयम् ; पुनस्तत्रान्य [अन्यत्] एव[वं] न क्वचिदवस्थातुं पर्याप्तो भवति ; अतो [अन्ततो] गत्वा यत्र-लक्षणानभ्युपगमः, तत आरभ्य मूलपर्यन्तं सन्निध्यभावात् [त्रयसन्निध्यभावात्] लक्षणा-प्रवृत्त्यसम्भवदोषइति मूलक्षयकारिण्यनवस्था स्वयमुत्थास्यतीत्यर्थः । प्रयोजनविषयस्य व्यापारस्य लक्षणात्वक्षेपेण 'नासौ लक्षणैव किन्तु लक्षितलक्षणैव' इति वदतः पक्षोऽपि प्रतिक्षिप्त इत्याह—**अत एवेति** ॥ **नाम कृतमिति** ॥ नाममात्रमेवैतत् ; वस्तुतस्तु व्यञ्जन-व्यापार एवायम् ; न च नाम्नि विमतिरित्यर्थः ॥ **व्यसनमात्रमिति** ॥ ध्वनिध्वंसननिरव-ग्रहदुराग्रहिकताविलसितमित्यर्थः । इदानीं चतुर्थकक्ष्यायां ध्वननव्यापार इत्येतन्निर्वाह्यो-पसंहरति—**तस्मादिति** ॥ चतुर्थ इति वचनं प्रसिद्धतराभिधाव्यापारतुल्ययोगक्षेमतां प्रदर्शयितुम् ; तस्य स्वरूपं स्फुटयितुमिह बहुपर्यायपदोपादानम् । ध्वननं द्योतनं व्यञ्जनं प्रत्यायनं अवगमनमिति व्यपदेश आदिर्येषां तैः सोदरैः पर्यायैः व्यपदेशैर्निरूपित इत्यर्थः । अभिधातात्पर्यशक्तिभ्यां भेदस्य स्फुटत्वात् लक्षणातोऽस्फुटत्वात् ततो भेदं प्रसाधितं कारिकाकारोक्त्या द्रढयति—**यद्वक्ष्यतीति** ॥ अथ श्रोतृसुखावबोधार्थं व्यापाराणां

१. घ. ङ. च. 'नाभिधानात्मा'
२. ग. 'न' नास्ति ।
३. ग. 'स्खलितगति-'
४. क. ख. घ. 'हि' नास्ति ।
५. ङ. 'व्यवसन-'
६. क. ख. ग. 'लक्षणव्य-'
७. ग. '-द्योतन-' नास्ति ।
८. ङ. '-अवगमादि-'
च. '-अवगमकादि-'

## लोचनम्

"मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥" इति ।

तेन समयापेक्षा[1] [2]वाच्यार्थावगमन[3]शक्तिः अभिधाशक्तिः ; तदन्यथानुपपत्तिस[4]हायार्थाव[5]बोधनशक्तिः तात्पर्यशक्तिः ; मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिः

## कौमुदी

स्वरूपमुपसंहारच्छलेनाह—**तेनेति** ॥ समयापेक्षत्वे हेतुगर्भं विशेषणम्—**वाच्यार्थेति** ॥ **तदन्यथेति** ॥ तच्छब्देन वाच्यार्थपरामर्शः । तस्य सामान्यात्मनो वाच्यार्थस्य अन्यथा विशेषाभावे या अनुपपत्तिः तत्सहायार्थस्य विशेषस्यान्वितरूपस्यावबोधने या शक्तिरिति । तदेव शक्तित्रयं तदुपजनितं यदर्थानां पदार्थवाक्यार्थलक्ष्यरूपाणामवगमनं तदेव मूलं तस्माज्जाता तत्प्रतिभासपवित्रितस्य प्रतिपत्तुः प्रतिभा तत्सहाया अर्थस्य प्रयोजनात्मनो द्योतने शक्तिः ध्वननव्यापार इत्यर्थः । नन्वर्थत्रयावगममूलजातत्वं प्रतिपत्तृप्रतिभाया असङ्गतम्, अवगमनानामाशुतरविनाशशीलानां क्रमेण युगपद्वा निदानत्वायोगात् इत्याशङ्क्य तन्मूलजातत्वसमर्थनार्थमुक्तम्—**तत्प्रतिभासपवित्रितेति** ॥ तत्प्रतिभासोऽर्थत्रयावभासः तेन पवित्रितः संस्कारलक्षणातिशयविशेषसनाथतया संपादितः । अयमर्थः—न तावदर्थावगमानां स्वरूपेण प्रतिभोत्पादं प्रति हेतुत्वमभिमतम् ; किन्तु प्रतिपत्त्रात्मनि विशिष्टसंस्काराधानद्वारेण ; प्राचीनार्थत्रयावगमाहितसंस्कारस्य हि प्रतिपत्तुः स्वयमेव काचित् परामर्शवितर्कोहादिशब्दाभिधेया प्रतिभाख्या मनीषा तावत्समुन्मिषति ; तत्सहकारिसमवधानवांश्च शब्दः प्रमाणान्तरानवगम्यं प्रयोजनं प्रतिपादयति ; तत्प्रतिपादकशक्तिर्व्यञ्जनव्यापार इत्युच्यते । व्यञ्जनशब्देन ह्यभिधादिवैलक्षण्येन ज्ञानजननसामर्थ्यमात्रमपदिश्यते, प्रदीपादेरपि व्यञ्जकत्वावगमात् । अत एवास्य बहुपर्यायपदवाच्यत्वमितरेषां तद्विरहश्चेति सर्वथा प्रसिद्धसामग्रीसंपातदुरुत्पादप्रतीतिविशेषकार्यलिङ्गानुमानावगम्यमानसद्भावो व्यञ्जनव्यापारः समञ्जसमतिभिरसन्दिहानैरेवायमभ्युपगन्तव्य इति । ननु केन वाभिप्रायेण प्रयोजनविषयो व्यञ्जनव्यापार

१. घ. 'समयापेक्षवाच्याभिधा-'
२. क. ख. ग. ङ. च. 'वाच्यावगम-'
३. च. '-गमक-'
४. घ. 'साहा-'
५. ख. ख. '-येर्था-'

## लोचनम्

लक्षणाशक्तिः ; तच्छक्ति[1]त्रयोपजनितार्थावगम[2]मूलजा[3]ततत्प्रतिभा[4]सपवित्रितप्रति[5]पत्तृ[6]प्रतिभा-सहायार्थद्योतनशक्तिः ध्वननव्यापारः । स च प्राग्वृत्तं व्यापारत्रयं[7] न्यक्कुर्वन् प्रधानभूतः[8] काव्यात्मा इत्याशयेन [9]निषेधप्रमुखतया च, प्रयोजनविषयोऽपि निषेधविषय इत्युक्तः[10] । अभ्युपगममात्रेण चेद[11]मुक्तम् । न त्वत्र लक्षणा, अत्यन्ततिरस्कृतत्वान्यसंक्रमणयोरभावात् । न[12] चार्थशक्तिमूलेऽस्या व्यापारः । सहकारिभेदाच्च शक्तिभेदः स्पष्ट एव ; यथा[13] तस्यैव शब्द[14]स्य व्याप्तिस्मृत्यादिसहकृतस्य

## कौमुदी

इहोक्तः । "स हि वाच्ये विधिरूपे कदाचित् प्रतिषेधरूपः" इति व्यङ्ग्यस्य प्रतिषेधरूपत्वं ब्रुवता प्रतिषेधविषयत्वेनैवायमुक्तः न तु प्रयोजनविषयत्वेन । तत्र च को हेतुरित्यपेक्षायामाह—**स चेति** ॥ प्रयोजनविषयव्यञ्जनव्यापारकथनं पूर्वप्रवृत्त-व्यापारत्रयस्य न्यक्कारहेतुकं प्रधानत्वं हेतुकत्वं [तद्धेतुकं] काव्यात्मत्वं च सम्भावयितुं प्रयोजनविषयस्यापि सतो विधिनिषेधविषयत्वकथनं निषेधाभिमुखत्वनिबन्धनमेव न वास्तवमिति न कश्चिद्विरोध इत्यर्थः । यथोक्तप्रयोजनाभिप्रायेणैवात्र लक्षणासद्भावोऽभ्युपगम्यास्माभिरुक्तः । वस्तुतस्तु नात्र लक्षणापीत्याह—**अभ्युपगममात्रेणेति** ॥ अत्र हेतुमाह—**अत्यन्तेति** ॥ यत्र हि वाच्यस्यात्यन्ततिरस्कृतत्वार्थान्तरपरिणतत्वान्यतरसंभवस्तत्र नियमेन लक्षणाप्रवृत्तिः ; इह तु न तदन्यतरसद्भाव इति न लक्षणेत्यर्थः । तथापि कुतो न लक्षणेत्याशङ्क्योपपत्तिमाह—**न चेति** ॥ व्यापारो व्यञ्जनाव्यापारोत्थानोपयोगित्वरूपः । नन्वेकस्यैव शब्दस्यान्योन्यविलक्षणा अभिधादिभेदभिन्नाः शक्तयो भवेयुः ; अर्थप्रतीति-लक्षणस्य कार्यस्य चैकत्वादेकैव शक्तिः किं न स्यादित्यत्राह—**सहकारिभेदाच्चेति** ॥

१. ग. '-बाधोप-'
२. घ. ङ. च. '-वगमन-'
३. ग. '-ज्ञात-'
४. क. ख. ग. '-प्रतिभाप-'
५. क. '-प्रतिपत्तृ-' नास्ति ।
   घ. '-प्रतिवक्तृ-'
६. ग. '-प्रभा-'
७. घ. '-त्रयस्य कुर्वन्'
८. क. ख. '-प्रधानम् । अत एव-'
९. क. ख. ग. '-विधिनिषेध-'
१०. ग. '-क्तम्-'
११. क. ख. '-चैतदु-'
१२. क. ख. ग. घ. ङ. च. 'न हि'
१३. क. ख. ग. 'तथा'
१४. घ. 'धर्मस्य'

लोचनम्

विवक्षावगतावनुमापकत्वव्यापारः, अक्षादिसहकृतस्य[1] वा विकल्पकत्व[2]व्यापारः । एवमभिहितान्वयवादिनां[3] तावदियदनपह्नवनीयम् ॥

योऽप्य[4]न्विताभिधानवादी "यत्परः शब्दः स शब्दार्थः" इति हृदये[5]

कौमुदी

अभिधादिशक्तीनां भेदप्रयोजकः समयादिसहकारिभेदः प्राक् प्रपञ्चेन प्रदर्शित एव ; विषयभेदाच्च तत्प्रतीतिकार्यभेदात् एकत्वमसिद्धमिति भावः । स्पष्ट एवेति संप्रतिपन्नस्थले तद्दर्शनमुक्तम् । तदेवाह—**यथेति** ॥ **तस्यैवेति** ॥ यस्यैव वाच्याद्यर्थेऽभिधादिव्यापारः । अनुमापकत्वशक्तिसिद्धौ सहकारिभेद उक्तः—**व्याप्तिस्मृत्यादीति** ॥ आदिशब्देन पक्षधर्मत्वादिः । अक्षं चक्षुरादि । आदिशब्दाल्लिङ्गादि ॥ **विकल्पकत्वव्यापार इति** ॥ सविकल्पकज्ञानजनकत्वव्यापार इत्यर्थः । देवदत्त इत्यादयो हि नामशब्दाः स्वसंजल्पितं वस्तु प्रत्यक्षमवगमयन्तश्चक्षुरादय इव सविकल्पकज्ञानोत्पादने व्याप्रियन्ते ॥ यथाहुः—"संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते । संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥" इति ॥ संप्रति प्रभाकरमतानुरोधिभिरप्यनुज्ञेयोऽयं व्यञ्जनव्यापार इति वक्तुमुज्जृम्भमाणः कौमारिलपक्षप्रतिक्षेपपर्वणि लब्धलक्षतामात्मन उपक्षिपन्नुपसंहरति—**एवमिति** ॥ **इयदिति** ॥ त्रयो ह्यत्रेत्यादिना विकल्पकत्वव्यापार इत्यन्तेनोपपादितस्यार्थपिण्डस्य परामर्शः ॥ **अनपह्नवनीयमिति** ॥ सिद्धमिति शेषः । योऽप्यभिधाव्यापारमेवेच्छतीति संबन्धः । एवकारस्तात्पर्यशक्त्यादिव्यवच्छेदार्थः । अत एव ध्वनिसिद्धान्तपूर्वपक्षत्वमस्याः सूत्रितम् ॥

ननु पदार्थप्रतिपत्तेरभिधाजन्यत्वेऽप्यन्वयस्य मुख्यस्यामुख्यस्य तत्सामर्थ्यलभ्यस्य चार्थस्य तज्जन्यत्वासम्भवात्तादर्थ्येन व्यापारान्तरकल्पनावश्यानुज्ञेयेत्याशङ्क्य तत्प्रतीतेरप्यभिधाजन्यत्वमेवेति वक्तुं चतुर्थकक्ष्यापर्यन्तधाविताममभिधाया दर्शयति—**दीर्घदीर्घमिति** ॥ तत्रान्वयस्याभिधाविषयत्वे हेतुमाह—**अन्विताभिधानवादीति** ॥ पदैरेवान्वितस्वार्थप्रतिपादनशक्तिभिः गुणप्रधानभावात्मा संसर्गः प्रतिपाद्यत इत्यन्वयोपहितानामेव पदार्थानामभिधानम्, न तु सामान्यात्मनां पदार्थानामिति नियमेन वदन्वादीत्यर्थः ।

१. ग. '-कृत्य-'
२. क. ख. ग. '-विकल्पत्व-'
३. क. ख. '-वादिनामिय-'
४. ग. 'ह्य-'
५. ग. 'हृदये' नास्ति ।

## लोचनम्

गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति तस्य यदि [1]दीर्घदीर्घो व्यापारः तदेकोऽसाविति कुतः ? भिन्नविषयत्वात् । अथानेकोऽसौ, तद्विषयसहकारिभेदात् असजातीय एव[2] युक्तः । सजातीये च कार्ये[3] विरम्य व्यापारः शब्दकर्मबुद्ध्यादीनां

## कौमुदी

तथापि कथं पर्यन्तकक्ष्याविनिवेशिनोऽर्थस्याभिधानव्यापारविषयत्वमित्याशङ्क्य तदर्थ-प्रत्यायनपरतयैव शब्दप्रयोगात्तात्पर्यस्य च वाक्यार्थत्वप्रयोजकत्वात् सोऽप्यभिधाविषय एवेत्याह—**यत्पर इति** ॥ आन्तरालिकव्यवधायकस्थानविशेषसंभवेऽपि क्रमेण तत्प्राप्तिद्वारा पर्यन्तस्थानपर्यवसायित्वे दृष्टान्तः—**शरवदिति** ॥ यथा धानुष्केण केनापि क्षिप्रहस्तेन क्षिप्तः शरः शरीरावरणं शरीरं च विनिर्भिद्य प्राणानादाय पृथिवीं प्राप्नोति, तद्वदान्तरालिकानेककक्ष्यास्कन्दनक्रमेण पर्यन्तकक्ष्यापर्यन्तमेकैवाभिधाभि-धावत्येवेत्यर्थः । यद्यपि कार्यैकावगम्यसद्भावस्य स्वयमतीन्द्रियस्य व्यापारस्य घण्टानुरणि-तादिवन्मुख्यं दीर्घत्वं नोपपद्यते, तथापि तन्मतानुसारेण तत्स्वरूपाभ्युपगम-पूर्वकं स किमेकोऽनेको वेति विकल्पं हृदि कृत्वा आद्यं दूषयति—**तस्येति** ॥ अभिमत इति शेषः । कुत इत्याक्षेपे । एकत्वे न कश्चिदपि हेतुरित्यर्थः । तत्र हेतुमाह—**भिन्नविषयत्वादिति** ॥ व्यापारस्य हि विषयमुखेनैव स्वरूपप्रतिलम्भः, न स्वरूपेण । यदाहुः—"विषयस्यैव हि समग्रभरसहिष्णुत्वात्" इति । अतो विषयभेदे स्थिते सति तन्निबन्धनो व्यापारभेदोऽप्यवश्यं भवन् न निवारयितुं शक्य इत्यर्थः । द्वितीये दोषमाह—**अथानेक इति** ॥ तदिति तर्हीत्यर्थः । असजातीयत्वं विजातीयत्वम् । तत्र हेतुः विषयेत्यादि । विषयभेदात्तावदनेकजातीयत्वमुक्त-प्रकारेण सिद्धम्; सहकारिभेदाच्च विजातीयत्वमस्य शब्दस्यानुमापकत्वविकल्पकत्वा-द्युक्तन्यायप्रसिद्धम्—इत्येकविषयावच्छेदेन भिन्नादेकस्माद्व्यापाराद्विषयान्तरसंबन्धी व्यापारो-ऽन्यो विजातीयश्च युक्त इति सिद्धमस्मदभिलषितमित्यर्थः । किं च व्यापारस्य यत्कार्य-मनेकार्थविषयज्ञानलक्षणं तदपि किं सजातीयम्, विजातीयं वा ? नाद्य इत्याह—

१. ङ. च. 'दीर्घो'
२. ग. 'एव' नास्ति ।
घ. 'एव शब्दः स युक्तः'
३. क. ख. 'कार्ये' नास्ति ।

लोचनम्

पदार्थविद्भिः निषिद्धः ; असजातीये च[1]ास्मन्नय एव । अथ योऽसौ चतुर्थकक्ष्यानिविष्टोऽर्थः स एव[2] झटिति वाक्येनाभिधीयते इत्येवंविधं दीर्घदीर्घत्वं विवक्षितम् ; तर्हि[3] तत्र संकेताकरणात् कथं साक्षात् प्रतिपत्तिः ? निमित्तेषु

कौमुदी

**सजातीये चेति** ॥ तत्रापि किमेकस्यैव व्यापारस्य विरम्य प्रवृत्तिः, व्यापारान्तरं वा ? नाद्यः न्यायवित्प्रतिषेधविरोधात् । द्वितीयेऽस्मदभिमतसिद्धिः । न चास्ति प्रकारान्तरमित्यर्थः । द्वितीयं दूषयति—**असजातीये चेति** ॥ **अस्मन्नय इति** ॥ अस्मत्सिद्धान्तसिद्धिरित्यर्थः । व्यापारस्य दीर्घत्वं नाम एकस्यैव स्वरूपेण सतोऽनेकविषयप्रवृत्तिसामर्थ्यलक्षणम्, अनेकत्वेऽप्येकजातीयत्वं वा—इत्येतन्मतं निरस्य अधुना प्रतिपिपादयिषितार्थप्रतिपादनझाटित्यविशेष एव दीर्घत्वं नैकत्वमेकजातीयत्वं वेति मतमुद्भाव्य दूषयति—**अथेति** ॥ चतुर्थशब्दोऽन्त्यमात्रविवक्षयात्रोपात्तम्, तेनाभिधामूले ध्वनौ नाव्याप्तिः । प्रतिपादितझाटित्यमप्यस्माकमभिमतमेव ; अभिधानझाटित्यं पुनरसंभवि, संकेतस्मरणत्वप्राणत्वादभिधायाः अन्त्यकक्ष्याविनिवेशिनो व्यङ्ग्याभिमतस्यार्थस्य संकेतागोचरत्वात् । न हि गङ्गादिशब्दस्तटादिगतपवित्रत्वाद्यर्थे केनचिदपि गृहीतसंकेत इति तदपेक्षस्याभिधाव्यापारस्य न व्यङ्ग्यार्थावगाहित्वमस्तीत्यर्थः ॥ **साक्षादिति** ॥ मुख्याभिधाव्यापोरणेत्यर्थः । ननु पदार्थवाक्यार्थयोः निमित्तनैमित्तिकभावाभ्युपगमान्निमित्तभूतेषु च पदार्थेषु संकेतग्रहणात् पृथग्वाक्यार्थविषयसंकेतानपेक्षयैव पदार्थसंकेतमात्रेण तदन्वयावस्थवाक्यार्थप्रतीतिः साक्षादेवाभिधाव्यापारजन्या भविष्यतीति शङ्कामुद्भाव्य व्युदस्यति—**निमित्तेष्विति** ॥ तुशब्दाद्द्योतित एवार्थः संकेतानपेक्ष इत्यनेनोक्तः । वाक्यार्थस्य प्राथमिकप्रतीतिपथाध्यासित्वाभ्युपगमे हि नियतपूर्वोत्तरकालसम्बन्धित्वव्याप्तत्वस्य निमित्तनैमित्तिकभावस्य व्यापकनिवृत्तौ व्याप्यनिवृत्तिनीत्या निवृत्तिरेव स्यादिति न तदङ्गीकारपूर्वको व्यङ्ग्यार्थाभिधेयत्वनिर्वाह इत्यर्थः ॥ **प्रपौर्व प्रतीति** ॥ प्रपौर्वं निमित्तमपेक्ष्यात्मनो नैमित्तिकत्वमभिमतं स्यादित्यर्थः । पदार्थस्वरूपप्रतिपत्तेः पश्चात्तनत्वेऽपि तद्विषयस्य संकेतग्रहणस्य पूर्वमेव वृत्त-

१. ग. 'च' नास्ति ।
२. क. ख. 'इति'
३. क. ख. 'तत्र तर्हि'

## लोचनम्

संकेतः नैमित्तिकस्त्वसावर्थ इति[1] संकेतानपेक्ष एवेति[2] चेत् पश्य[3] श्रोत्रियस्योक्तिकौशलम्[4] ! यो ह्यसौ[5] पर्यन्तकक्ष्याभाग्यर्थः[6] प्रथमं प्रतीतिपथमवतीर्णः तस्य पश्चात्तनाः पदार्थावगमा[7] निमित्तभावं गच्छन्तीति[8] नूनं मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमतम् । अथोच्येत[9]—पूर्वं तत्र संकेतग्रहणसंस्कृतस्य तथा प्रतिपत्तिर्भवतीति

## कौमुदी

त्वात्, तद्द्वारकः पदार्थानां निमित्तत्वव्यपदेशो न विरुध्यते । उपलभ्यते हि गृहीतसंकेतस्य प्रतिपत्तुः 'गङ्गायां घोषः' इति वाक्यश्रवणसमनन्तरमेव झटिति पवित्रत्वप्रभृतिपार्यन्तिकार्थविशेषविषया प्रतिपत्तिरिति शङ्कामुत्थाप्य कदर्थयति—**अथोच्येतेत्यादिना** ॥ तस्याः पार्यन्तिकार्थविषयायाः प्रतिपत्तेरनुसरणे स्वमतेन निर्वहणे यदुपयोगि तथाविधं न किञ्चिदुक्तं स्यात् । अयमर्थः—इह गृहीतसङ्गतेरसङ्गेन तथाविधार्थप्रतीतिरुपलब्धेति दर्शनमेव भवद्भिरपि प्राणत्वेनोपवर्णितम्; नान्यत्किञ्चित्; प्रतीतिश्चैवंविधैषास्माभिरप्यनवखण्डिताङ्गीक्रियत एव । यत्र हि संकेतो गृहीतचरः तद्विषयप्रतीतिहेतुरेवासौ भवितुं युक्तः; नान्यविषयप्रतीतिहेतुः, अतिप्रसङ्गात् । न च वाक्यार्थे कदाचित् कस्यचित्संकेतग्रहणं वृत्तमिति न तद्विषयः शब्दस्याभिधाव्यापारः शक्यः कल्पयितुम् । अन्यविषयस्य संकेतस्यान्यविषयप्रतीतिहेतुत्वेऽभ्युपगम्यमाने सत्येकशब्दसंकेतग्रहणशालिनः सकलवाक्यार्थप्रतीतिः प्रसज्येत, अविशेषात् । निमित्तनिमित्तिभावः[10] पूर्वापरभावनियतः तद्विरहे कथंचिदपि न शक्योपपादनः । न च संस्कारद्वारा तत्समर्थनसंभवः प्रागुक्तातिप्रसङ्गानतिवृत्तेः । निमित्तनैमित्तिकाभेदे तथाभावभङ्गः, भेदे चान्यविषयसंकेतस्यान्यधीहेतुत्वानुपपत्तिः । प्रतीतिझाटित्यं तु झटित्येव समनन्तरमुपपादयिष्यतीति । अभ्युपगम्य च पदार्थगतसम्बन्धग्रहणं तस्य वाक्यार्थप्रतीतावकिञ्चित्करत्वमुक्तम् । वस्तुतस्तु तदपि न संभवतीत्याह—

१. ग. घ. 'इति' नास्ति ।
२. ग. 'एव' नास्ति ।
३. ग. 'पश्यत'
४. क. ख. ग. 'श्रोत्रियस्यानुवाकहतबुद्धेरुक्ति-
५. घ. 'हि' नास्ति ।
६. क. ख. ग. '-भागार्थः'
७. क. ख. '-अवगम' नास्ति ।
८. ख. 'अवग-'
९. क. ख. ग. घ. च. 'उच्येत'
१०. त. 'निमित्तनैमित्तिकभावः'

लोचनम्

अमुया वस्तुस्थित्या निमित्तत्वं पदार्थानाम्, तर्हि तदनुसरणोपयोगि[1] न किञ्चिदप्युक्तं[2] स्यात् । न चापि प्राक् पदार्थेषु[3] संबन्धग्रहणं वृत्तम्, अन्वितानामेव सर्वदा[4] प्रयोगात् । आवापोद्वापाभ्यां तथाभाव इति चेत्, संकेतः पदार्थमात्र एवेत्यभ्युप[5]-गमे पाश्चात्यैव विशेषप्रतीतिः[6] । अथोच्यते—'दृष्टैवं[7] झटिति तात्पर्यप्रतिपत्तिः,

कौमुदी

**न चेति** ॥ अन्विताभिधानवादे पदानामन्वितार्थाभिधायकतयैव सर्वदा प्रयोगनियमात् पृथक्पृथक् प्रातिस्विकार्थे प्रयोगाभावात् न पदपदार्थसंकेतग्रहणोपायोऽस्ति, सकलपद-कदम्बकसमर्पितार्थपिण्डस्य कृत्स्नसमुदायसाधारणसन्निधेः विशेषसम्बन्धावधारणस्य दुर्लभत्वादित्यर्थः । स्यादेतत्—'गामानय' इति वाक्ये यत् आनयेतिपदं तस्योद्वापे बधानेतिपदप्रक्षेपे च आनयनार्थस्योद्धारात् बन्धनलक्षणस्य चावापात् अन्वयव्यतिरेकाभ्याम् आनयेतिपदांशस्य आनयनांशोऽर्थो गृह्यते । एवं प्रयोगान्तरेषु पदान्तराणां प्रातिस्विकार्थेषु संकेतग्रहः सुलभ एव । यदाहुः—

"सामान्यतः प्रथममेष पदार्थपिण्डो वाच्योऽस्य वाचकमिदं पदपिण्डरूपम् ।
इत्याकलय्य पुनरेष विशेषतोऽपि शब्दार्थसङ्गतिमवैति जनस्तटस्थः ॥" इति ॥

अतः पदार्थेषु संभवत्येव संकेतग्रह इति शङ्कित्वा परिहरति—**आवापेति** ॥ तथा प्रातिस्विकार्थेषु संकेतग्रहस्य भावः सद्भावः ; सामान्यप्रतीत्यपर्यवसानलभ्यत्वा-द्विशेषप्रतीतेः इह प्रथमं सामान्यरूपाः पदार्थाः परामृश्यन्ते ; तदनन्तरं विशेषरूपो वाक्यार्थः प्रतीयते ; तदेतन्न्यायबलादेवास्थेयमित्यर्थः । दृष्टविरोधावष्टम्भेन तदसंभवमाशङ्क्य परिहरति—**अथोच्यत इति** ॥ तात्पर्यशब्दः पार्यन्तिकव्यङ्ग्याभिमतार्थवचनः । तत्प्रति-

१. क. ख. '-सारानुपयोगेन'
ग. '-रणनोपयोगि'
२. ग. 'तदपि'
३. क. ख. 'संकेत-'
४. क. ख. 'सदा'
घ. 'सर्वथा'
५. घ. 'एव' नास्ति ।
६. घ. 'प्रतिपत्तिः'
७. घ. 'तावत् झटिति'

लोचनम्

किमत्र[1] कुर्म इति ; तदिदं वयमपि[2] न नाङ्गीकुर्मः ; यद्वक्ष्यामः—

"तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां[3] झटित्येवावभासते ॥"

इति ; किं तु सातिशयानुशीलनाभ्यासात्तत्र संभाव्यमानोऽपि क्रमः सजातीय-तद्विकल्पपरम्परानुदयात् अभ्यस्तविषयव्याप्तिसमयस्मृतिक्रमवत्[4] न संवेद्यते इति । निमित्त-

कौमुदी

पत्तिझाटित्यमङ्गीकरोति—**तदिदमिति** ॥ अत्र वक्ष्यमाणकारिकां संवादयति—**यदिति** ॥ कथं तर्हि विद्यमानस्य क्रमस्यासंवेद्यमानत्वमिति पृच्छति—**किञ्चिदिति [किं त्विति]** ॥ हेतुमुद्धाटयन्नुत्तरमाह—**सातिशयेति** ॥ तत्र झटिति तात्पर्यार्थप्रतीतौ संवेद्यमानतया संभाव्यमानोऽपि क्रमो न संवेद्यत इत्यन्वयः । तत्र हेतुः—**सजातीयेति** ॥ वाक्यार्थ-प्रतीत्या सजातीयाः शब्दप्रतिपाद्यार्थविषयत्वेन सदृशा ये ते तादृशा विकल्पाः पदार्थादिविषयाः प्रत्ययाः, तेषां परम्परया पूर्वोत्तरक्षणवर्तितया अनुदयाच्छब्दश्रवण-पार्यन्तिकार्थप्रतिपत्त्योरन्तरालेऽनुदयादनुल्लेखनाद्धेतोरिति ; तत्रापि हेतुः—**सातिशयानु-शीलनाभ्यासादिति** ॥ सातिशयं यदनुशीलनं पर्यालोचनं तस्याभ्यासादाम्रेडनादिति । क्वान्यत्रैतत् दृष्टचरमिति तत्राह—**अभ्यस्तविषयव्याप्तिसमयस्मृतिक्रमवदिति** ॥ अभ्यस्तो भूयोभूयः पर्यालोचितः विषयो व्याप्यव्यापकवाच्यवाचकभावसम्बन्धलक्षणः ययोस्ते तथा ; व्याप्तिस्मृतिः समयस्मृतिश्च व्याप्तिसमयस्मृती, तयोः अनुमाने व्याप्तिस्मृतौ शाब्दे समयस्मृतौ यथा क्रमो न संवेद्यते तद्वदित्यर्थः । यद्वक्ष्यति "अभ्यस्ते हि विषये विभावप्रतीतिक्रम इत्थमेव न लक्ष्यते । अभ्यासो ह्ययमेव यत्प्रणिधानादिना विनैव संस्कारस्य बलवत्त्वात् सदैव प्रबुभुत्सुतया अवस्थापनमिति । एवं यत्र धूमस्तत्राग्निरिति हृदयस्थितत्वात् व्याप्तेः पक्षधर्मताज्ञानमात्रमेवोपयोगि भवतीति परामर्शस्थानमाक्रामति झटित्युत्पन्नेऽपि धूमज्ञाने तद्व्याप्तिस्मृत्युपकृते तद्विजातीयप्रणिधानानु-

१. ग. 'अत्र' नास्ति ।
२. क. ख. 'अपि न' नास्ति ।
३. क. ख. 'तत्त्वावभासिन्यां'
४. ग. '-स्मृतिं तमवन्न'
　 च. '-स्मृत्यक्र-'

## लोचनम्

नैमित्तिकभावश्चावश्याश्रयणीयः । 'अन्यथा गौणलाक्षणिकयोः मुख्याद्भेदः, श्रुतिलिङ्गादिप्रमाणषट्कस्य पारदौर्बल्यम्' इत्यादिप्रक्रियाविघातः, निमित्ततावैचित्र्येणैवास्याः समर्थितत्वात् ; निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया ॥

## कौमुदी

सरणादिप्रतीत्यन्तरानुप्रवेशविरहात् आशुभाविन्यामग्निप्रतीतौ क्रमो न लक्ष्यते'' इति ॥ ननु संवित्प्रसादमात्रलभ्यत्वात् संवेद्यवस्तुसत्तायाः क्रमस्यासंविदितस्य सत्ताङ्गीकारो निर्मूल इत्याशङ्क्य सामान्यविशेषप्रतीत्योः कार्यकारणभावनिश्चयात् संभाव्यत एव क्रमः ; कथितक्रमेण तदसंवेदनमात्रम् ; उपलब्धियोग्यत्वे सत्यनुपलब्धेरेवाभावगमकत्वादिह च तदभावादित्याह—**निमित्तेति** ॥ आवश्यकत्वमुपपादयन् हेतुमाह—**अन्यथेति** ॥ निमित्तनैमित्तिकभावानभ्युपगमेनाभिधाया एव पार्यन्तिकार्थपर्यन्तधावित्वे सतीत्यर्थः । गौणलाक्षणिकयोरन्योऽन्यं भेदः, तयोश्च मुख्यार्थाद्भेदो भवतीत्येतत् व्याहतं स्यात् , अभिधाव्यापारैकगोचरत्वस्य सर्वत्राविशेषात् ; न केवलमस्मिन् पक्षे लौकिकशाब्दव्यवहारविरोध एव वैदिकव्यवहारमर्यादापि पर्याकुला स्यादित्याह—**श्रुतिलिङ्गादीति** ॥ कुतो निमित्तनैमित्तिकभावानभ्युपगमे कथितव्याघातदोषापात इत्यत्राह—**निमित्ततावैचित्र्येणेति** ॥ अस्या इति लौकिकवैदिकशब्दप्रमाणप्रक्रियाया इत्यर्थः । शीघ्रविलम्बितप्रवृत्तिकत्वनिबन्धने ह्येतेषां पूर्वप्राबल्यपरदौर्बल्ये ; तच्च निमित्तनानात्वकृतमेव ; तुल्यव्यापारत्वे सति हि तत्प्रवृत्तेः शैघ्र्यविलम्बितत्वविशेषनिबन्धन [षः निर्निबन्धनः] एव स्यात् । अतः "स्वपक्षहानिकर्तृत्वाद्यः कुलाङ्गारतां गतः" इत्याभाणकविषयतापत्तिं परिजिहीर्षता कथितलौकिकवैदिकप्रमाणव्यवस्थामवस्थापयता निमित्तनैमित्तिकभावोऽवश्यमभ्युपेय इत्यर्थः । यद्युक्तदोषपरिजिहीर्षया निमित्तवैचित्र्यमभ्युपगम्येत , तदास्मदभीष्टस्य व्यापारचतुष्टयस्य परिध्वंसः प्रद्वेषमात्रप्रवृत्त इति स्यात् । तच्च न समञ्जसं प्रामाणिकाग्रेसरमानिनो भवत इत्याह—**निमित्ततावैचित्र्य इति** ॥

१. क. ख. ग. घ. च '-श्रयणी-' घ. ङ. च. 'समर्थत्वात्'
२. ग. '-प्रक्रियाविकल्पास्तान्निमित्त-' ४. घ. 'अस्य'
३. क. ख. 'सामर्थ्यान्निर्निमित्त-'

## लोचनम्

येऽप्यविभक्तं स्फोटं[1] वाक्यं तदर्थमाहुः[2] तैरप्यविद्यापद[3]पतितैः सर्वेयमनुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु सर्वं परमेश्वराद्वयं ब्रह्म[4] इति अस्मच्छास्त्रकारेण[5] न न विदितं तत्त्वालोक[6]ग्रन्थं विरचयता[7] इत्यास्ताम् ॥

## कौमुदी

इत्थं प्राभाकराणां प्रत्यवस्थानं प्रत्याख्याय संप्रति वैयाकरणानां वचनविजृम्भितं वैयात्य-मात्रमिति वक्तुमाह—**येऽपीति** ॥ अविभक्तं वर्णपदादिविभागरहितम्। ननु विभागप्रसिद्धि-र्लौकिकपरीक्षकसंप्रतिपन्ना कथमपह्नूयतामित्याशङ्क्य वर्णपदादीनां प्रत्येकं समुदिततया वा अर्थप्रत्यायकत्वासंभवात्तद्व्यतिरिक्तं तदभिव्यङ्ग्यमेकमिदं वाक्यमित्यबाधितासन्दिग्धविस्पष्ट-प्रतीतिसिद्धं स्फोटापरपर्यायं वस्त्वन्तरमेव वाक्यमर्थप्रतीतिहेतुरिति नाविभक्तत्वहानिरित्याह—**स्फोटमिति** ॥ तस्य वाक्यार्थत्वं [वाक्यस्य अर्थं]च अविभक्तं स्फोटमाहुरिति योज्यम्। वैयाकरणाः खलु ब्रह्मवादिन इव विद्याविद्यावस्थे द्वे आस्थिषत; तत्र अविद्यावस्थामास्थाय वा ईदृशी वाचोयुक्तिः विद्यावस्थां वा? आद्ये वाद्यन्तरेभ्यो न भिद्यत इत्याह—**तैरपीति** ॥ **इयमिति** ॥ येयमस्माभिः प्रागुन्मीलिता। द्वितीये त्वस्मदभीष्टमेव चेष्टितमिति परितुष्टिमेव भजामह इत्याह—**तदुत्तीर्णत्वे त्विति** ॥ कुतो विदितमेवेत्यवगतम्; न हि ध्वनिशास्त्रपर्या-लोचनात्तदवगमः। यत्तु विपश्चिद्दृष्ट्यवलम्बनमात्मनोऽनेनाचार्येणान्तेऽभिहितं तत्तु कविदृष्टिसाहचर्यसंकीर्तनसामर्थ्यात् काव्यार्थतदुपयोग्यर्थान्तरमात्रविषयमवसेयमित्याशङ्क्य तदवगमे लिङ्गमाह—**तत्त्वालोकग्रन्थं विरचयतेति** ॥ लक्षणेऽत्र शतृप्रत्ययः। तत्त्वालोक-ग्रन्थविरचनादवगम्यत इत्यर्थः। यद्विषयज्ञानजनकं हि यच्छास्त्रं तत्ततोऽप्यधिकज्ञान-पुरुषप्रणेतृकं दृष्टं यथा व्याकरणादि। तत्त्वालोकश्च पारमेश्वरसतत्त्वविषयविज्ञानजनक इति तत्प्रणेतुरेतद्ग्रन्थकृतस्तद्विषयनिरतिशयविज्ञानशालितानुमीयत इति भावः। इत्थ-मुपक्षिप्तस्य स्वसिद्धान्तस्य भाट्टप्राभाकरवैयाकरणव्यवस्थापितसिद्धान्तविरोधपरिहारप्रकार-मुपपादितमुपसंहरति—**इत्यास्तामिति** ॥ एषा कथेति वाक्यशेषः ॥

१. ग. 'स्फोटक-'
२. क. ख. 'तदर्थरूपमित्याहुः'
३. ङ. '-पद-' नास्ति।
४. ग. 'ब्रूमहे'
५. क. ख. 'अस्मच्छास्त्रानुसारेण विदितं'
६. क. ख. ग. ङ. च. 'तन्त्रालोक-'
७. क. ख ग. 'विचारयता'

## लोचनम्

यत्तु भट्टनायकेनोक्तम्—इह दृप्तसिंहादिपदप्रयोगे[1] धार्मिकपदप्रयोगे[3] च भयानकरसावेशकृतैव निषेधावगतिः, तदीयभीरुत्व[4]धीरत्व[5]प्रकृतिनियमावगममन्तरेणै-कान्ततो निषेधाव[6]गत्यभावादिति, तन्न[7] केवलार्थसामर्थ्यं[8] निषेधगतेर्निमित्तमिति ; तत्रोच्यते—केनोक्तमेतत् वक्तृप्रतिपत्तृविशेषावगमविरहेण शब्दगतध्वननव्यापारविरहेण

## कौमुदी

संप्रति काव्यमीमांसकैकदेशिभिरेव स्वसमये समुद्भावितं दोषमपाकर्तुमनुभाषते —**यत्त्विति** ॥ तुशब्दो विशेषे ॥ **इहेति** ॥ "भम धम्मिअ" इत्युदाहरणे । आदिपदेन गोदावरीत्यादिपदसंग्रहः । दृप्तसिंहादिपदप्रयोगे धार्मिकपदप्रयोगे च सत्येव जायमाना येयं मा भ्रमेति भ्रमणनिषेधप्रतीतिः सा भयानकरसावेशकृतैव भवितुमर्हति, नार्थसामर्थ्य-निबन्धनैवेति संबन्धः । व्याघ्रादीनां भयानकरसालम्बनत्वप्रसिद्धेः दृप्तसिंहपदाभ्यां तदालम्बनस्य समर्पणे सति धार्मिकपदेन भयशीलप्रकृतेः प्रतिपत्तुश्चोपक्षेपात् भयोत्पत्ति-सामग्री तावदस्मिन् काव्ये समुन्मीलिता । ततश्च भयमेव देशकालाद्यनालिङ्गितमित्याद्युक्त-दिशा समात[समासादित]पारिपूर्ण्यभयानकरसनिमग्नचित्तवृत्तितया स्वयमेव स्वच्छन्दसञ्चारा-समर्थतां प्रतिपत्तासौ प्रतिपद्यत इति रसावेशवशादेव सा निषेधप्रतिपत्तिरित्यर्थः । एतदेव व्यतिरेकद्वारा स्फुटयति—**तदीयेति** ॥ तच्छब्देन दृप्तसिंहधार्मिकयोः परामर्शः । अर्थसामर्थ्ये जाग्रत्येव भीरुत्वादिस्वाभाव्यानवधारणे निषेधावगमाभावात्तद्भावे च भावादन्वयव्यतिरेकाभ्यां रसावेशकृतत्वमवगम्यत इत्यर्थः । ततः किं सिद्धमित्यत्राह— **तन्नेति** ॥ यस्माद्रसावेश एव निषेधावगमहेतुस्तस्मादित्यर्थः । अर्थसामर्थ्यस्यापि सहकारितया हेतुत्वानपायं दर्शयितुं केवलशब्द उपात्तः । इतिशब्दस्योक्तमित्यनेन संबन्धः । एवमनुभाष्य समाधत्ते—**तत्रोच्यत इत्यादिना** ॥ यदुक्तं तदीयभीरुत्वादिप्रकृति-नियमावगमं विना न निषेधावगतिरिति तदनुमतमेवास्माकमित्याह—**केनोक्तमिति** ॥ किं च यथा शब्दव्यापारेण ध्वननात्मना विना न निषेधावगतिस्तथा वक्त्रादिविशे-

१. क. ख. घ. च. 'पदयोगेऽपि'
२. क. ख. ग. घ. ङ. च. 'अपि' अधिकः ।
३. घ. 'धार्मिकपदप्रयोगेऽपि' इत्यधिकम् ।
४. क. ख. घ. ङ. च. 'भीरु'
५. घ. ङ. च. '-वीरत्व-'
६. क. ख. ग. '-निषेधगत्य-'
७. ख. 'तत्र'
८. क. ख. ग. '-सामर्थ्यात्'

लोचनम्

च निषेधावगतिः इति ? [1]प्रतिपत्तृप्रतिभासहकारित्वं ह्यस्माभिः द्योतनस्य [2]प्राणत्वेनोक्तम् ; भयानकरसावेशश्च [3]न वार्यते, [4]तस्य भयमात्रोत्पत्त्यभ्युपगमात् ; प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव ; [5]रसश्च व्यङ्ग्य एव ; तस्य च शब्द-

कौमुदी

षावगतिरपि तद्धेतुरेवेति दृष्टान्ताभिप्रायेणाह—**शब्दगतेति** ॥ इति केनोक्तम्, नास्माभिरेतदुक्तमित्यर्थः । प्रत्युत एतदेवास्माभिर्निषेधावगतिसामग्रीपदे मूर्धाभिषिक्ततयोक्तमित्याह—**प्रतिपत्त्रिति** ॥ यत्पुनरुक्तं भयानकरसावेशकृतैव प्रतीतिरिति तत्राविरुद्धमंशमनुजानन् विरुद्धमंशं प्रतिसंक्षिष्टे—**भयानकेति** ॥ किन्तु [किं न] तन्मात्रकृतत्वं निषेधावगतेरिति शेषः । तस्यापि व्यञ्जनव्यापारसहकारित्वाभ्युपगमादिति भावः । कुतो न वार्यत इत्यत उक्तम्—**तस्येति** ॥ भयानकरसस्य भयमात्राद्धेतोरुत्पत्तेरभ्युपगमात् यतो भयमेव विशिष्टसामग्रीलब्धजन्म विशिष्टस्वरूपं भयानको रसः ; यदुक्तम् "भयमेव देशकालाद्यनालिङ्गितं तत एव भीतोऽहं भीतोऽयं वयस्यः शत्रुर्मध्यस्थो वेत्यादिप्रत्ययेभ्यो दुःखसुखादिकृतहानादिबुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो विलक्षणनिर्विघ्नप्रतीतिनिर्ग्राह्यं साक्षादिव हृदये विधीयमानं चक्षुषोरिव विपरिवर्तमानं भयानको रसः" इति । इह विशिष्टतत्तादृशस्वभावाभावेऽपि भयमात्रस्य सद्भावादेव भयानकरसोत्पत्तेरनिवार्यत्वादित्यर्थः । किं च प्रतिपत्तापि किं कविनिबद्धो धार्मिकः यस्य रसावेश उच्यते, किं वा तदनिबद्धः सहृदयः ? आद्ये रसावेशकृतत्वं निषेधावगतेरभिदधता व्यङ्ग्यवादिनामानुकूल्यमेवाचरितमित्याह—**प्रतिपत्तुश्चेति** ॥ अभिव्यक्तिः प्रतीतिः, तस्याश्च कारणापेक्षायां व्यञ्जनव्यापार एवेति पर्यवस्यतीत्याह—**रसश्चेति** ॥ न केवलं रसस्य व्यङ्ग्यत्वनियमोऽस्माभिः साधयितव्यः यावता स्वयमभ्युपगत एवायमर्थ इत्याह—**तस्य चेति** ॥ भट्टनायकमते हि अभिधातो द्वितीयेनांशेन भावकत्वव्यापारेण रसस्य भाव्यमानत्वं स्थितमिति रसव्यङ्ग्यत्वं न

१. क. ख. ग. च. '-वक्तृप्रतिपत्तृ-' घ. ङ. प्रतिपत्तृवक्तृ-
२. घ. 'प्रामणत्वेन'
३. क. ख. 'न वर्ण्यस्य'
४. क. ख. ग. घ. ङ. च. 'अस्य'
५. क. ख. ग. 'रसस्य च'

## लोचनम्

वाच्यत्वं तेनापि नोपगतमिति व्यङ्ग्यत्वमेव ; प्रतिपत्तुश्च रसावेशो न नियतः ; न ह्यसौ नियमेन भीरु[3]धार्मिकसब्रह्मचारी सहृदयः[2] ; अथ तद्विशेषोऽपि सहकारी कल्प्यते तर्हि वक्तृप्रतिपत्तृप्रतिभाप्राणितो ध्वननव्यापारः किं न सह्यते ? किं च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सु[4]तरां ध्वनिध्वंसोऽयम् । यदाह—"क्रोधोऽपि देवस्य वरेण तुल्यः" ॥

## कौमुदी

यत्नसाध्यमित्यर्थः । अथ अनिबद्धः प्रतिपत्ता सहृदयोऽभिमतस्तत्राह—**प्रतिपत्तुश्चेति** ॥ कविनिबद्धस्य प्रतिपत्तुः रसावेशनियमे सत्यपि रसास्वादयितुरनिबद्धस्य मुख्यप्रतिपत्तुः सहृदयस्य दैवगत्या भीरुधार्मिकसादृश्यभाजः कस्यचित् संभवे सत्यपि सर्वस्य तदभावान्न तन्नियम इत्यर्थः । तद्विशेषः सहृदयरूपप्रतिपत्तृविशेषः भीरुधार्मिकसदृशत्वविशेषविशिष्ट इत्यर्थः । तर्हि कल्पनागौरवाश्रयणाद्वरं पारिशेष्यप्रमाणसिद्धव्यञ्जनव्यापाराश्रयणमित्याह—**तर्हीति** ॥ किं च किमत्र रसध्वनिस्वरूपसद्भावसमर्थनमेतत्, किं वा वस्तुध्वन्यपेक्षया रसध्वनेः प्राधान्यसमर्थनम्, आहोस्विदिह रसध्वनेरपि सद्भावाद्वस्तुध्वनिमात्रोदाहरणत्वासंभवोपपादनमिति वक्तव्यम् । आद्ये सोपहासं दूषणमाह—**किं च वस्तुध्वनिमिति** ॥ वस्तुध्वनेरनुग्राहकोऽत्र रसध्वनिः, अनुग्राह्यो वस्तुध्वनिः सहृदयहृदयमणिमुकुरतलमधिशेते । तत्र वस्तुध्वनिदूषणार्थं रसध्वनिसमर्थनं वृश्चिकभयात्पलायमानस्य विषमाशीविषमुखनिपातसमानमित्युपहसनीयमिदमित्यर्थः । तदाह—**ध्वनिध्वंसोऽयमिति** ॥ अहो मौर्ख्यविजृम्भितमिति भावः ॥ **सुतरामिति** ॥ रसध्वनेरेव मुख्यमात्मत्वं तत्पर्यवसायितयेतरयोरमुख्यमिति स्थास्यति ; तस्य चेयता समर्थितत्वात् "अस्माभिर्यदनुष्ठेयम्" इति नीत्या ध्वनिः काव्यात्मेत्ययमेव मत्पक्षो भवता साधितः । अतोऽद्य दिष्ट्या वर्धामह इत्यर्थः ॥

१. क. ख. ग. घ. ङ. च. 'अपि'
२. क. ख. 'भीरुधार्मिकस्य सब्रह्मचारिहृदय एव'
३. ग. 'एव' अधिकम् ।
४. क. ख. ग. घ. च. 'सुष्ठुतरां'

## लोचनम्

अथ रसस्यैवेयता[1] प्राधान्यमुक्तं[2] तत्को[3] न सहते । अथ वस्तुमात्रध्वनेरेतदुदाहरणं न युक्तमित्युच्यते, तथापि काव्योदाहरणत्वात्[4] द्वावप्यत्र[5] ध्वनी स्ताम्[6], को दोषः ? [7]यदि तु रसानुवेधेन विना न तुष्यते, तद्भयानकरसानुवेधोऽपि नात्र सहृदयहृदयदर्पणमध्यास्ते । अपि तूक्तनीत्या[8] संभोगाभिलाषविभावसंकेतस्थानोचित-

## कौमुदी

ननु न ध्वनिसमयध्वंसनव्यसनितया इत्थमाचक्ष्महे, किं तु 'भम धम्मिअ' इत्यत्र न वस्तुध्वनेः प्राधान्यम् । रसध्वनेरेवेति तत्र क उपहासावसर इति द्वितीयमुत्थाप्य दूषयति—**अथेति** ॥ अनुग्राहकत्वेऽपि रसस्य प्राधान्यं वास्तवमास्थीयत एवास्माभिरित्यर्थः ॥ ननु वयमेवं ब्रूमः—उक्तप्रकारेणास्यां गाथायां रसवस्तुध्वन्योरुभयोरपि संभवे यदिदं वस्तुध्वनेरुदाहरणं कृतं तदेतच्छोभनमनसामशोभनमिति तृतीयं पक्षमाशङ्क्य परिहरति—**अथेति** ॥ **द्वावपीति** ॥ रसध्वनिर्वस्तुध्वनिश्च । तर्हि वस्तुमात्रध्वन्युदाहरणत्वमस्य कथमिति चेदत्राह—**काव्योदाहरणत्वादिति** ॥ काव्यरूपमुदाहरणं काव्योदाहरणम् ; यद्वा काव्यलक्षणोदाहरणमिति । शास्त्रोदाहरणेषु हि प्रतिनियतैकैकलक्षणविषयत्वमेवोदाहरणस्य व्यवस्थितम्, न तु काव्योदाहरणेष्वेवम्, तेष्वयोगव्यवच्छित्तिमात्रस्यैवापेक्षणीयत्वात्, तथैव लक्षणकृतां प्राचां प्रवृत्तिदर्शनात्, अशक्यसंपादत्वाच्च, बहुविषयत्वादेकस्यापि काव्यस्य नियतगोचरत्वासंभवादित्यर्थः । किञ्च किं रसध्वनिमात्रमत्रायुष्मतः सिषाधयिषितं किं वा भयानकरसध्वनिसत्तासमर्थनम् ? न तावद् द्वितीय इत्याह—**यदि त्विति** ॥ भयानकरसानुवेधाभावे काष्ठाधिष्ठितसहृदयभावस्वसंवेदनानुपलब्धिं प्रमाणयितुमुक्तम्—**नात्र सहृदयेति** ॥ आद्ये तु न विवाद इत्याह—**अपि त्विति** ॥ **उक्तनीत्येति** ॥ अभिधादिव्यापारत्रयोत्तीर्णध्वननव्यापारतद्विषयप्रदर्शनोक्तन्यायेनेत्यर्थः । संभोगाभिलाषात्मिकाया रत्यात्मिकायाः स्थायि-

१. क. 'इयत्ता'
२. घ. 'प्रामाण्यं'
३. क. ख. 'तत्केन सह्यते'
४. क. ख. 'कार्यो-'
५. क. ख. 'अत्र' नास्ति।
६. ग. 'स्तः'
७. क. ख. ग. 'यदि तु...... अध्यास्ते' नास्ति ।
८. क. ख. ग. 'चोक्त-'

लोचनम्

विशिष्टकाक्वाद्यनुभावसंवलनोदितशृङ्गाररसानुवेधः, रसस्यालौकिकत्वात्, तावन्मात्रेण चानवगमात्। प्रथमं निर्विवादसिद्धविविक्तविधिनिषेधप्रदर्शनाभिप्रायेण चैतद्वस्तुध्वने-

कौमुदी

चित्तवृत्तेः विभावभूतमालम्बनं यत्संकेतस्थानं तेन उचितैः विशिष्टकाक्वादिभिः काकुविशेषैः, आदिशब्दकथितैः स्वरस[स्वरभङ्गा]दिभिश्चानुभावैः, 'भम धम्मिअ' इति वचनस्य संवलनान्मिश्रणात् अन्योन्यं वामीषां मिश्रणात् उदितस्याभिव्यक्तस्य शृङ्गाररसस्यैवानुवेधः, न तु भयानकस्य; तस्य आमुख एव प्रतीयमानस्य विशिष्टसहृदयबुद्ध्यावनारोहादित्यर्थः। ननु रसध्वनेरेव प्रधानत्वात्तस्य चास्यां गाथायां प्रतिपादितत्वात् किमिति तदवधीरणया अत्र वस्तुध्वनेरुदाहरणमुक्तम् इत्याशङ्क्य तत्र हेतुमाह—**रसस्यालौकिकत्वादिति** ॥ विधिप्रतिषेधादिवल्लोकसिद्धत्वाभावाद्रसस्य झटिति प्रतिपत्तृबुद्ध्यावनारोहादित्यर्थः। तर्हि तत एव हेतोस्तदवगमार्थमुदाहरणदानमावश्यकमित्येव स्यात्, न तु तदभाव इत्यत्राह—**तावन्मात्रेणेति** ॥ स्वरूपप्रतिपादनमन्तरेणोदाहरणमात्रेण तस्यावगन्तुमशक्यत्वादित्यर्थः ॥ **प्रथममिति** ॥ वाच्याद्व्यङ्ग्यस्य व्यतिरेकसिद्ध्यर्थमेव ह्येतदुदाहरणम्; तस्य चेयता सिद्धे व्यतिरेके पश्चात् स्वावसरे रसध्वनेः स्वरूपप्रतिपादनं तदुदाहरणं च भविष्यति। वाच्यव्यतिरेकप्रदर्शनं चोक्तगोचरवस्तुध्वन्युदाहरण एव सुकरमिति तस्यैवादौ प्रदर्शनं युक्तमित्यर्थः। अत एवाह—**निर्विवादसिद्धेति** ॥ उक्तं हि प्राक् "विधिनिषेधौ विरुद्धाविति न कस्यापि विमतिः" इति। एतदुक्तं भवति—स्यादेतदेवम्, यद्युदाहरणमात्रेण रसस्वरूपावधारणं शक्योपपादं भवेत्; तत्तु तत्स्वरूपोपपादनमन्तरेण व्युत्पाद्यानां चित्तवृत्तिपद्धतावध्यारोहयितुमशक्यमिति व्यङ्ग्यस्य वाच्यव्यतिरेकप्रसाधनप्रस्तावानुरोधेन तदव्यतिरेकशङ्काकलङ्काङ्कुरविरहितविधिनिषेधरूपवाच्यव्यङ्ग्यविषयत्वादियं गाथात्र रसध्वन्युदाहरणावधीरणयापि वस्तुध्वन्युदाहरणतया वृत्तिकृता प्रयोजनविशेषाभिप्रायेण प्रदर्शितेति. न कश्चिद्दोष इति। एवं भट्टनायकभाषितं दूषयित्वा ध्वनिमार्गावलम्बिन एव कस्यचित्तद्व्याख्यानविषय-

१. ग. 'अनुभावं स्ववलनोदित-' ग. 'एव चानुपगमात्'
२. क. ख. '-शबलनोचित-' क. ख. 'एव भेदस्यानुगमात्'
३. क. ख. ग. घ. ङ. च. 'तावन्मात्रादेव' ४. ग. 'रसध्वनेः'

## लोचनम्

रुदाहरणं दत्तम् । यस्तु[1] ध्वनिव्याख्यानोद्यतस्तात्पर्यशक्तिमेव[2] विवक्षासूचकत्वमेव वा ध्वननमवोचत् स नास्माकं हृदयमावर्जयति । यदाहुः—"भिन्नरुचिर्हि लोकः" इति[3] । तदेतदग्रे यथार्थं प्रतनिष्याम इत्यास्तां तावत् ॥ भ्रमेति[4] ॥ अतिसृष्टोऽसि,[5] प्राप्तस्ते भ्रमणकालः ॥ धार्मिकेति ॥ कुसुमाद्युपयोगार्थं[6] युक्तं ते भ्रमणम् ॥ विस्रब्ध इति ॥ शङ्काकारणवैकल्यात् ॥ स इति ॥ यस्ते भयप्रकम्प्रामङ्गलतिकामकृत ॥ अद्येति ॥ दिष्ट्या वर्धस इत्यर्थः ॥

## कौमुदी

विपर्यासमुपन्यस्य सोत्प्रासं तदसम्भवमाह—**यस्त्विति** ॥ ध्वनिव्याख्यानोद्यत इत्यनेन काव्यलक्षणकाराग्रेसरमानितां द्योतयति । तात्पर्यशक्तिमभिहितान्वयवादिभिरभिहिताम् ; विवक्षासूचकत्वं सुगतमतानुगामिनिगदितम् ॥ **अस्माकमिति** ॥ ये वयं वस्तुसतत्त्वान्वेषणसातत्यव्यसनिनः ; न चास्मदीयहृदयावर्जनासंपादनमात्रं दोषाय भवति—[इति] साभिप्रायमाह—**यदाहुरिति** ॥ **तदेतदिति** ॥ पूर्वपक्षिभिरुत्प्रेक्षिततत्तद्रूपान्तरपरिनिर्मुक्तं परमकाव्यार्थसारभूमिमभिगतम् ॥ **तावदिति** ॥ इदानीमित्यर्थः । संप्रति प्रागुदाहृतगाथापदाकूतसर्वस्वमुन्मीलयति—**भ्रमेत्यादिना** ॥ यदुक्तम् "अतिसर्गप्राप्तकालयोर्ह्ययं लोट्" इति तदनुसारेण व्याचष्टे—**अतिसृष्टोऽसि** ॥ अतिसर्गोऽनुज्ञा । कुसुमादिभिर्य उपयोगः प्रयोजनं यदि वा कुसुमादीनामुपयोग उपार्जनम् । विस्रब्धतात्र भयराहित्यं विवक्षितमित्याह—**शङ्काकारणेति** ॥ सर्वनाम्नोऽत्रौचित्यादनुभूतमर्थ इत्याह—**यस्त इति** ॥ **[प्रकम्प्रामिति ॥]** प्रकर्षेण भयातिरेकात् विधारकप्रयत्ने जाग्रत्यपि हठात् स्वयमेव कम्पनशीलामित्यर्थः । अत एवोक्तम्—**अङ्गलतिकामिति** ॥ न तु सौकुमार्यादिगुणयोगादिह लतिकारूपणम् ; धार्मिके तदनुचितमेव । "सो सुणओ मारिओ देण" इत्येतावता सिद्धेऽपि अज्जेति वचनम्—इतः पूर्वस्मिन् काले विधिना वामत्वमवलम्बितम्, इदानीं तु भवद्भाग्यसौभाग्यमहिम्ना प्रादक्षिण्यमितीममर्थं द्योतयितुमित्याह—**दिष्ट्येति** ॥

१. ग. 'यत्तु'
२. घ. '-व्यापारो-'
३. ख. 'इति' नास्ति ।
　ग. 'इति वदताग्रे'
४. ग. 'भमेति'
५. क. ख. 'अपि'
६. क. ख. ग. 'उपकरणार्थं'

ध्वन्यालोकः

क्वचिद्वाच्ये[1] प्रतिषेधरूपे[2] विधिरूपो यथा—

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए महँ[3] मज्जहिसि ॥"

लोचनम्

**मारित इति** ॥ पुनरस्यानुत्थानम् ॥ **तेनेति** ॥ यः पूर्वं कर्णाकर्णिकया[4] त्वयाप्या-कर्णितो गोदावरीकच्छगहने प्रतिवसतीति । पूर्वमेव हि तद्रक्षायै एतत्त्वयोप-[5]श्रावितोऽसौ ; अधुना तु दृप्तत्वात् ततो गहनान्निस्सरतीति[6] प्रसिद्धगोदावरी-परिसरानुसरणमपि[7] तावत् कथाशेषीभूतम्[8] का कथा तल्लतागृहप्रवेशशङ्कायां[9][10] इति भावः ॥

[11]श्वश्रूरत्र शेते अथवा निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक रात्र्यन्ध शय्यायामावयोः शयिष्ठाः[12] ॥

कौमुदी

**अनुत्थानमिति** ॥ प्राणवियोजनरूपत्वान्मारणस्य । तेनेत्यप्यनुभूतत्वपरामर्शकमित्याशयेनाह—**यः पूर्वमिति** ॥ आकर्णितपूर्वत्वमेवोपपादयति—**पूर्वमेव हीति** ॥ तद्रक्षायै संकेतस्थानस्य रक्षां कर्तुम् उपश्रावित इति अन्यापदेशेनानयैव कर्णावतारिते-दृप्तवृत्तान्त इत्यर्थः । कथं तस्मिन्नेव प्रतिवसतस्तस्य निःसरणेन भ्रमारणव्यापार इत्यत्र दृप्तपदं हेतुतया योजयति—**अधुना त्विति** ॥ एवं पदद्योत्यार्थं प्रदर्श्य वाक्याभिप्रायमाह—**प्रसिद्धेति** ॥ प्रसिद्धं यत् गोदावरीपरिसरानुसरणं तदपीत्यर्थः ॥

१. ग. 'वाच्ये' नास्ति ।
२. ग. 'प्रतिषेधे'
३. क. ख. ग. 'महँण'
४. क. ख. घ. ङ. च. 'कर्णोपकर्णिकया'
५. क. 'यत्त्वयापश्रावि'
ख. 'एतत्त्वया'
ग. 'तत्त्वतयोपश्रावितः स च'
६. क. ख. ग. 'गहनान्न'
७. ग. '-तीरपारि-'
८. ङ. 'कथावशेषीकृतं'
९. क. ख. ग. 'गहन'
१०. ग. 'आशङ्कया'
११. घ. 'अत्ता इति' इत्यधिकम् ।
१२. क. ख. 'माङ्क्षीः । अत्र शयिष्ठा वा'

## लोचनम्

[1]महँ इति निपातोऽनेकार्थवृत्तिरत्र, [2]आवयोरित्यर्थे न तु ममेति ; एवं हि विशेषवचनमेव शङ्काकारि भवेदिति [3]प्रच्छन्नाभ्युपगमो न स्यात् । [4]काञ्चित्प्रोषितपतिकां तरुणीमवलोक्य [5]प्रवृद्धमदनाङ्कुरः[6] पान्थः अनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावोऽत्र विधिः ; न तु निमन्त्रणरूपोऽप्रवृत्त[7]प्रवर्तनास्वभावः, सौभाग्याभिमान[8]खण्डनप्रसङ्गात्[9] । अत एव 'रात्र्यन्ध' इति समुचितसमयसंभाव्यमानविकाराकुलितत्वं ध्वनितम् । भाव-तदभावयोश्च [10]साक्षाद्विरोधात् वाच्याद्[11]व्यङ्ग्यस्य स्फुटमेवान्यत्वम् ॥

## कौमुदी

ननु 'महँ' इत्यस्यैकार्थवृत्तित्वं प्रसिद्धमिति ममेत्येव व्याख्येयम्, न त्वावयोरिती-त्याशङ्क्य तदसम्भवमाह—**महँ इति** ॥ **निपात इति** ॥ अनेकस्मिन् द्वित्वविशिष्टेऽर्थे वृत्तिरस्येति तथोक्तः । कुतो वा प्रसिद्धार्थपरित्याग इत्यत्राह—**एवं हीति** ॥ कथमस्यां गाथायां प्रच्छन्नाभ्युपगमः यद्विरोधित्वं विशेषवचनस्येत्याशङ्क्य तद्व्याख्यानार्थं पीठबन्धं विधत्ते—**काञ्चिदिति** ॥ आलम्बनस्वभावादेवोदञ्चतो मदनाङ्कुरस्य तत्तादृश-संपूर्णतारुण्यविजृम्भाविशेषवशात् प्रथमावलोकसमय एव परां काष्ठामधितिष्ठन् प्रकर्षो जात इतीममर्थमवद्योतयितुमुक्तम्—काञ्चित्तरुणीमिति । प्रोषितपतिकामिति अभ्युपगमे हेतुत्वेनोपात्तम् । अनेन श्वश्रूरित्यादिवचनेन । यस्मान्निषेधद्वारकमभ्युपगमनं तस्माद्धेतो-रित्याह—**इतीति** ॥ प्रवृत्तिप्रतिबन्धकप्रतिषेधस्यापि प्रवृत्तिपर्यन्तत्वादौपचारिकं विधित्वमित्यर्थः । स्वतःप्राप्तनिमन्त्रणरूपार्थत्यागेन निषेधाभावार्थत्वाङ्गीकारे हेतुमाह—**सौभाग्येति** ॥ सौभाग्याभिमानसद्भावे गमकमाह—**अत एवेति** ॥ शृङ्गाररस-समुचितानां विकाराणां काष्ठाप्राप्तत्वोक्तेः तन्निबन्धनतयालम्बनस्य लोकोत्तरत्वसूचनात् सौभाग्याभिमानमेदुरिमा अत्र स्फुटतरमवभासत इत्यर्थः । संभोगसमुचिते निशासमये संभाव्यमानैः विकारैराकुलितत्वं रात्र्यन्धपदेन ध्वनितम् । अन्धशब्दो हि बाधितमुख्यार्थः सन्नपटुत्वं निमित्तीकृत्य व्याकुलत्वं ध्वनयति । भवतु निषेधाभावरूप एव विधिः, ततः किमित्यत आह—**भावतदभावयोश्चेति** ॥

१. क ख. 'महॅण'
   ग. 'हे'
२. घ. ङ. च. 'आवयोरित्यर्थे' नास्ति ।
३. घ. ङ. च. '-प्रच्छन्नो-'
४. क. ख. 'कश्चित्'
५. ग. 'प्रबुद्धमदनातुरं संपन्नं'
६. क. ख. 'संपन्नः' इत्यधिकः ।
७. ग. 'प्रवर्तनारूपः'
८. क. ख. 'खण्डनापदेशादत्रैव'
९. घ. ङ. च. 'प्रवेशात्'
१०. ग. 'साक्षात्' नास्ति ।
११. ग. 'व्यक्त्यास्य'

## लोचनम्

यत्त्वाह[1] भट्टनायकः "अहमित्यभिनयविशेषेणात्मदशावेदनात्[2] शाब्दमेतदपि" इति,[3] तत्र अहमिति तावत्[4] शब्दस्य नायं साक्षादर्थः ; काकादिसहायस्य च तावति ध्वननमेव व्यापार इति ध्वनेर्भूषणमेतत् ॥

'अत्ता' इति प्रयत्नेनानिभृत[6]संभोगपरिहारः । अथ च[7] यद्यपि भवान् मदनशरासारदीर्य[8]माणहृदयः उपेक्षितुं न युक्तः, तथापि किं करोमि पापो दिवसकोऽयम् । अनुचितत्वात् कुत्सितोऽयमित्यर्थः । प्राकृते पुंनपुंसकयोरनियमः । न च[9] सर्वथा त्वाम[10]मुपेक्षे ; यतोऽत्रैवाहं तत्प्रलोकयं[11] नान्यतोऽहं गच्छामि । तदन्योऽन्यवदनावलोकनविनोदेन दिनं

## कौमुदी

व्याख्यानान्तराल एवावसरायातं भट्टनायकभणितं ध्वनिभञ्जनमनुभाष्य दूषयति —यत्त्वाहेति ॥ एतदित्यभ्युपगमनम् । अपिशब्दः प्रथमगाथाव्यङ्ग्यार्थसमुच्चयार्थः ॥ तत्रेति ॥ शाब्दत्वाभ्युपगमे सतीत्यर्थः । शाब्दत्वं भाषमाणो भट्टनायकः प्रष्टव्यः—किमयं विधिरूपोऽर्थोऽहेशब्दस्य केवलस्य मुख्योऽर्थः, आहोस्वित्काकादिसहायस्य ? नाद्यः ; संकेतितत्वाभावात् । द्वितीये नास्माकं पक्षक्षतिरित्याह—**काकादीति** ॥ **तावतीति** ॥ अभिधावृत्त्यतिलङ्घिनीत्यर्थः । यस्मादेवं तस्मात् "अहमित्यभिनयविशेषेण" इत्यादि यदुक्तं तद्ध्वनिदूषणाभिप्रायेणोक्तमपि न दूषणम्, प्रत्युत दैवगत्या ध्वनेर्भूषणमापन्नम् । काकादेर्ध्वननव्यापारसाहायकपदे मूर्धाभिषिक्ततया अस्माभिरुक्तत्वादित्याह—**इति ध्वनेरिति** ॥

इदानीं प्रस्तुतमेव गाथापदव्याख्यानमनुवर्तयति—**अत्ता इति** ॥ शत्रुसान्निध्यसूचनमुखेन प्रवृद्धमकरध्वजाङ्कुरत्वप्रयुक्तप्रकामसंभोगप्राकट्यप्रागभावपरिपालनप्रयत्नविधानपरमित्यर्थः ॥ **अनुचितत्वादिति** ॥ सकलजनसंश्लाघनसर्वस्वभाजनभूतस्वच्छन्दसंभोगमहोत्सवारम्भयोग्यत्वाभावादित्यर्थः । दिवसशब्दस्य पुँल्लिङ्गत्वात् कथमिह नपुंसकनिर्देश इत्यत उक्तम्—**प्राकृत इति** ॥ **अत्रैवाहम्** ॥ आस इति शेषः । कालकलामपि प्रतिपालयितुमपारयमाणस्य कथं नाम दिव्यकल्पसहस्रायमाणदिवसातिवाहनसाहससम्भव

१. ग. 'तत्रापि'
२. क. ख. ग. च. '-शेष-'
३. घ. 'इति' नास्ति ।
४. क. ख. 'शब्दस्य तावत्'
५. ग. घ. ङ. च. 'अत्रेति'
६. ग. 'अमृत-'
७. क. ख. ग. ङ. 'च' नास्ति ।
८. क. ख. ग. '-दीर्य-'
९. घ. 'तु'
१०. क. ख. ग. 'समुपेक्ष्यः'
११. घ. 'तत्प्रलोकं येन'

ध्वन्यालोकः

क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा—

"वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्झ वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥"

लोचनम्

तावदतिवाहयाव इत्यर्थः । प्रतिपन्नमात्रायां च रात्रावन्धीभूतो मदीयां[1] शय्यां मा श्लिक्षः ; अपि तु निभृतनिभृतमेतं[2]दत्तां[3]भिधाननिकटकण्टकनिद्रान्वेषणपूर्वकमितीयर्दत्र[4] ध्वन्यते ॥

व्रज ममैवैकस्यां[5] भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत[6] ॥

कौमुदी

इति तदुपायं प्रलोकयेतिपदसूचितमाह—**तदन्योऽन्येति** ॥ 'अन्योऽन्यवदनेति' 'अतिवाहयावः' इति च समानानुरागत्वसौभाग्यसूचनमुखेन "अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" इति न्यायेन दिवसातिवाहदुःखस्य कथंकथमपि सह्यत्वं दर्शितम् । 'प्रतिपन्नमात्रायाम्' इति 'अन्धीभूतः' इति च निषेधविषयताभिप्रायेणोक्तम् । दिवसं कथमप्यतिवाहयतः शर्वरीसमयागमनमेव प्रतीक्षमाणस्य तदागमनमात्र एव प्रतीक्षणीयान्तरावधीरणेनानिभृतमेव ससंभ्रमतया च शय्याप्राप्तिः सम्भाव्यते ; तदुभयमपि मा भूदिति अन्धीभूतत्वप्रतिषेधे शेषविधिः ॥ **निभृतनिभृतमिति** ॥ अत्यर्थमेव प्रशमसहितं यथातथेत्यर्थः । रात्रिप्रमुख एव तत्प्राप्तिप्रतिषेधे अस्य शेषविधिः ॥ **निद्रान्वेषणपूर्वकमिति** ॥ शय्यां प्राप्नुहीत्यध्याहारः ; माङा विना 'श्लिक्षः' इत्यस्यानुषङ्गासम्भवात् । एतस्यात्ताभिधानस्य श्वश्रूनामधेयस्य निकटवर्तिनः कण्टकस्येति ईर्ष्यातिरेककृतः कण्टकत्वारोपः । 'निभृतनिभृतमेव दत्तावधान' इति पाठे अस्मद्वृत्तान्तवेदनेऽवधानवत इत्यर्थः ; अत्रापि श्वश्रूरेव कण्टकशब्देनोक्ता । एकाग्रमनस्तामवलम्ब्य किमियमव्याजं स्वपिति किं वा नेति सम्यग्विचार्य स्वयमेवाव्यभिचारिस्वापलिङ्गेन स्वापमवधार्यैव शय्यां प्राप्नुहीत्यर्थः ॥

१. ग. 'मदीयायां शय्यायां'
२. क. ख. ग. 'एत्य'
३. क. ख. 'दत्ताभिधान'
ग. 'दत्तावधान'
४. घ. 'इय ... न्यते' नास्ति ।
५. घ. ङ. 'एव' अधिकम् ।
६. क. ख. 'जनिष्यते'

ध्वन्यालोकः

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

"दे आ पसिअ णिवत्तसु मुहससिजोह्णाविलुत्ततमणिवहे[1]।
अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे॥"

लोचनम्

अत्र व्रजेति विधिः। न प्रमादादेव नायिकान्तरसङ्गमनं तव, अपि तु गाढानुरागात्, येन[2] अन्यादृङ्मुखवर्ण[3]गोत्रस्खलितादि[4] च। केवलं पूर्वकृतानुपालनात्मनो[5] दाक्षिण्येनैकरूपताभिमानेन[6] त्वमत्र स्थितः[7], तत्सर्वथा शठोऽसि इति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायः अत्र प्रतीयते। न चासौ व्रज्याभावरूपो निषेधः; नापि विध्यन्तरमेव अन्यनिषेधाभावः[8][9]॥

दे[10] इति निपातः प्रार्थनायाम्। आ इति तावच्छब्दार्थे[11]।

कौमुदी

**विधिरिति**॥ वाच्य इति शेषः। न प्रमादादित्यादि प्रतीयमानार्थकथनम्॥ **एकरूपताभिमानेन**॥ वस्तुतो हि भिन्नरूपत्वमेव वर्तते; तन्निगूहनेन त्वविद्यमानमेकत्वमारोप्येत्थं मयि त्वं वर्तसे॥ **सर्वथेति**॥ अन्विष्यमाणे सति सर्वमेवैतच्छाठ्यगमकमित्यर्थः। प्रतीयमानार्थं प्रदर्श्य तस्यानुभयरूपत्वमाह—**न चासाविति**॥ यथा भ्रमेति विधौ वाच्ये भ्रमणाभावरूपस्य निषेधस्य व्यङ्ग्यत्वम्, यथा वा शय्यां मा श्लिक्ष इत्यत्र निषेधे वाच्ये प्राप्तिनिषेधाभावात्मकविधेर्व्यङ्ग्यत्वम्, न तथेहाभिप्रायविशेषस्य व्यङ्ग्यस्य व्रज्याभावरूपनिषेधात्मकत्वं व्रज्यापेक्षयान्यनिषेधाभावादिरूपविधिरूपत्वं वा अवगम्यते; अभिप्रायस्य व्यङ्ग्यस्य तदुभयरूपत्वाभावात् तन्मात्रस्य चेह प्रतीयमानत्वादित्यनुभयरूपत्वं व्यङ्ग्यस्येत्यर्थः॥ दे आ इति निपातौ प्राकृतसिद्धौ; कथं दे आ

१. ख. ग. 'तमोणिवहे'
२. क. ख. 'एव'
३. क. ख. 'राग'
   ग. घ. 'वर्णो'
४. क. ख. 'स्खलनादि'
   ग. 'स्खलनादि तानि'
५. ग. '-पालनं न'
   घ. '-नात् आत्मना'
६. क. ख. 'एव' अधिकम्।
७. ग. घ. 'आस्थितः'
८. क. ख. 'विध्यभाव-'
९. क. ख. ग. '-वात्-'
१०. क. ख. ग. 'हे'
११. क. ख. 'तेनायमर्थः' अधिकम्।

## लोचनम्

प्रार्थये, प्रसीद[1] तावत्, निवर्तस्व मुखशशिज्योत्स्ना[2]विलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥

अत्र [3]व्यवसितात् गमना[4]न्निवर्तस्व इति प्रतीतेः निषेधो वाच्यः । गृहागता[5] नायिका गोत्रस्खलिताद्यपराधिनि नायके सति ततः प्रतिगन्तुं प्रवृत्ता नायकेन चाटू[6]पक्रम-पूर्वकं निवर्त्यते—न केवलं स्वात्मनः मम च [7]निवृत्त्या विघ्नं करोषि यावदन्यासा-मपि । ततस्तव न कदाचन [8]सुखलवलाभोऽपि भविष्यति[9] । अत एव हताशासि इति वल्लभाभिप्रायरूपः [10]चाटुविशेषो व्यङ्ग्यः । [11]यदि वा सख्योपदिश्यमानापि तदवधीरणया गच्छन्ती सख्या उच्[12]यते—न केवलमात्मनो विघ्नं करोषि लाघवाद[13]बहुमानास्पदम् आत्मानं कुर्वती, अत एव हताशा, यावद्वदन-चन्द्रिकाप्रकाशितमार्गतया अन्यासाम[14]प्यभिसारिकाणां विघ्नं करोषि--इति सख्यभि-प्रायरूपश्चाटुविशेषो व्यङ्ग्यः । अत्र तु व्याख्यानद्वयेऽपि व्यवसितात् प्रतीप-

## कौमुदी

इत्युदाहरणस्य वाच्यस्य विधिरूपत्वम् 'मा श्लिक्षः' इत्यादाविव निषेधकपदाभावात् इत्याशङ्क्य तदभावेऽपि निषेधप्रतीतेरदोष इत्याह—**अत्र व्यवसितादिति** ॥ प्रतीय-मानार्थप्रकटनार्थं पीठिकां रचयति—**गृहागतेत्यादिना** ॥ इत्थं व्याख्यानद्वयं प्रदर्श्य तस्य स्वानभिप्रेतत्वं हेतुप्रदर्शनेनाह—**अत्र त्विति** ॥ तुशब्दोऽयमरुचिं द्योतयति । यदिदं व्याख्यानद्वयं तस्मिन्निहास्यां गाथायां प्रेयोरसवदलङ्कारस्यैवोदाहरणं स्यात् ; न ध्वनेः उदाहार्यतया प्रस्तुतस्य ध्वनेरिति सम्बन्धः ॥ प्रेयांश्च रसवांश्चेति प्रेयोरसव-दिति द्वन्द्वस्यैकवद्भावः ; तच्चालङ्कार इति च पश्चात् कर्मधारयः ; प्रेयसो रसवतो वा

१. क. ख. 'तावत्प्रसीद'
२. ग. ज्योत्स्नाभा-'
३. क. ख. '-अध्यवसि-'
४. क. ख. च. 'गमनात्' नास्ति ।
५. क. ख. '-गृहागतना-'
६. ग. '-चारूपक्रम-'
७. ग. घ. ङ. च. 'निर्वृति' ख. 'निर्वृत्या'
८. घ. 'सुखलाभो'
९. ग. 'इति' अधिकः ।
१०. ग. '-चाविशे-
११. क. ख. 'यदि वा' नास्ति ।
१२. क. ख. ग. 'उपदिश्यते'
१३. क. 'अबहुमानम्' ख. 'अबहुमानमात्मानम्'
१४. क. ख. ग. च. 'अपि' नास्ति ।

## लोचनम्

गमनात् प्रियतमगृहगमनाच्च निवर्तस्वेति पुनरपि वाच्य एव विश्रान्तेः गुणीभूत-व्यङ्ग्यभेदस्य[1] प्रेयोरसवदलंकारस्य उदाहरणमिदं[2] स्यात्, न[3] ध्वनेः। तेन अयमत्र भावः—काचित् रभसात् प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेन एवमुपश्लोक्यते अप्रत्यभिज्ञानच्छलेन[4]। अत एवात्मप्रत्यभिज्ञापनार्थमेव नर्मवचनम् 'हताशे' इति। अन्यासां[5] च विघ्नं करोषि; तव चेप्सितलाभो भवि-

## कौमुदी

अलङ्कारस्येत्यर्थः। भावस्य निर्वेदादेः देवतादिविषयाया रतेर्वा गुणीभावे प्रेयोलङ्कारः; श्रृङ्गारादिरसस्याङ्गभावे रसवान्नाम, "रसभावतदाभासतत्प्रशमानां निबन्धे रसवत्प्रेयऊर्ज-स्विसमाहितानि" इति लक्षितत्वात्। तत्र सख्युक्तिपक्षे देवादिविषयेति सख्यादीनामपि संग्रहात् सख्या नायिकाविषयाया रतेर्भावत्वात् प्रेयोऽलङ्कार एव स्यात् न ध्वनिः, वाच्यं प्रति तस्य गुणीभावात्। नायिकोक्तिपक्षे तस्य नायिकाविषया रतिः श्रृङ्गार इति तस्य गुणीभावे रसवदलङ्कार एव स्यात् न ध्वनिरित्यर्थः। अस्तु ध्वन्युदाहरणत्वम् चेति नेति विशेषणेनाह—**गुणीभूतव्यङ्ग्यभेदस्येति**॥ गुणप्रधानभावयोरन्योऽन्यपरिहारा-त्मना स्थितत्वान्नैकत्वं न्याय्यमित्यर्थः। गुणीभूतव्यङ्ग्यत्वे हेतुः—**वाच्य एवेति**॥ "यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत्" इति व्यङ्ग्यस्य वाच्योपस्कारकत्वे सति गुणीभूतव्यङ्ग्यत्वं स्थितम्। तत्प्रभेदस्य तद्रूपत्वमेवेत्यर्थः। कथं पुनः ध्वन्युदाहरणीभावसमुचितं व्याख्यानमित्यत आह—**तेनायमिति**॥ रभसात् दृढतरानुरागातिरेककृतेन त्वरातिशयेन तच्छब्देन नाभिसारिकायाः परामर्शः॥ **उपश्लोक्यते**॥ उपश्लोकनमात्राभिप्रायमेवैतदित्यर्थः॥ **अप्रत्यभिज्ञानच्छलेन**॥ केयमित्थं-कारं प्रवर्तत इत्यप्रत्यभिज्ञानमात्मन्यारोप्येत्यर्थः॥ **अत एवेति**॥ यत एव च्छलप्रवृत्तं नर्मवचनमात्रमेवैतत्, तत एव तस्या आत्मप्रत्यभिज्ञापनमात्रमेतत् प्रयोजनं नान्यदित्यर्थः॥ 'हताशे' इत्यस्योक्ताभिप्रायानुगुणमर्थमाह—**अन्यासामिति**॥ नन्वस्मिन्नपि व्याख्याने कथं

१. ग. 'व्यङ्ग्यस्य च'
२. क. ख. 'इदं' नास्ति।
३. ग. 'तद्ध्वद्वनेः'
४. घ. '-ज्ञाछलेन'
५. क. ख. 'अन्यासामपि'

## लोचनम्

ष्यतीति का प्रत्याशा । अत एव मदीयं वा गृहमागच्छ त्वदीयं वा गच्छाव इत्युभयत्राप्यतात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाटूात्मा व्यङ्ग्य इत्येवावतिष्ठते । अन्ये तु तटस्थानां सहृदयानामभिसारिकां प्रतीयमुक्तिरित्याहुः । तत्र हताशे इत्यामन्त्रणादि युक्तमयुक्तं वेति सहृदया एव प्रमाणम् ॥

एवं वाच्यव्यङ्ग्ययोः धार्मिकपथिकप्रियतमाभिसारिकाविषयैक्येऽपि स्वरूपविरोधात्

## कौमुदी

ध्वन्युदाहरणत्वमनुभयरूपत्वं वा व्यङ्ग्यस्येत्यत उक्तम्—**अत एवेति** ॥ आत्मप्रत्यभिज्ञापनोपयोगितया नर्मवचनमात्ररूपत्वादित्यर्थः । अनुभयश्चाटूात्मा यो वल्लभाभिप्रायो व्यङ्ग्यः स इयत्येव उक्तरूपव्यङ्ग्यस्वरूपमात्र एवावतिष्ठते ; न पश्चाद्वाच्यार्थोपस्काराय धावतीति योजना । अतोऽस्मिन् ध्वन्युदाहरणत्वमप्रत्यूहमित्यर्थः । व्याख्यानान्तरमनुभूय सावष्टम्भमपाकरोति—**अन्ये त्विति** ॥ मीमांसकश्रोत्रियादीनामीदृशी चाटूक्तिः दुर्लभेति सहृदयानामित्युक्तम् । सहृदयानामपि न हृदयवल्लभादिप्रायाणामनुप्रविष्टानामित्याह—**तटस्थानामिति** ॥ आदिशब्देन प्रसीदेत्यादेः संग्रहः । ताटस्थ्ये सति सर्वमनुचितमेवैतत् स्यादित्यर्थः ॥

उक्तोदाहरणैरेवात्यन्तिकविरोधनिबन्धनस्य वाच्यव्यङ्ग्यभेदस्य सिद्धत्वात् किमर्थं भिन्नविषयोदाहरणप्रदर्शनमित्याशङ्क्य विषयाभेदप्रयुक्तां कामप्यभेदशङ्कामपि निराकृत्य तद्भेदस्यातिस्फुटीकरणार्थं तदित्याह—**एवमिति** ॥ आद्योदाहरणे द्वयोरपि वाच्यव्यङ्ग्ययोरेको धार्मिक एव विषयः, द्वितीये पथिकः, तृतीये प्रियतमः, चतुर्थे अभिसारिकेति विषयैक्ये सत्यपीत्यर्थः । 'व्यवस्थितः' इति वक्तव्ये 'व्यवस्थापितः' इति वचनं किमर्थम्, निष्ठाप्रत्ययसामर्थ्यात् भूतत्वं च प्रतीयमानं कथं सङ्गच्छताम्—इत्यपेक्षायाम् "प्रवृत्तस्य णिचोक्तिः स्यात् पचन्तं पाचयेद्यथा" इति नीत्या प्रयोजकव्यापारस्य प्रयोज्यव्यापारनिष्पत्तिपर्यन्तीभावनैयत्यात् व्यवस्थितिसामर्थ्यद्योतनमुखेन तद्दार्ढ्यप्रतिपत्त्यर्थम्, व्यवस्थापितत्वोक्तिश्च व्यवस्थापनशक्यत्वाभिप्राया, इदानीमेव तद्व्यवस्थापनस्य

१. क. ख. ग. '-त्रापि तात्पर्य-'
२. ङ. 'इति' नास्ति ।
३. क. ख. ग. '-व व्यव-'
४. घ. 'तत्र' नास्ति ।
५. ग. घ. ङ. च. 'आमन्त्रणौचित्य'
६. क. ख ग. 'पान्थ'
७. क. ख. ग. 'भेदात्'

ध्वन्यालोकः

क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा—

"कस्स वा ण होइ रोसो दठ्ठूण पिआएँ सव्वणं अहरम् ।
सभमरपउमग्घाइणि वारिअवामे सहस्सु एह्णिम् ॥"

लोचनम्

भेद इति प्रतिपादितम्; अधुना तु विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेद इत्याह—[१]क्वचिद्वाच्यादिति ॥ व्यवस्थापित इति ॥ विषयभेदोऽपि विचित्ररूपो [२]व्यवतिष्ठमानः सहृदयैः व्यवस्थापयितुं शक्यत[३] इत्यर्थः ।

[४]कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

[५]कस्स वेति ॥ अनीर्ष्यालोरपि [६]भवति रोषः । दृष्ट्वैव[७] अकृत्वापि । कुतश्चिदेवापूर्वतया प्रियायाः सव्रणमधरं विलोक्य[८] । सभ्रमरपद्माघ्राणशीले । शीलं हि कथंचिदपि वारयितुं [१०]न शक्यम् । वारिते वारणायां [११]वामे तद[१२]नङ्गीकारिणि सहस्वेदानीम्

कौमुदी

वर्तमानत्वात्; अतो न दोषः कश्चिदित्याह—**विषयभेदोऽपीति** ॥ **विचित्ररूप इति** ॥ वक्ष्यमाणाभिप्रायः । कस्य वेत्याक्षेपस्याभिप्रायमाह—**अनीर्ष्यालोरिति** ॥ एवकारस्यार्थमाह—**अकृत्वापीति** ॥ वस्तुतः सव्रणत्वाभावेऽपीति यावत् । तर्हि कथं तदवलोकनमित्युक्तम् ॥ **कुतश्चिदेवेति** ॥ केनापि कारणेन न प्रागदृष्टविशेषान्तरवत्तया प्रमुखतः सव्रणतयावभासमानत्वादित्यर्थः । आघ्राणनशीलत्वोक्तिरुपालम्भमर्षणव्यसनस्य दुर्निवारत्वेन सुहृदः प्रतिविधेयत्वसूचनार्थेत्याह—**शीलं हीति** ॥ शीलत्वादेवेति भावः । यथाग्न्यादेः दहनादिशीलत्वम् । वारित इति निष्ठाप्रत्ययस्य भावविषयत्वमभिप्रेत्येत्याह—**वारणायामिति** ॥ वामशब्दोऽयं प्रतिकूलार्थवृत्तिरित्याह—**तदनङ्गीकारिणीति** ॥

१. क. ख. ग. 'क्व...ति' नास्ति ।
२. च. 'व्यवतिष्ठानः'
३. घ. 'शक्यः'
४. घ. ङ. च. छाया नास्ति ।
५. क. ख. ग. घ. च. 'कस्य वेति'
६. क. ख. ग. 'न भवति'
७. क. ख. ग. 'दृष्ट्वेति'
८. क. ख. ग. 'दृष्ट्वावलोक्य'
९. च. 'घ्राणन-'
१०. घ. 'न' नास्ति ।
११. क. ख. ग. 'हे' अधिकः ।
१२. क. ख. ग. 'तदङ्गीकारिणि'

ध्वन्यालोकः

**अन्ये चैवंविधाः प्रकाराः वाच्याद्विभेदिनः प्रतीयमानभेदाः संभवन्ति ।**

लोचनम्

उपालम्भपरम्परामित्यर्थः । अत्रायं भावः—काचिदविनीता कुतश्चित् खण्डिताधरा, निश्चिततत्सविधसन्निधाने[1] तद्भर्तरि, तमनवलोकमानयेव[2] कयाचिद्विदग्धसख्या तद्वा[3]च्यतापरिहारायैव[4]मुच्यते । सहस्वेदानीमिति तु वाच्यमविनयवती विषयम् । भर्तृविषयम् अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम् । [5]सहस्वेत्यपि च तद्विषयव्यङ्ग्यम् । तस्यां[6] प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेशिक[7]लोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । त[8]त्सपत्न्यां च त[9]दविनयप्रह्लादिता[10][11]यां सौभाग्यातिशयख्यापनम्

कौमुदी

गाथाभिप्रायं वक्तुं पीठिकां रचयति—**काचिदिति** ॥ कुतश्चित् चौर्यकामुकात्, हेतुतया निर्देशः तद्व्यापारस्य नायिकाविनयातिरेकप्राधान्यप्रवृत्तत्वसूचनार्थः । सख्या निश्चितं तस्या नायिकायाः सविधे सन्निधानं यस्येति तथा । तद्भर्त्रनवलोकनाभिनये हेतुः—**विदग्धसख्येति** ॥ तद्वाच्यता भर्तुरुपालम्भविषयत्वम् । वाच्यव्यङ्ग्ययोर्विषयभेदमाह—**सहस्वेत्यादिना** ॥ वाच्यमुपालम्भपरम्परासहनात्मकम् अपराधाभावरूपमावेद्यमानमत्र व्यङ्ग्यम् । तच्च भर्तृविषयं भवतीति विषयभेद इत्यर्थः । यदविनयवतीविषये वाच्यं तदेव भर्तृविषये व्यङ्ग्यमपि केवलं कोपोपशमनरूपं तदित्येतावदित्याह—**सहस्वेति** ॥ इयं वराक्येवमेव खण्डिताधरा वर्तते ; अतोऽन्यहेतुकत्वाशङ्कया कोपोपरागकलुषीकृतहृदयो मा भूः ; प्रथीयांसं प्रसादमेवावलम्बस्वेत्यर्थः । प्रातिवेशिकजनविषयेऽपि व्यङ्ग्यान्तरमङ्कुरयति—**तस्यामिति** ॥ नायकोपालम्भदर्शनात् नायिकापराधं सन्दिहानो यः प्रातिवेशिकजनः तद्विषयप्रत्यायनं निरपराधैषेति

१. क. ख. ग. 'तत्सविधसंविधाने भर्तरि'
२. क. ख. 'अनवलोक्यमानयैव'
३. ग. 'तदनार्यपरि-'
४. क. ख. 'एतत्'
५. क. ख. ग. 'सह...ङ्ग्यम्' नास्ति ।
६. क. ख. ग. 'च' अधिकः ।
७. क. ख. ग. 'वेश्मि'
८. घ. 'तु'
९. क. ख. ग. घ. च. 'तत्पत्न्याम्'
१०. क. ख. ग. 'तदुपालम्भन' इत्यधिकः ।
११. क. ख. ग. 'प्रहृष्टायाम्'

ध्वन्यालोकः

तेषां दिङ्मात्रमेतत्प्रदर्शितम् । द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्चमग्रे

लोचनम्

'प्रियायाः' इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये[1] इयता[2] खिलीकृतास्मीति लाघवमात्मनि ग्रहीतुं[3] न युक्तम्, [4]प्रत्युतायं बहुमानः ; सहस्व शोभस्वेदानीम्—इति सखीविषयं सौभाग्य[5]ख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभा इत्थं रक्षिता ; पुनः [6]प्रकटाधरदंशनविधिरत्र न युक्तः[7]—इति तच्चौर्यकामुकविषयसंबोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलो[8]कविषयं व्यङ्ग्यमिति । तदेतदुक्तं[9] व्यवस्थापितशब्देन ॥ अग्र इति ॥

कौमुदी

निश्चयोत्पादनम् । ख्यापनरूपं [सौभाग्यख्यापनरूपम्] यद्व्यङ्ग्यं तत्सपत्नीविषयम् । कथं सपत्नीषु तत्ख्यापनम् उत्थापकाभावादित्याह—**प्रियाया इतीति** ॥ सामान्यविषयमपि 'प्रियायाः' इति पदं विशेषे पर्यवस्यत् "यत्रेर्ष्या तद्गतः स्नेहः" इत्युक्तदिशा निरतिशयेर्ष्याविषयत्वात् भवतीभ्योऽपीयमेवास्य प्रियेति सौभाग्यातिशयोऽस्या इहावगम्यत इत्यर्थः । उक्तव्यङ्ग्योपजीवनेन नायिकाविषयमेव व्यङ्ग्यमाह—**सपत्नीमध्य इति** ॥ इयता अविनयस्फुटोद्भावनेन, खिलीकारः निःसारीकरणम् ; सहनमिह सपत्न्यभिभवनरूपम् ; सख्यत्राविनयवत्येव । अथ चौर्यकामुकतटस्थलोकविषये क्रमेण व्यङ्ग्यं प्रदर्शयति—तत्र हृदयवल्लभाद्य कथञ्चिद्रक्षिता ; इत ऊर्ध्वं त्वमेवेदृशादुर्दशोदयावकाशविश्रान्तव्यापार एव स्वैरमुपभुङ्क्ष्वेति शिक्षाक्रमो व्यज्यत इत्यर्थः । इतिशब्दो भावकथनसमाप्त्यर्थः । न चैतदुत्प्रेक्षामात्रेणोक्तम्, विविधमवस्थापितो व्यवस्थापित इति वृत्तिग्रन्थानुरोधादित्याह—**तदेतदुक्तमिति** ॥

१. ङ. 'तत्सप-'
२. ग. 'इयत्'
३. घ. 'गर्हितुम्'
४. घ. 'प्रत्युत' नास्ति ।
५. क. ख. ग. '-प्रख्या-'
६. क. ख. 'प्रकटरदनदंशनविधिर्न क्रियेयः'
७. ग. 'प्रत्युतायं बहुमानः' इत्यधिकः ।
८. क. ख. 'लोक' नास्ति ।
९. च. 'इति' अधिकः ।

ध्वन्यालोकः

**दर्शयिष्यते । तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते,[1] न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव । तथा हि वाच्यत्वं तस्य**

लोचनम्

द्वितीयोद्द्योते "असंलक्ष्यक्रमव्यङ्ग्यः क्रमेण[2] द्योतितः परः" इति विवक्षितान्यपरवाच्यस्य द्वितीयप्रभेदवर्णनावसरे । [3]यथा हि विधिनिषेधतद[4]नुभयात्मना रूपेण संकलय्य वस्तुध्वनिः संक्षेपेण सुवचः[5] तथा नालङ्कारध्वनिः, अलङ्काराणां भूयस्त्वात् । तत एवोक्तम्—**संप्रपञ्चमिति** ॥ [6]**तृतीयस्त्विति** ॥ तुशब्दो व्यतिरेके । वस्त्वलंकारावपि शब्दाभिधेयत्वमध्यासाते तावत् ; रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते ; अथ चास्वाद्यमानतां[7]प्राणतया भा[8]न्ति ; तत्र[9] ध्वननव्यापारादृते नास्ति कल्पनान्तरम्,

कौमुदी

अग्र इत्येतद्विशेषे पर्यवसाययति—**द्वितीयोद्द्योत इति** ॥ वाच्यात् विभिन्नत्वं यद्यपि वस्त्वलंकारध्वन्योरपि अविशिष्टम्, तथापि संक्षेपार्हत्वतदनर्हत्वकृतो विशेषोऽस्तीति सप्रपञ्चं वृत्तिकृतोक्तमित्याह—**यथेति** ॥ वस्तूनां हि विधिनिषेधतदनुभयात्मकतया त्रिप्रकारान्यतरान्तर्भूतत्वं प्रमाणन्यायप्रसिद्धमिति संकलनया सामस्त्येन तदभिधानं संगच्छते । नैवमलङ्काराणाम्, वाग्विकल्परूपतया तेषामानन्त्यादेकरूपोपादानेन संकलनस्याशक्यत्वादिति नात्र तदुदाहरणम् ; किं तु तत्रैव तत्प्रपञ्चप्रदर्शनं करिष्यत इति तत्रैव वाच्याद्भिन्नत्वमप्यवधारणीयमित्यर्थः ॥ **व्यतिरेक इति** ॥ न विशेषमात्रार्थस्तुशब्द इत्यर्थः । व्यतिरेकमेव स्फोरयति—**वस्त्वलङ्कारावपीति** ॥ शब्दाभिधेयत्वमपि तदनभिधेयत्वमपीत्यर्थः । तावदित्यत्रिमतौ । वृत्तिगतादिशब्दं व्याकुर्वन्नाह—**रसभावेति** ॥ उक्तं हि "यस्तु स्वप्नेऽपि" इत्यादि ॥ **अभिधीयन्ते** ॥ अभिधाव्यापारस्य विषयीभवन्तीत्यर्थः । तर्हि नृशृङ्गादिवदसत्त्वमेवामीषामापतितम्, नेत्याह—**अथ चेति** ॥

१. क. ख. 'प्रकाश्यते'
२. क. ख. ग. 'क्रमेणो-'
३. क. ख. ग. 'तथा हि'
४. क. ख. ग. 'तदुभय-'
५. क. ख. ग. 'सुवचनः'
६. घ. 'तृतीयमिति'
७. क. ख. 'चास्वाद्यप्राणतया'
ग. 'वास्वाद्यप्राणतया'
८. क. ख. ग. 'प्रतिभान्ति'
९. ग. 'तत्र तु'

लोचनम्

स्खलद्गतित्वाभावे मुख्यार्थबाधादेर्लक्षणानिबन्धनस्यानाशङ्कनीयत्वात् । औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसो व्यभिचारिण्या भावः ; अनौचित्येन तदाभासः, रावणस्येव सीतायां रतेः । यद्यपि तत्र हास्यरसरूपतैव "शृङ्गाराद्धि भवेद्धासः" इति वचनात्, तथापि पाश्चात्येयं सामाजिकानां स्थितिः । तन्मयीभवनदशायां तु

कौमुदी

न भानमात्रं तत्सत्तावेदकम्, असतोऽपि शुक्तिरजतादेर्भानात् ; तेन बाधराहित्यसूचनार्थं भान्तीति वर्तमानलकारप्रयोगः । यदाकारं हि यद्भानं तत्तदाकारवस्तुसद्भावोपस्थापकं प्रसिद्धम् । तेन रस्यमानतैकसाररसाद्यर्थसत्तासिद्ध्यर्थं भानस्य तत्समुचिताकारशालितां दर्शयितुमुक्तम्—**आस्वाद्यमानताप्राणतयेति** ॥ ननु किंप्रमाणजन्यमेतत् भानम्? न तावत्प्रत्यक्षम्, इन्द्रियसंप्रयोगसमनन्तरमनुपजायमानत्वात् । नानुमानिकम्, तद्व्याप्त-लिङ्गविशेषजनितत्वविरहात् । नापि शाब्दम्, तदभिधाव्यापारगोचरीभावानर्हत्वात् । न चास्ति प्रमाणान्तरमेतदनुगुणमित्यत्राह—**तत्रेति** ॥ रसादिभानोत्पादने विषय इत्यर्थः ॥ ननु लक्षणावृत्तौ क्लृप्तायामेव जाग्रत्यां तदवधीरणे कुतोऽनवक्लृप्तध्वननव्यापार-कल्पनापरिक्लेश इति कल्पनान्तरमसिद्धमित्यत्राह—**स्खलद्गतित्वाभाव इति** ॥ स्खलद्गतित्वास्थाने चानवस्थादौस्थ्यापत्तिरित्यर्थः । रसादीनां सर्वेषामपि चित्तवृत्ति-रूपत्वेनाविशेषे कुतो हेतोरयं विशेष इत्याकाङ्क्षायां विषयकृतो भेद इत्याह—**औचित्ये-नेति** ॥ स्थायिन्या इति भावनिवृत्त्यर्थम् । औचित्येन प्रवृत्तावित्यभ्यासव्युदासार्थम् । अयमर्थः—लोकसिद्धापि हि सती चित्तवृत्तिरनेकरूपालौकिकविभावादिसमास्वादनसामग्री-समुपजायमानास्वादनरूपा लौकिकप्रतीतिगोचरभावमापद्यमाना अनेकरसादिशब्दव्यप-देशभाजनी भवति । तत्र यदा स्थायिनी हेतुनिरपेक्षतया स्वभावसिद्धा चित्तवृत्तिरास्वाद-गोचरस्तदा रसः ; यदा तु तद्विपरीततया व्यभिचारिणी तदा भावः । आभासत्वं तु तयोरौचित्यानौचित्यप्रवृत्तत्वनिमित्तमेव, न स्वरूपगतविशेषान्तरनिबन्धनम् ॥ **तदाभास इति** ॥ तच्छब्देन रसभावयोर्ग्रहणम् । नन्वनौचित्यप्रवृत्तत्वस्य रसान्तररूपतापत्तिहेतुत्व-स्थितेः कथमाभासत्वमात्रापादकत्वोक्तिरित्याशङ्क्य कालभेदेनोपपत्तिः प्रतिपत्तिभेदेन वा ; तदुभयाविरोधमाह—**यद्यपीति** ॥ **तत्रेति** ॥ अनौचित्येन प्रवृत्तौ ॥ **स्थितिः** ॥ युक्तिकृतो

१. क. ख. 'रस' नास्ति । २. क. ख. ग. 'हास्यः'

## लोचनम्

रतेरेवास्वाद्यतेति शृङ्गारतैव भाति[1] पौर्वापर्यविवेकावधीरणेन, "दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिम्" इत्यादौ । तदसौ शृङ्गाराभास एव ; तदङ्गं[2] भावाभासः । चित्तवृत्तेः प्रशम एव प्रक्रान्ताया हृदयं[3]माह्लादयति यतो विशेषेण, तत एवं[4] तत्संगृहीतोऽपि पृथग्गणितोऽसौ । यथा[5]

"एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं हृदयस्थितेऽ[6]प्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलन[7]ामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहः[8] ॥"

## कौमुदी

वस्तुतत्त्वाध्यवसायः ॥ **पाश्चात्येति** ॥ तन्मयीभवनकालादुत्तरकालीनेत्यर्थः ॥ **रतेरिति** ॥ यथा रामस्य सीतायां रतिरास्वाद्यते ततो मात्रयापि निर्विशेषमित्यर्थः ; यः पूर्वापरविवेकः तमुत्पाद्यमानमपि स्थगयित्वेत्यर्थः । उपसंहरति—**तदसाविति** ॥ प्रतीतिप्राणत्वा-द्रसस्वरूपत्वस्थितेरिति भावः ॥ **तदङ्गमिति** ॥ उक्तलक्षणरसाभासस्याङ्गभूतो यो भावः स भावाभास इत्यर्थः । भावस्य प्रशमो नाम अभावः, स च भावान्तरमेव । "भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्" इति स्थितेः । तथा च भावशब्देनैव तद्ग्रहणसंभवे किमर्थः पृथक् तद्ग्रहणप्रयास इति शङ्कां निराकुर्वन् तत्स्वरूपमाह —**चित्तवृत्तेरिति** ॥ प्रशम एव भावान्तरोदयनिरपेक्ष एव निवृत्त्यात्मकोऽभावः, विशेषेण सातिशयमित्यर्थः । यद्भावजन्याह्लादातिरेकेण कमप्याह्लादं पुष्णातीत्यर्थः ॥ **तत्संगृहीत इति** ॥ भावशब्देन संगृहीतः ॥ **एकस्मिन्निति** ॥ विशृङ्खलमानग्रह-विजृम्भाविशेषवशंवदमानसयोर्यदेकशयनस्थतया अत्यन्तसन्निहितयोरेव तत्तादृशं बलापतितं पराङ्मुख्यपारतन्त्र्यं तदेव अन्योऽन्यवदनारविन्दावलोकनादिमहोत्सवविच्छेदकारित्वात्

१. क. ख. 'प्रतिभाति'
२. क. ख. ग. 'तदङ्गभावा-'
३. ग. 'हृदयं' नास्ति ।
४. क. ख. 'एतत्संगृहीतो'
५. क. ख. ग. 'तथा'
६. ग. घ. 'अन्योन्यस्य हृदि स्थिते'
७. ग. घ. ङ. 'वलनान्मिश्री'
८. ग. ङ. 'ग्रहम्'

लोचनम्

इत्यत्रेर्ष्याक्रोधात्मनो[1] मानस्य प्रशमः । न चायं रसादिरर्थः[2] 'पुत्रस्ते जातः' इत्यतो[3] यथा हर्षो जायते तथा ; नापि लक्षणया ; अपि तु सहृदयस्य[4] हृदयसंवादबलाद्विभावानुभाव[5]-

कौमुदी

अवाङ्मनसगोचरसन्तापजनकमभूदित्युक्तम् ॥ वीतोत्तरं ताम्यतोरिति ॥ मानस्य निरतिशयग्लानिजनकत्वसूचनमुखेन तत्प्रशमस्य तन्मुखमाह्लादातिशयहेतुत्वमुक्तम् । 'इत्थमेनमनुनयामि' 'इत्थमेनाम्' इति परस्परमनुनयहृदयस्थत्वोक्त्या प्रशमावतारमार्गशोधनं कृतम् ॥ अपीति ॥ अत्यन्तोद्रिक्तावस्थाधिरूढस्य मानस्य गौरवरक्षणप्रयोजकतया अनुनयस्य वाग्द्वारावतारनिरोधकत्वसूचनमुखेन प्रतिनिवृत्य पुनरपि स्वपदप्राप्तप्रतिष्ठत्वमुक्तम् । पुनरपि परस्परजीवितसर्वस्वाभिमानात्मकपरिपक्तिमप्रेमभावप्रेर्यमाणान्योऽन्यापाङ्गद्वयतिर्यग्वलनव्यतिकरसंपन्नमिश्रीभावलोचनान्योऽन्यसंघट्टनिष्पिष्टत्वोक्त्या मानकलेः सपरिवारस्य प्रशमावस्थायाः समग्रनिजपरिवारकृतानुग्रहायाः प्रदर्शनद्वारा तस्याश्चमत्कारातिशयकारित्वं दर्शितम् । मानस्य चित्तवृत्तिरूपत्वमुक्तम्—ईर्ष्याक्रोधात्मन इति ॥ ईर्ष्यालक्षणः क्रोधः । प्रतीयत इति शेषः । एवं तावद्रसादीनां विविक्तं स्वरूपं दर्शितम् ; अधुना रसादेस्तस्य ध्वननव्यापारगम्यतां पारिशेष्यन्यायेन साधयितुं तात्पर्यशक्तिरूपव्यापारगम्यतां तावत्प्रतिषेधति—न चायमिति ॥ अयमित्युक्तलक्षणः ; तथा विशिष्टकाव्यवाक्यात् । जायत इति शेषः । यथा 'पुत्रस्ते जातः' इत्यादि वाक्यं प्रियार्थविशेषप्रतिपादनमुखेन श्रोतुर्हर्षरूपचित्तवृत्तिमुपजनयति, तथा विशिष्टविभावादिप्रतिपादनद्वारेण रसचर्वणां तात्पर्यशक्त्या काव्यवाक्यमुपजनयतीत्यर्थः । हेतोरुत्तरत्र वक्ष्यमाणत्वादनुक्तिः । तर्हि लक्षणाव्यापारेण भविष्यतीति तदपि निषेधति—नापीति ॥ नास्त्येव तर्हि रसादिरर्थः षष्ठप्रमाणगोचरवदित्यत्राह—अपि त्विति ॥ षष्ठप्रमाणगोचरसमानयोगक्षेमत्वशङ्कां प्रतिक्षिपति—परिस्फुरतीति ॥ परीत्युपसर्गबलान्निर्विघ्नप्रतीतिनिर्वाह्यत्वादिकं रसादेर्दर्शितम् । नन्वेतदयुक्तं सर्वस्य तथा परिस्फुरणाभावादित्यत उक्तम्—सहृदयस्येति ॥ न खलु प्रमित्यनुदयमात्रादर्थसत्ताभावविनिश्चयः,

१. क. ख. 'शेषात्मनो' ग. 'कोपात्मनो'
२. ग. 'रसाद्यर्थः'
३. ग. 'इत्यत्र'
४. ग. 'सहृदयहृदय'
५. क. ख. 'विभावप्रतीते'

लोचनम्

प्रतीतौ तन्मयीभवनेनास्वाद्यमान[1] एव रस्यमानतैकप्राणः सिद्धस्वभावसुखादिविलक्षणः परिस्फुरति । तदाह—प्रकाशत[2] इति ॥ तेन तत्र शब्दस्य ध्वननमेव[3] व्यापारोऽर्थ-

कौमुदी

किं त्वधिकारिणस्तदनुदयादेव ; अधिकारी च काष्ठाप्राप्तसहृदयभावः कश्चिदेव न सर्वः, मीमांसकश्रोत्रियादेस्तत्प्रकारादर्शनात् । यदाह "अधिकारी चात्र विमलप्रतिभानशालिहृदयः" इति । सहृदयस्य परिस्फुरतीत्यन्वयः । रसाद्यर्थपरिस्फुरणे कारणमुक्तम्—**विभावानुभावप्रतीताविति** ॥ विशिष्टशब्दचतुर्विधाभिनयसामग्रीसमर्प्यमाणानां वस्तुतः सतामसतां वा विभावानुभावव्यभिचारिणामलौकिकानां गुणप्रधानभावलक्षणसंयोगविशेषवत्तया प्रतीतिरानन्दचर्वणापरपर्याया रसाद्यर्थपरिस्फुरणे कारणमित्यर्थः । तेन क्रमेण विभावादेस्तन्निष्पादकत्वमित्यत उक्तम्—**तन्मयीभवनेनेति** ॥ तन्मयीभवने हेतुः—**हृदयसंवादबलादिति** ॥ हृदयसंवादनलक्षणं हि सहृदयत्वम् ; तत्र मीमांसकश्रोत्रियादिवैलक्षण्येन काव्यानुशीलनातिशयविशदीभूतमनोमणिमुकुरस्य काष्ठाधिष्ठितसहृदयभावस्य कस्यचित्पुरुषधेयस्य मुख्याधिकारिणस्तत्तादृशं यद्धृदयम्, तत्त्वाध्यवसायसमर्थं तस्य सुदृढसंवादमुखेन वर्णनीयविभावाद्यर्थतन्मयीभावो भवति । तदनन्तरमलौकिकसंविदानन्दचर्वणागोचरीभावेन रसाद्यर्थः परिस्फुरतीत्यर्थः । तत्किम् 'अयं घटः' इत्यादिवद्रसाद्यर्थस्फुरणमित्यत उक्तम्—**आस्वाद्यमान एवेति** ॥ विभावादिसमुपजनितास्वादापरपर्यायरसनगोचरीभावेनेत्यर्थः । तत्र हेतुः—**रस्यमानतैकप्राण इति** ॥ स्थाय्येव विभावादिप्रत्ययारभ्यमाणत्वाद्रस इत्युच्यते । व्यभिचार्यपि तथाभूतो भाव इति मतमपास्यति—**सिद्धस्वभावसुखादिविलक्षण इति** ॥ सिद्धस्वभावा ये सुखादयो रत्यादयः स्थायिनः निर्वेदादयो व्यभिचारिणश्च तेभ्यो विलक्षण एव रसादिः न सिद्धस्वभावः चर्वणाव्यतिरिक्तकालावलम्बित्वविरहात् ; अतस्तत्स्वभावेभ्यः स्थाय्यादिभ्योऽन्य एवेत्यर्थः । यदेतद्यथोक्तलक्षणं परिस्फुरणमुक्तं तदेव प्रकाशत इति वृत्तौ कथितं न त्ववभासमात्रमित्याह—**तदाहेति** ॥ ननु शब्दान्वयव्यतिरेकानुविधायिनस्तत्प्रकाशस्य शब्दजन्यत्वेऽवश्याभ्युपेये अभिधादिव्यापारत्रयान्यतरविषयत्वमेवेत्याशङ्क्य कथितन्यायेन तदसंभवे पारिशेष्याद्व्यापारान्तरहेतुकत्वसिद्धिरित्याह—**तेनेति** ॥ यतो न प्रमाणान्तरगम्यत्वं यतश्च नाभिधादि-

१. क. ख. ग. घ. ङ. च. 'भावेन' ३. ग. 'ध्वनन ... व्यापारो' नास्ति।

२. क, ख. 'प्रकाश्यत इति'

ध्वन्यालोकः

**स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः। न च सर्वत्र तेषां स्वशब्दनिवेदि-**

लोचनम्

सहकृतस्येति। विभावाद्यर्थोऽपि पुत्रजन्महर्षन्यायेन तां चित्तवृत्तिं जनयतीति जननातिरिक्तोऽर्थस्यापि व्यापारो ध्वननमेवोच्यते ॥ **स्वशब्देति** ॥ शृङ्गारादिना शब्देन अभिधाव्यापारवशादेव ॥ **निवेदितत्वेनेति** ॥ **विभावादीति** ॥ तात्पर्यशक्त्येत्यर्थः । तत्र स्वशब्दस्यान्वयव्यतिरेकौ रस्यमानतासारं रसं प्रति निराकुर्वन् ध्वननस्यैव ताविति दर्शयति—**न च सर्वत्रेति** ॥ यथा भट्टेन्दुराजस्य—

कौमुदी

व्यापारत्रयजन्यत्वं ततो हेतोरित्यर्थः । "व्यङ्ग इति" वक्ष्यमाणपर्यालोचनयोक्तम्—**अर्थसहकृतस्येति** ॥ नन्वर्थस्य येन व्यापारेण रसादिप्रतीतिहेतुत्वं तथैव तत्सहकृतस्य शब्दस्याप्युचितम् । अर्थस्य च पुत्रजन्मादिवत् हर्षादौ रसादिरूपायां चित्तवृत्तौ जननमेव व्यापार इति शब्दस्यापि न रसादिव्यञ्जकत्वम्, किं तु जनकत्वमेवेत्याशङ्क्याह—**विभावाद्यर्थ इति** ॥ जन्यत्वे विभावाद्यपबोधावगमेऽपि रसचर्वणोदयप्रसक्तिरिति न तस्य तत्र जननरूपो व्यापार इत्यर्थः । अपिशब्देन शब्दसमुच्चयः ॥ **उच्यते** ॥ ध्वनिवादिभिरिति शेषः ॥ वृत्तौ "स्वशब्दनिवेदितत्वेन" इत्यादिना यद्विकल्पद्वयमुक्तं तदभिधातात्पर्यशक्तिव्यापारद्वयाभिप्रायमिति दर्शयति—**शृङ्गारादिनेति** ॥ शृङ्गारादिशब्दानां ह्यभिधाव्यापारवशादेव तत्प्रतिपादकत्वं शक्यशङ्कमिति भावः ॥ **तत्रेति** ॥ द्वयोः पक्षयोर्मध्य इत्यर्थः । स्वशब्दनिवेदितत्वस्य भावे रसादिप्रतीतेः भावोऽन्वयः ; तदभावे रसादिप्रतीतेरभावो व्यतिरेकः ; तन्निराकरणमुखेन ध्वननव्यापारस्य तत्समर्थनमुत्तरग्रन्थसन्दर्भेण प्रदर्श्यत इत्यर्थः । यत्र स्वशब्दनिवेदितत्वस्याभावः प्रतीतिश्च रसादीनां तादृशकाव्यमुदाहरति—**यथा भट्टेन्दुराजस्येति** ॥ 'विश्रम्य' इत्यत्र वीप्सा द्रष्टव्या । अनेन "आलस्यं तदभीष्टार्थात्

१. क. ख. 'स्व' नास्ति ।
२. क. ख. 'निवेधत्वं यत्रापि' नास्ति ।
३. ग. 'न पुत्रजन्याविष[हर्ष]न्यायेन'
४. क. 'अप्यर्थस्यापि'
५. क. ख. 'शब्देन' नास्ति ।
६. ग. 'विभावादिति'
७. ग. 'व्यतिरेकस्य मानकसारम्'
८. च. 'न सर्वत्रेति'

## लोचनम्

"यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूना[1]ब्जिनीनालवत् ।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे[2] यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥" इति ॥

अत्रानुभावविभावावबोधान[3]न्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्ति-

## कौमुदी

व्रीडादेर्यन्निवर्तनम्" इत्युक्तलक्षणा अलसा नाम दृष्टिरुक्ता । ततश्चातिवेलमाविर्भावमासेदुषो-रनुरागव्रीडयोरन्योन्याभिभावुकतयोन्मज्जननिमज्जनन्यायेन नयनप्रवृत्तिनिवर्तनव्यापारवत्तयो-त्सूत्रणात् रतेः पारिपूर्ण्यप्रदर्शनेनालम्बनविभावस्य कापि प्रकर्षपदवी समुपदर्शिता ; स्थेमा बद्धलक्षकता ; तदभावोक्त्या विलोकितानां वैचित्र्यमासूत्रितम् ॥ **गात्राणि दरिद्रतीति ॥** तरतम[गात्रतनु]भावेन तनुतनिमानमनुसमुदित[तम्] इति दर्शितम् । अतश्च ततः प्राचीनानां दशान्तराणां क्रमेणावतारोऽपि नान्तरीयकतयावगमितः ॥ **लूनाब्जिनीनालवदिति ॥** करतलभञ्जनपरिमृदितनवकमलनालसादृश्यवर्णनयापि म्लानच्छायत्वलालित्यविशेषान्तर-शालित्वानुस्मरणीयशोभत्वादिसूचनम् ॥ **दूर्वाकाण्डेत्यादिना** घनपुलकालिकबलितत्ववर्णा-न्तराविर्भावादिरत्यनुभावव्यभिचारिसञ्चय इयता योजितः ॥ **कृष्णे यूनीत्यादिना** विभावः । यूनीति विजृम्भमाणनवयौवने सतीत्यर्थः । वेषस्थितिर्वेषरचना, एषैव विलोकितानामालस्यनिस्थेमत्वादिलक्षणैव, न पत्रभङ्गविरचनाद्यात्मिकेत्यर्थः । अनेन विषयनिवृत्तिलक्षणो दशाविशेषो दर्शितः । व्यतिरेकाभावमुदाहरणे योजयति—**अत्रेति ॥** पूर्वमनुभावग्रहणमत्र श्लोके प्रथमं तदुपनिबन्धनाभिप्रायम् । युक्तिः योगः । हृदयसंवाद-वशंवदतया स्वयमेवोपनतत्वाभिप्रायेणेयमुक्तिः । तत एव विभावानुभावाः तद्विभावानुभावाः, तदुचिता याश्चित्तवृत्तयोऽभिलाषादयः, तद्वासनाभिरनुरञ्जिता रूषिता या स्वसंवित् संवेदनमेव, तस्या या आनन्दमयी चर्वणा तस्या गोचर इति विग्रहः । अर्थो विप्रलम्भश्रृङ्गाररसः ; तस्यात्मा स्वरूपं स्फुरत्येव; न तु न स्फुरति । न खलु प्रत्यक्षासिद्धेऽर्थे विसंवाद इति भावः । एवं रसादिप्रतीतिसद्भावः

१. क. ख. 'दून'
२. क. ख. च. 'दृष्टे'
३. क. ख. 'बोधनोत्तर'

ध्वन्यालोकः

तत्वम् । यत्राप्यस्ति तत्[1], तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः[2] । स्वशब्देन सा[3] केवलमनूद्यते, न तु तत्कृता । विषयान्तरे तथा[4] तस्या अदर्शनात्[5] ।

लोचनम्

वासनानुरञ्जितस्वसंविदानन्दचर्वण[6]गोचरोऽर्थात्मा[7] स्फुरत्येवाभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रम[8]स्मृतिवितर्कादिशब्दाभावेऽपि । एवं व्यतिरेकाभावं प्रदर्श्यान्वयाभावं दर्शयति—**यत्रापीति** ॥ तदिति स्वशब्दावेदितत्वम्[9] ॥ **प्रतिपादनमुखेनेति** ॥ शब्दप्रयुक्तया विभावादिप्रतिपत्त्ये[10]त्यर्थः ॥ **सा केवलमिति** । तथा हि—

"याते द्वारवतीं तदा[11] मधुरिपौ तद्दत्तझम्पानतां[12]
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्क[13]मुत्कूजितम् ॥" इति ॥

कौमुदी

समर्थितः । स्वशब्दावेदितत्वाभावं तु दर्शयति—**अभिलाषेति** ॥ **व्यतिरेकाभावमिति** ॥ स्वशब्दावेदितत्वाभावे रसादिप्रतीत्यभावो व्यतिरेकः, तस्याभावं 'यद्विश्रम्य' इत्यादौ क्वचिद्विषये प्रदर्श्येत्यर्थः । अन्वयः स्वशब्दावेदितश्चेति [तत्त्वे] रसादिप्रतीतिसद्भावः ॥ ननु विशिष्टविभावादिप्रतीतिमुखेनैव तेषां प्रतीतिरित्युच्यताम् , वाच्यसामर्थ्याक्षिप्त इति ह्युक्तं प्राक् ; विभावादिप्रतिपादनमुखेनेति प्रतिपादनप्राधान्योक्तौ को हेतुरित्याशङ्क्य व्याचष्टे—**शब्दप्रयुक्तयेति** ॥ न वस्तुसत्ताप्रयुक्तयैवेत्यर्थः । शब्दसमर्पितं रूपमेवैषामुपयोगि, न तु वास्तवं बहिःसदपि ; असतोऽपि तत्तादृशशब्दविशेषसमर्पितस्य

१. क. ख. ग. 'तत्' नास्ति ।
२. ग. 'अप्रतीतिः'
३. क. ख. 'सा' नास्ति ।
४. ग. 'तथा' नास्ति ।
५. ग. 'दर्शनात्'
६. क. ख. 'चर्वण' नास्ति ।
घ. ङ. 'चर्वणा'
७. क. ख. ग. 'अर्थो रसात्मा'
८. ग. 'भावभ्रम'
९. क. ख. 'निवेद्यत्वं'
ग. 'निवेदितत्वं'
१०. च. 'प्रतिपद्ये-'
११. घ. 'तथा'
१२. क. ख. ग. घ. 'कम्पा-'
ङ. 'संपन्नताम्'
च. 'संपानताम्'
१३. घ. 'व्युत्कण्ठम्'

## लोचनम्

अत्र विभावानुभावैर[1]म्लानतया प्रतियतः[2] उत्कण्ठा[3] चर्वणागोचरं[4] प्रतिपद्यत[5] एव ।

## कौमुदी

रसप्रतीतिहेतुत्वदर्शनात् ; तेन बहिःसतोऽपि शब्दविशेषोपस्थापितत्वावस्थमेव रसाभिव्यञ्जकत्वं नान्यत् । अत एव हि विभावादिव्यपदेशस्यालौकिकत्वं व्यवस्थितमिति भावः । स्वशब्दस्यानुवादकत्वमेवेत्यत्रोदाहरणमाह—**याते द्वारवतीमित्यादि** ॥ मुधुरिपौ यात इत्येतावता शौरिविरहो विभाव उपक्षिप्तः ॥ **द्वारवतीमिति** ॥ महार्णवमध्याध्यासितया अत्यन्तासुलभावलोकनत्वादिव्यञ्जनेन विरहरूपविभावस्य कश्चिदुत्कर्षातिशय उद्घाटितः । मधुरिपावित्यनेनापि परंपरया स एवोपोद्बलितः । तदेत्यनेन तत्तादृशदशाविशेषोपनिपातस्य सुदूरदुःसहत्वमुत्सूत्रितम् ॥ **तद्दत्तझम्पानतामिति** ॥ तेन दत्ता प्रीतिपुरःसरं समर्पिता समुपचितपचेलिमसुचरितनिचयसुजनैकसुलभा या झम्पा विहरणसमयसंभावितक्रमणविशेषः, झपिधातोराक्रमणार्थत्वात्, "कपिझम्पितक्रमणकम्पित" इत्यादिप्रयोगाच्च, तया क्रियासमभिहारसंवृत्तया आनता आनम्रिता । दानेन हि प्रतिग्रहीतुरानतिः प्रसिद्धेत्यनेन परस्परप्रेमसंभारविजृम्भितविस्रम्भविहरणविशेषसर्वस्वसाक्षिभूतत्वं समधिकतरमधुरिपुप्रेमभाजनतया तद्वियोगवेदनासंविभागभाजनत्वं तदालिङ्गनस्य मधुरिपुसमालिङ्गनमहोत्सवप्रीतिनिधितया तद्विप्रयोगव्यथातिभारसह्यतासंपादनसामर्थ्यं च किञ्चिदावेदितम् ॥ **कालिन्दीतटरूढेति** ॥ हृदयवल्लभसततविहितविहरणविशेषस्थानभूततया स्वभावतश्च समग्रसौभाग्यभाजनभूततत्तादृशस्थानविशेषसमासादितप्ररोहत्वेन सौभाग्यातिशयोऽस्या दर्शितः । यथा गोपीनां राधा मधुरिपोरतिरेकिणः प्रणयस्य पात्रम् एवं लतानामियमपीति तस्या हृदयसंवादबलादन्यावधीरणेन तदालिङ्गनयोग्यत्वं वञ्जुललतामित्यनेन दर्शितम् । इयता मधुरिपुविरहो विशिष्टप्रदेशात्मकश्च विभावो दर्शितः । तद्गीतमित्यनुभावः । राधा नाम गोपीनामन्यतमा कापि भगवतो निरतिशयप्रेमसंभारभाजनतया प्रसिद्धा गोपिका । तया तत्तादृशमतिकठोरविरहव्यथातिरेकपिशुनं गेयं गीतं गुरुणा प्रभूतेन बाष्पेण कण्ठकाण्डभरितेन गद्गदं यथा तथा, गलन् प्रसरन् तारः विशृङ्खलविमुक्तकण्ठत्वादुच्चस्वरो

१. क. ख. ग. 'भावौ म्लानतया प्रतीयेते'

२. क. ख. ग. घ. ङ. च. 'प्रतीयते'

३. क. ख. ग. 'प्रतिपन्नं कुर्वता' इत्यधिकः ।

४. ङ. 'च' इत्यधिकः ।

५. ग. च. 'प्रतिपाद्यते' ख. 'प्रत्यपद्यत'

## लोचनम्

सोत्कण्ठाशब्दः[1] केवलं सिद्धं साधयति । उत्कमित्यनेन तु उक्तानुभावानुकर्षणं[2] कर्तुं[3] सोत्कण्ठाशब्दः प्रयुक्त[4] इत्यनुवादोऽपि नानर्थकः । पुनरनुभावप्रतिपादने[5] हि पुनरुक्तम्[6], अतन्मयीभावो वा ॥ **न तु तत्कृतेति** ॥ अत्र हेतुमाह—**विषयान्तर इति** ॥ "यद्विश्रम्य"

## कौमुदी

यस्मिन्निति क्रियाविशेषणमेतत् । येन गीतेन जलचरैः सारसादिभिरपि स्वच्छन्दमन्तर्जल एव स्वप्रियतमाभिः सार्धमिच्छाविहारमाचरद्भिरपि उत्कम् उन्मनस्कतया राधाक्रन्दिताकर्णनसमुपजनितया उच्चैरेव कूजितमिति । अस्मिन् स्वशब्दसमर्पणानपेक्षयैव रसादिप्रतीतिसद्भावं दर्शयति—**अत्रेति** ॥ विभावः शौरिविरहादिः ; अनुभावा गीतादयः ; विभावानुभावमित्येकवद्भावो द्रव्यदेवतमितिवत् ॥ **अम्लानतयेति** ॥ सम्यग्योजितत्वेन ताटस्थ्यमन्तरेण तन्मयीभवनक्रमेणेत्यर्थः ; प्रतियत इति हेतौ शता ; प्रतिपद्यमानस्य प्रतिपत्तुः सहृदयस्य चर्वणागोचरं प्रतिपद्यत एव ; स्वसंवेदनसाक्षिक एवायमर्थ इत्यर्थः । स्वशब्दसन्निधौ जायमानायास्तत्प्रतीतेस्तज्जन्यत्वाभावः कुत इत्याशङ्क्य सिद्धायां तत्प्रतीतौ स्वशब्दस्यानुवादकत्वं बलापतितं निवारयितुमशक्यमित्याह—**सोत्कण्ठाशब्द इति** ॥ सिद्धमिति सामान्यद्वारा निर्देशः । चर्वणोपारूढामुत्कण्ठामेवाभिधाव्यापारेण प्रतिपादयतीत्यर्थः ॥ नन्वनुवादेऽवश्यं प्रयोजनेन भाव्यम् ; तत्किमर्थोऽयमनुवाद इत्यत्राह—**उत्कमित्यनेन त्विति** ॥ जलचरकूजितेऽपि कथितानुभावसंयोजन एव हि तदुत्कण्ठायास्तन्मयीभवनमुखेन चर्वणागोचरता । अतः पुनस्तत्प्रतिपादनमन्तरेण प्रागुक्तानुभावानुकर्षणमत्रोत्कशब्देन विधित्सितम् । न च सोत्कण्ठाशब्दप्रयोगं विनोत्कशब्देन तदाकर्षणम्, उत्कशब्दस्य तावत्यपर्याप्तत्वात् सति पुनरुत्कण्ठाशब्दे अनुभावानां तत्संगृहीतानामुत्कण्ठाशब्दसमानार्थोत्कशब्देनाकर्षणसंभवाच्चर्वणोपयोगित्वम् तथाविधजलचरकूजितस्य सिध्यतीत्यनुवादस्य नानर्थक्यमित्यर्थः । पुनरप्यनुभावप्रतिपादनमस्तु किमर्थमनुकर्षणव्यसनावलम्बनमित्यत्राह—**पुनरिति** ॥ न केवलं पुनरुक्तिरेव तथाविधस्य चानुभावजातस्य न तन्मयीभवनोपयोगितापि स्यात्, अनौचित्यप्रतिपत्तिग्रस्तसौभाग्यत्वात् इत्याह—**अतन्मयीभावो वेति** ॥ अथवा अनुभावानाकर्षणे किं तेषां पुनःप्रति-

१. क. ख. 'सोत्कण्ठ'
२. घ. 'भावेनानु'
३. क. ख. 'कर्तुं' नास्ति ।
४. ङ. च. 'प्रयुक्त' नास्ति ।
५. ङ. 'अनुवादन'
६. घ. 'पुनरुक्तत्वमतन्मयी'
ङ. च. 'पुनरुक्ततन्मयी'

ध्वन्यालोकः

न हि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि

लोचनम्

इत्यादौ ; न हि यदभावेऽपि[1] यद्भवति तत्कृतं तदिति भावः । अदर्शनमेव प्रथयति—**न हीति** ॥ केवलशब्दार्थं स्फुटयति—**विभावादीति** ॥ **काव्य इति** ॥ तव मते काव्यरूपतया प्रसज्यमान[2] इत्यर्थः ॥ **मनागपीति** ॥

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
[3]बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥" इत्यत्र[4] ।

कौमुदी

पादनम् न वा ? आद्ये पुनरुक्तिः, द्वितीये तन्मयीभावानुदयात् रसादिप्रतीत्यसिद्धिरित्याह—**पुनरनुभावेति** ॥ **हेतुमाहेति** ॥ विनिगमनायां हि हेतुर्वक्तव्यः । अन्यथा स्वशब्दसन्निधौ समुपजायमाना तत्प्रतीतिस्तत्कृतैवेति वक्तुं शक्यत्वात् ; प्रतिज्ञामात्राच्च साध्यासिद्धेरित्याशयः । कथमदर्शनमात्रात्तत्कृतत्वाभावावधारणमित्याशङ्क्य हेतुत्वावगमकव्यतिरेकाभावोऽत्र विवक्षित इत्याह—**न हीति** ॥ "तस्याः" इति तत्कृतायाः प्रतीतेः । तत्र स्वशब्दनिवेदितत्वाभावस्य स्फुटत्वादित्यर्थः । न हीत्यनेनोक्तमेव व्यतिरेकाभावमन्वयाभावकथनेन पक्षान्तरे व्यतिरेकसद्भावकथनेन च स्फुटयतीत्याह—**अदर्शनमेवेति** ॥ विभावादिप्रतिपादकत्वाभावे कथं काव्यत्वं येन सिद्धवन्निर्देश इत्याशङ्क्य परानभीष्टस्यैव काव्यरूपत्वस्य प्रसञ्जनाभिप्रायेयमुक्तिरित्याह—**तव मत इति** ॥ स्वशब्दकृता रसादिप्रतीतिः न विभावादिकृतेत्यस्मिन् मते काव्यत्वेनानभिमतमपि काव्यमापद्येत । साध्यतयैवेयमुक्तिर्न सिद्धतयेत्यर्थः । तादृशमेवोदाहरणमाह—**शृङ्गारेति** ॥ यतश्चेत्यादेरानर्थक्यशङ्कामुपसंहाररूपत्वोक्त्या शमयन्नाह

उपलोचनम्

"पुनरुक्तमतन्मयीभावो वा" इत्येव लोचनपाठः कौमुदीकारसंमतः । "याते द्वारवतीम्" इत्यादिपद्ये स्वशब्दमन्तरेणैव रसस्य विप्रलम्भात्मकस्य भावस्य च प्रतीतिः । जलचरोत्कूजिते "गुरुबाष्पगद्गदगलत्तारस्वरम्" इति कथितस्य अनुभावस्य अनुकर्षणद्वारा योजने, तथाविधजलचरकूजितस्य तन्मयीभवनमुखेन जलचरोत्कण्ठायाश्चर्वणागोचरतासंपादनद्वारा प्रकृतरसभावचर्वणायां-

१. ङ. 'अपि' नास्ति ।
२. क. ख. च. 'प्रयुज्य'
३. घ. ङ. च. 'बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥'
४. क. ख. 'अत्र' नास्ति ।

ध्वन्यालोकः

रसवत्त्वप्रतीतिरस्ति । यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो[1] रसादीनां प्रतीतिः, केवलाच्च स्वाभिधानाद[2]प्रतीतिः, तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्, न त्वभिधेयत्वं कथंचित् इति तृतीयोऽपि

लोचनम्

एवं स्वशब्देन सह रसादेर्व्यतिरेका[3]न्वयाभावमु[4]पपत्त्या प्रदर्श्य तथैवोपसंहरति—**यतश्चेत्यादिना कथंचिदित्यन्तेन** ॥ अभिधेयमेव सामर्थ्यं सहकारिशक्तिरूपं विभावादिकं

कौमुदी

—**एवमिति** ॥ वृत्तौ व्यतिरेकस्य पूर्वमुक्तत्वाद्व्यतिरेकान्वयाभावमित्युक्तिः ॥ **तथैवेति** ॥ अन्वयव्यतिरेकप्रदर्शनसाहित्येनैवेत्यर्थः । इह वृत्तौ रसादीनामभिधेयत्वप्रतिषेधेनाभिधेयसामर्थ्याक्षिप्तत्वमुपसंहृतम् । तत्र ध्वनिवाद्यभिप्रेतं यच्छब्दार्थोभयगतध्वननव्यापारमात्रगम्यत्वं तदनुद्भिन्नप्रायमित्यतः तदभिप्रायवर्णनानुकूलं तद्योजनाप्रकारं प्रकटयति—**अभिधेयमित्यादिना** ॥ अनेन प्रतिनियतसहकारिभेदप्रकटनमुखेन शब्दार्थयोर्द्वयोरपि रसाद्यर्थविषयमभिधादिजननादिव्यतिरिक्तं ध्वननलक्षणं व्यापारं प्रतिपादयितुं शब्दस्य ध्वनेन विभावादिरूपाभिधेयसहकारिसनाथत्वम्, अर्थस्य तु विशिष्टशब्दसहकारिशालित्वं चाभिधीयते । तत्र तावच्छब्दस्य ध्वनने कर्तव्येऽभिधेयमेव सामर्थ्यम्, अभिधेयस्य च ध्वनने कर्तव्ये विशिष्टसमुचितवाचकसाकल्यं सामर्थ्यमिति संगतिः । अभिधेयं च तत्सामर्थ्यं चेति शब्दपक्षे कर्मधारय इत्याह—**अभिधेयमेव सामर्थ्यमिति** ॥

उपलोचनम्

मुपयोगः सिध्यतीति लोचनकाराशयस्य निष्कर्षः । "पुनरुक्तस्तन्मयीभावः" इति अञ्जनसंमतः पाठः । उत्कमित्यनेन तन्मयीभावयुक्त्या जलचरगता अनुभावाः शक्त्योच्यन्ते राधालम्बनाननुभावानुक्त्वा जलचरगतानां तेषामाकर्षणे पुनरुक्तः परिपुष्टस्तन्मयीभावो भवति यतः—इत्यञ्जनस्याशयः ॥

१. क. ख. 'विशिष्टेभ्यः' अधिकः । च. 'व्यतिरेकास्थाया'
२. क. ख. 'स्वाभिधानमात्रात्' ४. ख. 'उपदर्श्य तमेव'
३. ङ. 'व्यतिरेकाभावं'

## लोचनम्

रसध्वनने शब्दस्य कर्तव्ये, [1]अभिधेयस्य च पुत्रजन्महर्षभिन्नयोगक्षेमतया [2]जननव्यतिरिक्ते दिवा-भोजनाभावविशिष्टपीनत्वानुमितरात्रिभोजन[3]विलक्षणतया चानुमानव्यतिरिक्ते ध्वनने कर्तव्ये सामर्थ्यं शक्तिः [4]विशिष्टसमुचित[5]वाचकसाकल्यम्—इति द्वयोरपि शब्दार्थयोर्ध्वननव्यापारः। एवं द्वौ पक्षावुपक्रम्याद्यो दूषितः। [6]द्वितीयस्तु कथंचिद्दूषितः, कथंचिदङ्गीकृतः—

## कौमुदी

कथमभिधेयस्य सामर्थ्यरूपत्वमित्याशङ्क्य ईश्वरस्य जगत्सृष्ट्यादौ यथा शक्तिः सहकारिणी तथा विभावाद्यर्थोऽपि शब्दस्य ध्वननं प्रतीति सहकारित्वकृतोऽशक्तिरूपेऽपि सति अभिधेये शक्तिपर्यायसामर्थ्यपदप्रयोग इत्याह—**सहकारिशक्तिरूपमिति** ॥ तथा चाह स्मोदयनः "इत्येषा सहकारिशक्तिरसमा" इत्यादि। किं तदभिधेयमित्याह—**विभावादिकमिति** ॥ अर्थपक्षेऽभिधेयसामर्थ्यमिति षष्ठीसास इत्याह—**अभिधेयस्य चेति** ॥ सामर्थ्यशब्दार्थमाह—**शक्तिरिति** ॥ तस्य कुत्र शक्तिरित्यत्राह—**ध्वनने कर्तव्य इति** ॥ किं तच्छक्तिरूपं सामर्थ्यम् अर्थस्य सहकारिधुरंधरमित्यत उक्तम्—**विशिष्टसमुचितवाचकसाकल्यमिति** ॥ विशिष्टत्वं समग्रगुणालंकारसंयोजनसौन्दर्यशालित्वम्; समुचितत्वं रसाभिव्यञ्जनयोग्यत्वम्। भवतु नाम शब्दस्य ध्वननं नाम व्यापारः कश्चित्, अर्थस्य तु जनकत्वानुमापकत्वयोरन्यतर एव व्यापारो दृष्टचर इति रसादिगोचरोऽपि तयोरन्यतर एव भवितुमर्हति, न ध्वननलक्षण इत्याशङ्क्योभयमपि निषेधति—**पुत्रजन्मेति** ॥ विभावाद्यभावेऽपि रसादिप्रतीतिप्रसक्तेर्न जन्यजनकभावः; अविनाभावरूपव्याप्त्यभावाच्च न लिङ्गलिङ्गिभाव इत्युभयवैलक्षण्यसिद्धिरित्यर्थः। इदानीमभिधेयसामर्थ्याक्षिप्तत्वमित्यस्य तात्पर्यमाह—**इति द्वयोरपीति** ॥ शब्दार्थयोर्द्वयोरपि ध्वननव्यापार इत्यनेन प्रकारेण समर्थित इत्यर्थः। वृत्तौ यत् विकल्पद्वयं कृतम् "वाच्यत्वं तस्य" इत्यादिना तत्र कंचिद्विशेषमुन्मीलयति—**एवं द्वाविति** ॥ आद्यः स्वशब्दनिवेदितत्वादित्येवंरूपः; द्वितीयो विभावादिप्रतिपादनमुखेन वेति। तुशब्दो विशेषे। कथं दूषितः कथं वाङ्गीकृत

१. ग. 'विधेयस्य पुत्र'
२. घ. 'जनन' नास्ति।
३. घ. 'विलक्षणे' इत्यधिकः।
४. क. ख. 'विशिष्टम्'
५. क. ख. ग. 'वाचक' नास्ति।
६. ग. 'द्विती... ...षितः' नास्ति।

ध्वन्यालोकः

**प्रभेदो वाच्याद्भिन्न एवेति स्थितम् । वाच्येन त्वस्य सहेव[1] प्रतीतिरित्यग्रे [2]दर्शयिष्यते ॥**

लोचनम्

जनना[3]नुमानव्यापाराभिप्रायेण दूषितः, ध्वननाभिप्रायेणाङ्गीकृतः । यस्त्वत्रापि तात्पर्यशक्तिमेव ध्वननं मन्यते, स न वस्तुतत्त्ववेदी । विभावानुभावप्रतिपादके हि वाक्ये तात्पर्य[4]शक्तिर्भेदे संसर्गे वा पर्यवस्येत् ; न तु रस्यमानता[5]सारे रसे—इत्यलं बहुना । इतिशब्दो हेत्व[6]र्थः ; इत्य[7]तो हेतोस्तृतीयोऽपि प्रकारो वाच्याद्भिन्न एवेति संबन्धः ॥ [8]सहेवेति ॥ इव[9]शब्देन विद्यमानोऽपि क्रमो न संलक्ष्यत इति[10] दर्शयति ॥ **अग्र इति** ॥ द्वितीयोद्द्योते ॥

कौमुदी

इत्यपेक्षायामुक्तम्—**जननानुमानेति** ॥ यस्तु मन्यते—रसादीनामभिधेयसामर्थ्याक्षिप्तत्वमेवेति निगमयतो वृत्तिकारस्य तात्पर्यशक्तिरेव ध्वननव्यापारोऽभिमतः ; न तद्व्यतिरिक्तश्चतुर्थकक्ष्यानिवेशी कश्चित्, अभिधेयान्यथानुपपत्तिसहायार्थबोधनशक्तेरेव तात्पर्यशक्तित्वात्, तस्या एव चेहाभिधेयसामर्थ्याक्षेपशब्देन स्फुटमभिहितत्वात् ; अतो न तद्व्यतिरिक्तध्वननव्यापारविषयतया क्लेशेनेत्थं व्याख्यानमनुचितम् [उचितम्]—इति तं प्रत्याह—**यस्त्वत्रापीति** ॥ न केवलं "भम धंमिअ" इत्यत्र प्रतिषेधस्य व्यङ्ग्यत्वाभिमान एवेत्यपिशब्दार्थः । 'न वस्तुतत्त्ववेदी' इति शब्दयोजनाञ्जस्यपरामर्शकौशलमात्रमनुज्ञातं तत् किं न तावदेव वस्तुतत्त्वमिति, नैवेत्याह—**विभावानुभावेति** ॥ विशेषविषया हि तात्पर्यशक्तिरित्युक्तं तावदेतदधस्तात् । विशेषश्चैकस्य वाक्यार्थस्य वाक्यार्थान्तरात् भेदापरपर्याया व्यावृत्तिरेव व्यावर्तकभूतविशेषणसंबन्धो वा 'गामानय' इत्यत्र गोकर्मकानयनविशेषस्य अश्वादिकर्मकानयनादितो व्यावृत्तिप्रतीतेः तस्याः क्रियाकारकसंबन्धनिमित्तत्वाच्च । अत

१. क. ख. ग. 'सहैव'
२. ग. 'प्रदर्श'
३. क. 'अनुव्यपार'
ग. 'अनुमाव्यापार
४. ग. 'शक्तिभेदः'
क. ख. 'भेदसंसर्गे'
५. ग. 'सारो रसः'
घ. 'सारे'
६. क. ख. ग. 'अर्थे'
७. क. ख. ग. 'अतो'
८. क. ख. ग. 'सहैवेति'
९. क. ख. 'इह शब्देन'
१०. क. ख. 'इति दर्शयति' नास्ति ।
ग. ङ. च. 'इति तद्दर्शयति'

ध्वन्यालोकः

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ५ ॥**

लोचनम्

एवं "प्रतीयमानं पुनरन्यदेव" इतीयता ध्वनिस्वरूपं व्याख्यातम् । अधुना काव्यात्मत्वमितिहासव्याजेन[1] दर्शयति—**काव्यस्यात्मेति** ॥ **स एवेति** ॥ प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम् , इतिहासबलात्

कौमुदी

एव भेदो वाक्यार्थः संसर्गो वेति वैकल्पिकी वाक्यार्थविदां स्थितिः । रसादिरर्थस्तु स न भेदरूपः संसर्गरूपो वा सिद्धस्वभावत्वाभावात् । रस्यमानतैकसारो ह्यसावलौकिकोऽर्थ इत्यसकृदवादिष्म । तेन तात्पर्यशक्तिगोचरातिलङ्घी चतुर्थकक्ष्यानिविष्ट एवायमर्थ इति स्थितमित्यर्थः ॥

पूर्वोत्तरकारिकयोः सङ्गतिं कर्तुं तात्पर्यमाह—**एवमिति** ॥ "काव्यस्यात्मा ध्वनिः" इति ध्वनेः स्वरूपं तस्य काव्यात्मत्वं चोभयमपि विहितम् । तत्र कारिकायां वाच्यसंवलनविमोहव्युच्छेदनेन वाच्यव्यतिरिक्तं व्यङ्ग्यस्वरूपं निर्धारितम ; तच्छेषतयैव हि "अर्थः सहृदयश्लाघ्यः" इत्यादिकारिकाद्वयं व्यङ्ग्यप्रतिपादनपूर्वभूमिभूतवाच्यार्थप्रतिपादनपरं प्रवृत्तम्—इति व्यङ्ग्यार्थास्तित्वप्रसाधनमेव इयता प्राधान्येन कृतम् । अधुना "काव्यस्यात्मा" इत्युत्तरकारिकया तस्य काव्यात्मत्वं प्रतिपाद्यत इति कारिकयोरनयोर्नियतपौर्वापर्यलक्षणा संगतिः स्थितैवेत्यर्थः । कथमस्याः काव्यात्मत्वमेव [स्यैव] प्रधानतया प्रतिपादकत्वम् इतिहासोपन्यासमात्रप्रवृत्ताया इत्यत्राह—**इतिहासव्याजेनेति** ॥ सहचरी[चारि]हननोत्थः शोको मुनेः श्लोकत्वमागत इति करुणरसस्य काव्यात्मत्वमेव प्रधानतया प्रतिपिपादयिषितं न त्वितिहासोपक्षेपमात्रमित्यर्थः ॥ नन्वत्र रसध्वनेरेव काव्यात्मत्वाभिधानात् प्रकृतत्रिविधप्रतीयमानार्थपरामर्शकतच्छब्दविरोध इत्याशङ्क्य तस्य विषयसंकोचमाह—**प्रतीयमानमात्र इति** ॥ उपसंहारस्थेन निरवकाशेन सावकाशमुपक्रमस्थं बाध्यत इति भावः । न केवलं कारिकार्थानुरोधमात्रादेव

१. क. ख. ग. 'एव' अधिकः । २. क. ख. 'वाच्यस्य' घ. च. 'च'

लोचनम्

प्रक्रान्तवृत्तिग्रन्थार्थ[1]बलाच्च । तेन रस एव वस्तुत आत्मा वस्त्वलंकारध्वनी तु सर्वथा रसे [2]पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम् ॥ शोक इति ॥ [3]क्रौञ्चस्य द्वन्द्ववियोगेन सह[4]चरी[चारि]हननोद्भूतेन साहचर्यध्वंसे[5]नोत्थितो यः शोकः स्थायीभावो निरपेक्षभावत्वाद्विप्रलम्भशृङ्गारोचित[6]रतिस्थायिभावा[7]दन्य

कौमुदी

विषयसंकोचावगमो वृत्तिग्रन्थबलादपीत्यह—प्रक्रान्तेति ॥ प्रक्रान्तः समनन्तरभावी यो वृत्तिग्रन्थः 'प्राधान्यादत्र रसभावमुखेनोपलक्षणम्' इत्येवंरूपः ; तस्य रसस्यैव काव्यात्मत्वं मुख्यतयेत्येवंरूपो योऽर्थस्तदनुरोधादपीत्यर्थः । तर्हि केनाभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोपक्षेप इत्यत्राह—तेनेति ॥ यतोऽत्र विशेषनिर्देशस्ततो हेतोरित्यर्थः । यदा वाच्यापेक्षोत्कर्षप्रयोजकरसपर्यवसाननैयत्यलाभादेव वस्त्वलंकारध्वन्योरपि काव्यानुप्राणनरूपसाम्राज्याभिषेकः तदा किमु वक्तव्यं रसध्वनेर्विश्रान्तिधामभूततया प्रधानस्य काव्यजीवितत्वसंभावनायाम्—इति कैमुत्यनीत्या रसस्य काव्यात्मत्वं द्रढयितुमियं सामान्योक्तिरित्यर्थः । अत्र कारिकायाम् 'स एवार्थः काव्यस्यात्मा' इति रसध्वनेरितरव्यावृत्त्या काव्यस्यात्मत्वं प्रतिज्ञाय "तथा च" इति कारिकाशेषेण पुरावृत्तोपन्यासमुखेन तदुपपादनं कृतम् । तत्र यथाश्रुतग्रन्थार्थग्रहणे प्रकृतप्रतिज्ञोपपादकत्वं तावन्न सम्यगवभाति , प्रत्युत कथञ्चन तद्विरोध्यर्थपरताप्रतीत्या तद्बाधकत्वमेवेति मन्वानो व्याकरोति—क्रौञ्चस्येत्यादिना ॥ अत्र क्रौञ्चस्य द्वन्द्ववियोगेन यः शोक उत्थितः स्थायिभावः स एव आदिकवेः श्लोकत्वमागत इति संगतिः । द्वन्द्ववियोगेनेत्यस्य व्याख्या—साहचर्यध्वंसेनेति ॥ तत्र हेतुः व्याधकर्तृकं सहचरी[चारि]हननमित्याह—सहचरी[चारि]हननोद्भूतेनेति ॥ नन्वयं विप्रलम्भोचितरतिस्थायिभाव एव किं न भवति द्वन्द्ववियोगोत्थत्वात् शापादिहेतुकवियोगोत्थवदित्याशङ्क्य विशेषप्रदर्शनेन तदन्यत्वमाह—निरपेक्षभावत्वादिति ॥ परस्परांशोपजीवनप्राणत्वेन सापेक्षो हि रतिस्थायिभावः ; न खलु विप्रलम्भे संभोगे वा विभावस्थायिनोः कश्चिद्भेदोऽस्ति ; तद्विपरीतो निरपेक्ष एवाजप्रलापादिकाव्येषु शोक इति निरपेक्षभावत्वादस्य

१. ग. 'अर्थ' नास्ति ।
२. क. ख. 'प्रतिपर्यवस्येते'
३. क. ख. 'क्रौञ्चस्य द्वन्द्वावियोगेन' ग. 'क्रौञ्चद्वन्द्वावियोगेन'
४. घ. 'सहचारि'
५. क. ख. 'ध्वंसनेन' घ. 'ध्वंसन'
६. ग. 'रति' नास्ति ।
७. क. ख. ग. 'भावत्वात्'

## लोचनम्

एव । स एव तथाभूतविभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तवृत्तिद्रुति-

## कौमुदी

रस्यात्मकत्वं नाशङ्कनीयमित्यर्थः । अमुमेव विरोधं सूचयितुम् अन्य एवेत्येवकारः । क्रौञ्च [ञ्ची] गतस्य शोकस्य कथं श्लोकत्वप्राप्तिः, तत्प्राप्तौ वा रसस्य काव्यात्मत्वे किमायातमित्यत उक्तम्—**स एवेति** ॥ करुणरसरूपतां प्रतिपन्नः सन् श्लोकरूपतां प्राप्त इत्यन्वयः । करुणरसरूपताप्रतिपत्तौ हेतुमाह—**आस्वाद्यमानतां प्रतिपन्न इति** ॥ रत्यादिचित्तवृत्तिरास्वाद्यमाना हि शृङ्गारादिरसव्यपदेशगोचर इति भावः । कथमास्वाद्यमानत्वप्रतिपत्तिरित्यत उक्तम्—**हृदयसंवादतन्मयीभवनक्रमादिति** ॥ प्रथमं प्रागुक्तलक्षणसहृदयत्वविशिष्टस्य प्रतिपत्तुः हृदयसंवादः, ततस्तन्मयीभावलाभः, तदन्तरमखण्डो रसास्वाद इत्यर्थः । तत्रापि कारणमुक्तम्—**तथाभूतेति** ॥ तथाभूतः सहचरी[चारि]हननरूपो यो विभावस्तदुत्थास्तादृशविभावोत्थाश्च येऽनुभावा आक्रन्दादयः आदिशब्दादवनितलपरिलुठनादयः । ननु स्थायिभावः शोक एव विभावादिप्रत्ययारभ्यमणो रसः न तद्विलक्षण इति तस्यैव काव्यात्मत्वं स्यात् न रसस्येति शङ्कुकादिमतानुबन्धिनीं शङ्कां संक्षालयितुमुक्तम्—**लौकिकेति** ॥ अलौकिकस्य रस्यमानतैकसारस्य । अत एव सिद्धस्वभावलौकिकरत्यादिस्थायिविलक्षणस्य न शोकमात्ररूपत्वमाशङ्क्यमित्यर्थः । नन्वलौकिकत्वे रसस्य कस्यचित्तत्प्रमाणस्यासंभवात् नृशृङ्गादिसमानयोगक्षेमत्वापत्तिरित्याशङ्क्य स्वसंवेदनसिद्धत्वादनपह्नवनीयतां वक्तुमुक्तम्—**स्वचित्तवृत्तिद्रुतिसमास्वाद्यसारामिति** ॥ स्वस्यास्वादयितुरेव यच्चित्तं तस्य कथितक्रमेण तन्मयीभावसमुपनतयाद्रुत्याद्रवी भावभ जनलक्षणया निरर्गलविनिर्गलदविरलपुलकपालीकबलितसकलकलेवरत्वादिसमुपलक्ष्यमाणया केवलं समास्वाद्यः सारः स्थिरांशो यस्या इति काष्ठानाप्तसहृदयभावपुरुषधौरेयनिजसंवेदनसंसिद्धस्य नालौकिकत्वयुक्त्या प्रत्याख्यानं युक्तमिति भावः । ननु रसस्य काव्यात्मत्वं तद्विषयत्वापत्त्यैव वक्तव्यम्, इतरथा नियमाभावादतिप्रसङ्गात् । न च समयसव्यपेक्षप्रवृत्तेः शब्दस्य तद्रहितरसविषयत्वं संभावयितुं शक्यमित्या-

१. ङ. 'भावे'
२. घ. 'करुणा'
३ ग. 'द्रुतमास्वाद्य'
घ. ङ. 'द्रुतिसमा'

## लोचनम्

समास्वाद्यसारां प्रतिपन्नो रसपरिपूर्णकुम्भोच्चलनवच्चित्तवृत्तिनिष्यन्दस्वभाववाग्विलापादिवच्च समयानपेक्षत्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिति नयेन अकृतकतयैवावेशवशात् समुचितच्छन्दो-वृत्तादिनियन्त्रितश्लोकरूपतां प्राप्तः

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥" इति ॥

न तु मुनेः शोक इति मन्तव्यम् । एवं हि सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत् । न च दुःखसंतप्तस्यैषा दशेति । एवं हि चर्वणोचितशोकस्थायिभावात्मककरुणरससमुच्चलनस्वभावत्वात् स एव काव्यस्यात्मा सारभूतोऽपरशब्दवैलक्षण्यकारकः । एतदेवोक्तं हृदयदर्पणे—"यावत्पूर्णो

## कौमुदी

शङ्क्य समयापेक्षवाचकत्वोपाध्यवधीरणया तदनपेक्षव्यञ्जकत्वोपाधौ तद्विषयत्वसंभवान्नोक्त-दोष इत्याह—**समयानपेक्षत्वेऽपीति** ॥ **अकृतकतयैवेति** ॥ अमुमर्थमनेन प्रतिपादयामीति बुद्धिपूर्वकत्वमन्तरेणैवेत्यर्थः । कथं तर्हि तत्प्रवृत्तिरित्यत उक्तम्—**आवेशवशादिति** ॥ अत्र दृष्टान्तमर्थगतं शब्दगतं चाह—**रसपरिपूर्णेति** ॥ ग्रन्थच्छायानुरोधिन्येव व्याख्याने संभवति किमित्येवंव्याख्यानमित्यतस्तदसंभवमाह—**न त्विति** ॥ शोकमात्रस्य रसत्वासंभवादिति भावः । अत्रैव दूषणान्तरमाह—**न चेति** ॥ **एषेति** ॥ श्लोकरचनारूपेत्यर्थः । उपसंहरति—**एवमिति** ॥ आत्मेत्यस्य व्याख्या **सारभूत इति** ॥ सारभूतत्वमुपपादयति—**अपरेति** ॥ व्याख्यातमेतत्—**एतदिति** ॥ श्लोकस्य रससमुच्चलनस्वभावत्वम् । एतेन रसेन यावत्कविः

१. क. ख. ग. 'रसः परि'
२. क. ख. 'कुम्बोच्छलन'
ग. 'कुम्बो बलवत्'
३. क. ख. ग. 'निस्पन्द'
४. ग. 'स्वरूपभाववाग्विलापादि'
५. ब. 'पादिवत्'
क. ख. ग. च. 'पादिसमय'
६. क. ख. ग. घ. ङ. च. 'पेक्षित्वे'
७. क. ख. 'इति' नास्ति ।
८. ख. 'एव'
९. ङ. च. 'तन्दो'
१०. ग. 'प्राप्तम्'
११. क. ख. ग. 'मानिषदेत्यादि'
१२. च. 'मन्तव्यः'
१३. ग. 'सति' नास्ति ।
घ. 'स हि'
१४. घ. 'आत्मेति कृत्वा रस्यात्मेति'
१५. क. 'न तु'
ख. 'तत्'
१६. ङ. 'हि' नास्ति । घ. च. 'हि चर्वणोचित' नास्ति ।
१७. क. ख. 'भाववचनात्मक'
१८. क. ख. च 'समुच्छलन'
१९. क. ख. 'सारभूतस्वभाव'
ग. 'रस'

## लोचनम्

न चैतेन [1]तावन्नैव वमत्यमुम्'' इति । 'अगमः' इति छान्दसेनाडागमेन ॥ **स एवेति** ॥ एवकारेणेदमाह—नान्य आत्मेति[2] । तेन यदाह भट्टनायकः[3]—

"शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
[4]अर्थे तत्त्वेन [5]युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये [6]काव्यगीर्भवेत् ॥"

इति तदपास्तम् । व्यापारो हि यदि ध्वननात्मा रसनास्वभावः तन्नापूर्वमुक्तम् । अथाभिधैव[7] व्यापारः तथाप्यस्याः[8] प्राधान्यं[9] नेत्यावेदितं प्राक् ॥

## कौमुदी

पूर्णो न भवति तावदमुं रसं काव्यरूपेण नैव वमत्युद्गिरति किन्तु पूर्ण एव सन् । अपूर्णत्वे काव्यस्य रसात्मत्वं न सिध्यति । रसवमनरूपस्य काव्यस्य तद्रूपत्वमेवेत्यर्थः । एवकारस्यात्मान्तरवादिपक्षप्रतिक्षेपकत्वेनानर्थक्यं परिहरति—**स एवेति** ॥ ननु प्रसक्तस्यैव प्रतिषेधो युक्तः, तत्किमस्त्यात्मान्तरप्रसक्तिः येन तन्निषेध इत्यत आह—**तेनेति** ॥ **तत्रेति** ॥ शास्त्राख्यानकाव्येषु मध्य इत्यर्थः ॥ **पृथगिति** ॥ आख्यानकाव्यापेक्षम् । एतदुत्तरत्राप्यनुषञ्जनीयम् । तत्त्वेन प्रधानत्वेन युक्ते सतीत्यर्थः । एतयोः शब्दार्थयोः द्वयोरपि गुणत्वे व्यापारस्य च प्राधान्ये सति काव्यव्यपदेशो भवेदित्यर्थः । किमयं व्यापारो ध्वननात्मा किं वा अभिधैव ; नाद्य इत्याह—**व्यापारो हीत्यादि** ॥ **हिर्हेतौ** । **तदिति** ॥ तर्हीत्यर्थः । अस्माभिर्हि ध्वननव्यापारस्य प्राधान्यमितरव्यापारापेक्षमभ्युपगतमेव । तस्य तु विषयद्वारेण स्वरूपप्रतिलम्भात्तत्कृतमेव तदित्येतावत् । द्वितीयं तु दत्तदोष इत्याह—**अथेति** ॥ अभिधाव्यापारप्राधान्यस्य काव्यत्वप्रयोजकत्वे शास्त्रादेरपि तथाभावापत्तिरित्यादिदोषसूचनार्थं तथापीत्युक्तम् ॥ **प्रागिति** ॥ व्यापारस्वरूपनिरूपणावसरे । काव्यस्यावयविनश्चारुत्वं नाम तदवयवस्थानीयवाच्यवाचकरचनाचारुत्वमेव देहाद्यवयविनस्तदवयवभूतकरचरणादिचारुत्वे सति चारुत्वव्यवहारदर्शनात् । तच्च विविधपदोपात्तवैचित्र्यात्मकम् ।

१. क. ख. 'तावन्नैवैवम्' घ. च. 'तावन्नैव मिनोत्यमुम्'
२. क. ख. 'इति' नास्ति ।
३. घ. 'भट्टनाथः'
४. क. ख. ङ. च. 'अर्थतत्त्वेन'
५. क. ख. 'युक्तम्'
६. क. ख. 'काव्यधी'
७. क. ख. घ. 'अभिधेय'
८. घ. 'अस्य'
९. ग. 'प्राधान्ये'

ध्वन्यालोकः

विविधविशिष्ट[1]वाच्यवाचकरचनाप्र[2]पञ्चचारुणः काव्यस्य स एवार्थः सारभूतः ।

लोचनम्

श्लोकं व्याचष्टे—**विविधेति** ॥ विविधं तत्त[3]दभिव्यञ्जनीयरसानुगुण्येन विचित्रं कृत्वा वाच्ये वाचके रचनायां च प्र[4]पञ्चेन यच्चारु शब्दार्[5]थालङ्कारगुणयुक्तमित्यर्थः । तेन सर्वत्रापि ध्व[6]ननसद्भावेऽपि न[7] तथा व्यवहारः । आत्मसद्भावेऽपि हि[8] क्वचिदेव जीवव्यवहार इत्युक्तं प्रा[9]क् । ए[10]तेनैतन्निरवकाशम्, यदुक्तं हृदयदर्पणे "सर्वत्र तर्हि काव्य-व्यवहारः स्यात्" इति । नि[11]हतसहचरीति विभाव उक्तः । आक्रन्दितशब्दे[12]नानुभावः ॥

कौमुदी

वैचित्र्यं चाभिव्यञ्जकस्य विभिन्नाभिव्यङ्ग्यरसाभिव्यञ्जनयोग्यतासंपादनमित्येतदाह---**विविधमिति** ॥ न सिद्धस्य वैचित्र्यस्यानुवादोऽयम्, किन्तु साध्यस्य विधानमित्याह—**विचित्रं कृत्वेति** ॥ वाच्येऽर्थे प्रपञ्चेनाधिक्येन यच्चारु, वाचके शब्दे प्रपञ्चेन यच्चारु, रचनायां च प्रपञ्चेन यच्चारु, वाच्यादीनां चारुत्वातिशययोगात्तत्समुदायरूपस्य काव्यस्य चारुत्वमनेन विशेषणेनोक्त-मित्यर्थः । एतदेव स्पष्टीकरोति—**शब्दार्थेति** ॥ अस्य फलमाह--**एतेनेति** ॥ यतो यथोक्तविशे-षणविशिष्टमेव वाक्यं ततो हेतोः सर्वत्रापि 'सिंहो वटुः' इत्यादावपि तथेति । काव्यत्वेनेति कुत इत्याशङ्क्य प्रागुक्तां प्रतिबन्दीं स्मारयन्नाह—**आत्मसद्भाव इति** ॥ उक्तन्यायहतत्वा-द्दर्पणकारस्य ध्वनिध्वंसो दर्पविजृम्भितमित्याह—**एतेनेति** ॥ **उक्त इति** ॥ सहचरी [चारि]

१. ग. 'विशिष्ट' नास्ति ।
२. क. ख. 'प्रपञ्च' नास्ति ।
३. ङ. च. 'तदभि'
४. क. ख. 'प्रपञ्चेन' नास्ति ।
५. ङ. च. 'अर्थ' नास्ति ।
६. क. ख. ग. 'न ध्वनन'
७. क. ख. ग. 'न' नास्ति ।
८. क. ख. ग. 'हि' नास्ति ।
९. क. ख. 'एव' अधिकः
१०. क. ख. 'तेन'
११. क. ख. 'सन्निहित'
१२. घ. 'शब्देऽनु' च. 'शब्दोऽनु'

ध्वन्यालोकः

तथा[1] चादिकवेः निहत[2]सहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः ॥

लोचनम्

जनित इति[3] ॥ चर्वणागोचरत्वेनेति शेषः[4] । ननु शोकचर्वणातो यदि श्लोक

कौमुदी

हननमत्र विभाव इत्यर्थः । वृत्तिग्रन्थालोचनायां ह्याक्रन्दिताकर्णनजनितो मुनेः शोक इत्युक्तमिव प्रतीयते ; तत्कथं पूर्वं तन्निषेध इत्यत्राह—**चर्वणागोचरत्वेनेति** ॥ "जायमानो ह वै ब्राह्मणः" इत्यत्र गृहस्थो जायमान इतिवदिति भावः । नन्वेवमपि रसस्य काव्यात्मत्वं न ग्रन्थकृदभिमतमिव भाति । चर्वणावस्थस्य शोकस्यैव श्लोकरूपत्वोक्त्या काव्यात्मत्वस्याभिधानात् । न खलु शोक एव करुणरस इति शङ्कते—**नन्विति** ॥ प्रतीयमानत्वं हि रसादेरेव

उपलोचनम्

"तथा चादिकवेर्निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः" —इत्यालोकः । स्यादेतत्—अत्र निहतसहचरीत्यादिना क्रौञ्च्या हननं परामृष्टमिव भाति । कथमेतत् संगच्छेत ? यतो रामायणे बालकाण्डे द्वितीयसर्गे 'द्वन्द्वदशापरवशयोः क्रौञ्चयोरेकं पुमांसं निषादो जघान; निषादनिहतक्रौञ्चदर्शनोत्थः शोकपरीवाहश्चादिकवेः श्लोकतया परिणतः' इति प्रतिपाद्यमानोऽयं विषयः सुप्रसिद्धः । कथमेवं प्रसिद्धिमुपेक्ष्य क्रौञ्च्याः सहचर्या हननं प्रत्यपाद्यानन्दवर्धनाचार्यैः ? एतद्ग्रन्थव्याख्यानभागे लोचने शङ्केयं न परिह्रियते, प्रत्युत दृढीक्रियत इव । निर्णयसागरमुद्रितलोचने लोचनमातृकासु च प्रायशः प्रकृतकारिकाविभजनावसरे "सहचरीहननोद्भूतेन साहचर्यध्वंसनेन" इति दृश्यते । अस्य एतद्विवरणभागे कौमुदीमातृकायां दृश्यमानस्य सहचरीहननमित्यनुवादस्य च पर्यालोचनायां सर्वथा प्रसिद्धिविरोधमनादृत्य क्रौञ्चीहननमेवात्र सिद्धवद्व्यवहृतमिव भाति । एवं विपर्यस्तभावनाया लेखकप्रमादादिवशादायातः पाठे व्याकुली

१. क. ख. 'तथा चादिकवेः' नास्ति ।
२. क. ख. 'सन्निहित'
३. घ. 'इति' नास्ति ।
४. क. ख 'विशेषः'

ध्वन्यालोकः

[1]शोको हि करुणरसस्थायिभावः प्रतीयमानरूप एवेति प्रतिपादितम् ।

लोचनम्

उद्भूतः तत्प्रतीयमानं वस्तु काव्यस्यात्मेति कुत इत्याशङ्कयाह—शोको हीति ॥

उपलोचनम्

भावो हेतुः स्यात् । तथा हि—वृत्तिग्रन्थे "निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः" इति पदस्यार्थ एवं वर्णनीयः—निहतः सहचरीविरहकातरः क्रौञ्चः, विभावः, आक्रन्दश्चानुभावः, ताभ्यां जनितः—इति । एवं विवरणे "वियुक्ता पतिना तेन क्रौञ्चेण सहचारिणा" इति रामायणपद्यस्य सर्वथानुग्रहः स्यात्; सहचरणशीलता च सहचारिपदप्रत्ययार्थो वाल्मीकेरभिसंहितः सम्यगुद्घाटितः सहचारिपदविवरणपरतया "सहचरीविरहकातर-" इति पदं प्रयुक्तवता सहृदयचक्रवर्तिना ध्वनिकारेण—इति च ज्ञातुं शक्यते । एतदभिसंधायैव लोचने "निहत-सहचरीति विभाव उक्तः, आक्रन्दितशब्देनानुभावः" इत्युच्यते । अत्र लोचनग्रन्थे "निहत-सहचरीति" इत्यन्तेन "निहतसहचरीविरहकातर-" इत्यस्य भागस्य प्रतीकोपादानम्, न तु निहतशब्दस्य सहचरीशब्देन अन्वयोऽभिप्रेतः । अञ्जनाभिधे लोचनव्याख्याने अस्मिन् प्रकरणे "मा निषाद" इत्यादिरामायणपद्यविवरणे 'एकं पुमांसं काममोहित-मकृतार्थमवधीः' इति दृश्यमाना वचनव्यक्तिरुपरि प्रकाशितमाशयमेवोपष्टभ्नाति ॥

अत्रैवं शङ्क्येत—राजशेखरकृतकाव्यमीमांसायां बरोडानगरे मुद्रितायां सप्तमे पुटे एवं दृश्यते—"निषादनिहतसहचरीकं क्रौञ्चयुवानं करुणक्रेङ्कारया गिरा क्रन्दन्तमुद्वीक्ष्य शोकवान् श्लोकमुज्जगाद" इति । अस्य ध्वन्यालोकानुवादपरस्य ग्रन्थस्य का गतिः ? अत्रेदमनुसंधेयम्—"निषादनिहतसाहचरीकं क्रौञ्चयुवानम्, करुणक्रेङ्कारया गिरा च क्रौञ्चीं क्रन्दन्तीमुद्वीक्ष्य" इति पाठेन भवितव्यम्; स च पाठः मुद्रितपुस्तकादर्शभूतेषु कोशेषु विपर्यस्तः स्यात्; समीचीन-तया अभ्यूहिते पाठे निहतसाहचरीकः ध्वस्तसाहचर्यः क्रौञ्चयुवा विभाव उपात्तः—इति । अतः परं सहृदयाः प्रमाणमित्यलं विस्तरेण ॥

## लोचनम्

करुणस्य तच्चर्वणागोचरात्मनः शोकः स्थायिभावः । शोके हि स्थायिभावे ये विभावानुभावाः तत्समुचिता चित्तवृत्तिः चर्व्यमाणात्मा रस इत्यौचित्यात् स्थायिनो रसतापत्तिरित्युच्यते ; प्राक्स्वसंविदितं परत्रानुमितं च चित्तवृत्तिजातं संस्कारक्रमेण

## कौमुदी

शोकस्याभिधावृत्तिविषयत्वादित्यर्थः । करुणस्थायिभाव इत्यत्र विग्रहं दर्शयति—**करुणस्येति** ॥ करुणस्य लौकिकशोकापेक्षया व्यतिरेकं दर्शयितुं स्वरूपमाह—**तच्चर्वणागोचरात्मन इति** ॥ शोकस्य या चर्वणा तदीयविभावसमुचितचित्तवृत्तिचर्वणोपकृता तदात्मकस्य आस्वादापरपर्यायस्य आनन्दघनस्य संवेदनस्य गोचरो योऽर्थः स करुणरस इत्यर्थः । ननु यदि स्थायिभावादन्य एव तद्विलक्षणः कश्चिदलौकिको रसः तर्हि स्थायी भावो रसः ; इहापि "शोकः श्लोकत्वमागतः" इति च सकलसत्कविसहृदयव्यवहारभूमिषु स्थायिनो रसत्वापत्तिव्यवहारो विरुध्येतेत्याशङ्क्य स्थायिभावस्य रसचर्वणोपयोगित्वनिबन्धनोऽयमौपचारिको व्यपदेश इत्याह—**शोके हीति** ॥ शोक इत्युपलक्षणं रत्यादेः । स्थायिनोऽपि यदि स्थायिभाव एव रसीभूत इत्यास्थीयेत, तर्हि प्राचीनानुमानिकी स्थायिप्रतीतिरपि रसरूपा स्यात् । न च अनुमानरूपायाः प्रतीते रसात्मकत्वम्, तस्या अलौकिकत्वात् । अतः स्थायिनियतविभावसमुचितचित्तवृत्तिचर्वणागोचरः कश्चिदलौकिकोऽर्थो रस इति स्थायिनो रसीभावव्यपदेश औपचारिक एव, न तु स्थायिन एव रसात्मतापत्त्यपेक्षया मुख्य इत्यर्थः ॥ **औचित्यादिति** ॥ उपयोगित्वनिमित्तादुपचारादिति यावत् ॥ यदाह—औचित्यं तु तत्स्थायिगतत्वेन प्रसिद्धानामधुना चर्वणोपयोगितया विभावादिभावालम्बनादिति । इतरचित्तवृत्तिसमवहितस्थायिचित्तवृत्ते रसचर्वणानिमित्तत्वमुपचारबीजं दर्शयति—**प्राक्स्वसंविदितमिति** ॥ व्यवहारदशायां स्वस्मिन्नात्मनि संविदितम् इदानीं विलापादिकार्यदर्शनात् परस्मिन्ननुमीयते ; तदनन्तरं संस्कारोद्बोधः, तदनन्तरं निर्मलतया हृदयस्य संवादः, तदनन्तरं तन्मयीभावः—इत्येवं स्थायिचित्तवृत्तेश्चर्वणोपायत्वात् स्थायी भाव एव रस इत्युपचर्यत इत्यर्थः । एतच्चोत्तरत्र रसविचारे वितनिष्यत

१. क. ख. 'च चर्वणा'
२. ग. ङ. 'शोकः' नास्ति ।
३. ग. 'तत्त्वसमुचिताः'
४. क. ख. ग. 'चर्वणात्मा'
५. ख. ग. 'इति' नास्ति ।

ध्वन्यालोकः

प्रतीयमानस्य चान्यप्रभेददर्शनेऽपि रसभावमुखेनैवोपलक्षणम्, प्राधान्यात् ॥

लोचनम्

हृदयसंवादमादधानं चर्वणायामुपयुज्यते यतः[1] । ननु प्रतीयामानरूपमात्मा, तच्च[2] त्रिभेदं प्रतिपादितम् ; न तु रसैकरूपम् ; अनेन चेतिहासेन रसस्यैवात्मभूतत्वमुक्तं[3] भवतीत्याशङ्क्य अभ्युपगमेनैवोत्तरमाह—**प्रतीयमानस्य चेति**[4] ॥ अन्यो भेदो वस्त्वलंकारात्मा । भावग्रहणेन[5] व्यभिचारिणोऽपि चर्व्यमाणस्य तावन्मात्रविश्रान्तावपि स्थायिचर्वणापर्यवसानोचित[6]रसप्रतिष्ठामनवाप्यापि[7] प्राणत्वं[8] [9] भवतीत्युक्तम्[10] । यथा—

"नखं नखाग्रेण विघट्टयन्ती विवर्तयन्ती वलयं विलोलम् ।
आमन्द्रमाशिञ्जितनूपुरेण पादेन मन्दं भुवमालिखन्ती ॥"

कौमुदी

इति तत एव स्फुटतरमवसेयमिति नेह प्रतन्यते । ग्रन्थादौ प्रतिज्ञातस्य ध्वनेः काव्यात्मत्वस्योपपादनमनया कारिकया क्रियत इति यदुक्तं तदयुक्तमिति शङ्कते—**नन्विति** ॥ रसध्वन्येकविषयत्वादितिहासस्य न त्रिविधप्रतीयमानकाव्यात्मप्रसाधकत्वं घटत इत्यर्थः । ननु भावग्रहणमतिरिक्तमिव रसस्यैवोदाहरणे प्रस्तुतत्वादित्याशङ्क्याह—**भावग्रहणेनेति** ॥ **व्यभिचारिणोऽपीति** ॥ लज्जादेर्भावस्य, तावन्मात्रे व्यभिचारिण एव स्वरूपमात्रे, विश्रान्त्यभावेऽपि प्राणत्वं काव्यात्मत्वं भवतीत्यन्वयः । विश्रान्तिधामत्वलक्षणं हि जीवितत्वम्, तस्याभावेऽपि जीवितत्वस्य भावो विरुद्ध इत्यपिशब्दार्थः । ननु व्यभिचारिचर्वणायाः स्थायिचर्वणापर्यवसायित्वात् तदुचितरसप्रतिष्ठाप्राप्तिमुखेन प्राणत्वं न स्वरूपेणैवेति नेत्याह—**स्थायिचर्वणेति** ॥ अत्रापि पूर्ववद्विरोधार्थः अपिशब्दः । कथं तर्हि तस्य प्राणत्वमपीत्यत उक्तम्—**चर्व्यमाणस्येति** ॥ चर्व्यमाणतासारमेव हि रसस्यापि रसत्वं जीवितत्वं च । सा तु व्यभिचारिणोऽपि यदि सम्यक् स्वोचितविभावादियोजनावशात् कदाचित् संपनीपद्येत, कस्तस्यापि जीवितत्वं निरुणद्धीति भावः ।

१. क. ख. ग. 'यतः' नास्ति ।
२. क. ख. 'तत्र' ग. 'तच्चेति भेदम्'
३. क. ग. 'उक्तं' नास्ति ।
४. घ. ङ. च. 'च' नास्ति ।
५. क. ख. ग. घ. 'ग्रहणम्'
६. क. ख. 'उदित'
७. घ. 'अवाप्य'
८. ग. 'अनुप्राणकत्वम्'
९. क. ख. 'प्राणकत्वम्'
१०. ग. 'भवतीति' नास्ति ।

## लोचनम्

इत्यत्र [1]लज्जायाः । रसभावशब्देन[2] [3]तदाभासतत्प्रशमावपि संगृहीतावेव, अवान्तरवैचित्र्येऽपि तदेकरूपत्वात् ॥ **प्राधान्यादिति** ॥ रसपर्यवसानादित्यर्थः । तावन्मात्र[4]विश्रान्तावपि चान्य[5]शब्दवैलक्षण्यकारित्वेन वस्त्वलंकार[6]ध्वन्योरपि जीवित[7]त्वमौचित्या[8]दुक्तमिति भावः ॥

## कौमुदी

अस्योदाहरणमाह—**यथेति** ॥ अत्र हि नखविघट्टनविलोलवलयविवर्तनकलनूपुरनिनदरुचिरचरणकिसलयविलेखनलक्षणैः सम्यगायोजितैः अनुभावैरभिव्यज्यमानः समुचितशृङ्गाररसप्रतिष्ठाप्राप्तिमनपेक्ष्यैव चर्वणोपारूढो लज्जाख्यो भावः काव्यजीवितत्वेन सहृदयहृदयमणिमुकुरतलमधिशेत एव । तदाह—**अत्र लज्जाया इति** ॥ प्राणत्वमित्यनुषज्य योज्यम् । एवं रसभावयोः काव्यात्मत्वमुपपाद्य परिसंख्यानभयात्तदाभासतत्प्रशमयोरपि तथात्वमस्तीति वक्तुमाह—**रसभावशब्देनेति** ॥ **संगृहीतावेवेति** ॥ एवकारेण रसभावयोरेव ग्रहणादितरयोर्जीवितत्वशङ्का व्यवच्छिद्यते । अथवा एवकारः क्रमभञ्जनेन "रसभावग्रहणे[शब्दे]नैव" इत्यत्र घटनीयः । ननु "अनौचित्येन तदाभासः" इत्यादिना तद्भेदस्य प्रतिपादनात् कथं रसभावशब्देन तयोः संग्रह इति शङ्कां परिहरन् हेतुमाह—**अवान्तरेति** ॥ तद्भेदस्य विषयभेदोपाधिकृतत्वात् स्वरूपभेदस्य चाभावात् अन्तरङ्गभूतस्वरूपैक्योपादानेन तन्निमित्तप्रवृत्तिकेन शब्देन तत्संग्रहो नानुपपन्न इत्यर्थः । ततो रसादिध्वनेः प्राधान्यम्, इतरयोस्तदभावो वेत्याशङ्क्याह—**रसेति** ॥ वस्त्वलङ्कारध्वन्योरिति शेषः । कथं तर्हि तयोः जीवितत्वोद्घोषणमित्यत्राह—**तावन्मात्रेति** ॥ स्वरूपमात्रपर्यवसानाभावकृतं हि रसपर्यवसानम् । तथाभावे सति यद्यपि जीवितत्वमनुचितम्, तथापि रसादिध्वनिगतान्यशाब्द[शब्द]वैलक्षण्यकारित्वगुणयोगादौपचारिकं जीवितत्वं न मुख्यमित्यर्थः । "तावन्मात्रविश्रान्तौ" इति पाठे रसमात्रविश्रान्तावित्यर्थः ॥

१. क. ख. 'लज्जया' च. 'चान्य...त्वेन' नास्ति ।
२. च. 'शब्दौ' घ. 'चान्यशाब्द'
३. क. ख. 'च' अधिकः ।
४. क. ख. ग. च. 'विश्रान्तौ'
५. क. ख. ङ. 'अन्यशब्दे'
६. क. ख. ग. घ. च. 'ध्वनेः'
७. ङ. 'जीव'
८. ग. 'त्वौचित्यात्'

ध्वन्यालोकः

**सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम् ।**
**[1]अलोकसामान्यमभिव्यनक्ति [2]परिस्फुरन्तं प्रतिभाविशेषम् ॥ ६ ॥**

लोचनम्

एवमितिहासमुखेन प्रतीयमानस्य काव्यात्मतां प्रदर्श्य [3]स्वसंवित्सिद्धमप्येतदिति दर्शयति---**सरस्वतीति** ॥ वाग्रूपा भगवतीत्यर्थः । वस्[4]तुशब्देनार्थशब्दं तत्त्वश[5]ब्देन च वस्तुशब्दं व्याचष्टे—**निःष्[6]यन्दमानेति** ॥ दिव्यमानन्दरसं स्वयमेव [7]प्रस्नुवानेत्यर्थः । [8]यदाह भट्टनायकः—

"वाग्धेनुर्दुग्ध [9]एकं हि रसं [10]यद्बालतृष्णया ।
तेन नास्य समः स स्याद्दुह्यते योगिभिर्हि यः ॥"

कौमुदी

समनन्तरकारिकाया अपि यद्यपि काव्यात्मत्वप्रसाधकत्वमविशिष्टम्, तथापि तद्विषयप्रमाणान्तरप्रदर्शनेन तद्दृढिमनिबन्धनत्वादानर्थ्यमनाशङ्क्यमित्याह—**एवमिति** ॥ न केवलमितिहास एवात्र प्रमाणं स्वसंवेदनमपीत्यर्थः । तेन स्वप्रत्यक्षसिद्धत्वादत्यन्तानपह्नवनीयत्वमर्थस्य समर्थितम् । कारिकायां यत् अर्थवस्तुशब्देनोक्तं तदेव वृत्तौ वस्तुतत्त्वशब्देन व्याख्यानाभिप्रायेणोक्तम् । अर्थश्चासौ वस्तु चेति अर्थवस्तु ; अर्थशब्दोऽत्र वस्तुवाचकः ; वस्तु चातत्त्वमपि भवति, न त्विदं तथेति सारत्वं द्योतयितुं तत्त्ववाची वस्तुशब्द इति नान्यतरवैयर्थ्यमित्याह—**वस्तुशब्देनेति** ॥ किं तद्वस्तुतत्त्वमित्याकाङ्क्षायां निःष्यन्दमानेति पदव्याख्याने स्थित्वा लोकोत्तरानन्दसंवेदनरूपरसात्मकमित्याह—**दिव्यमानन्दरसमिति** ॥ निःष्यन्दमानेति प्रयोज्यव्यापारपरमपीह प्रयोजकव्यापारपरमवगन्तव्यमित्याह—**प्रस्नुवानेति** ॥ **स्वयमेवेति** ॥ स्वसौभाग्यमहिम्नैवार्थानपेक्षया ॥ अत्र भट्टनायकभणितिं संवादयति—**यदाहेति** ॥ वागेव काव्यात्मतया

१. क. ख. 'अवलोकसाम्यं प्रतिभाविशेषं परिस्फुरन्तं समभिव्यनक्ति'
२. ग. 'प्रति'
३. ग. 'स च संवित्'
४. क. ख. 'अर्थशब्देन वस्तुशब्दं वस्तुशब्देन तत्त्वशब्दं च वक्तुं वस्तुशब्दे व्याचष्टे।
५. च. 'शब्दे च'
६. क. ख. ग. 'निस्पन्द'
७. घ. 'प्रस्नुवन्ति'
८. ग. 'यथा' घ. 'यथाह'
९. क. ख. 'एवं'
१०. क. ख. 'यद्बाभ'

ध्वन्यालोकः

वस्तुतत्त्वं[1] निःष्यन्दमाना महतां कवीनां सरस्वती अलोकसामान्यं

लोचनम्

तदावेशेन विनाप्याक्रान्त्या हि[2] योगिभिर्दुह्यते । अत एव

"यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
[3]भास्वन्ति रत्नानि महौषधीश्च पृ[4]थूपदिष्टां दुदुहुर्धरित्रीम् ॥"

इत्यनेन साराग्र्य[5]वस्तुपात्रत्वं हिमवत उक्तम् ॥ अभिव्यनक्ति परि[6]स्फुरन्तमिति ॥

कौमुदी

परिणममाना धेनुः, बाले बालवदनभिज्ञे उपासके वत्से च ; तृष्णया कारुण्येन स्नेहेन च ; एकं दिव्यं रसं दोग्धि । हिः प्रसिद्धौ । यत् यस्मात् बालतृष्णया दोग्धि तेन ततो हेतोः । यो रसो योगिभिर्दुह्यते स नास्य तृष्णया प्रस्नुतस्य रसस्य समः स्यात् ; किन्तु ततोऽतिदूरमर्वाचि पर्वणि निविशत इत्यर्थः । असमत्वे विवक्षितं हेतुमाह—तदावेशेनेति ॥ तदावेशो रसावेशः । अपिरेवार्थः । आक्रान्त्या प्रत्याहारादिप्रयत्नपरम्परात्मकपरिपीडनोपायाश्रयेणेत्यर्थः । स्वयमासादितपरिपाकविशेषस्य फलादेः प्रयत्ननिर्वर्तितपाकफलापेक्षया स्वादुतातिरेकस्य लोके दृष्टत्वादित्यर्थः । आक्रान्तिदुग्धात् स्वयंप्रस्नुतस्य सातिशयत्वे गमकमाह—अत एवेति ॥ मेरुदोग्धृकर्तृके पृथिवीदोहने हिमवतो वत्सत्वाभिधानेनेत्यर्थः । यथा गोः स्नेहस्नुतं पयः प्रथमं वत्स एव पिबति, तत्पीतशेषं दोग्धारो दोहनपूर्वमुपयुञ्जते, तथात्र हिमवानेव पृथिव्याः सारभूतानामग्रेभवानां वस्तूनां पात्रमभूदित्यनेन मेरोः किमपि लोकोत्तरत्वं दर्शितमित्यर्थः । परिस्फुरत्ता-

१. क. ख. 'वस्तुतत्त्वं.... व्यनक्ति' नास्ति ।
२. घ. ङ. च. 'हि' नास्ति ।
३. क. ख. 'भास्वन्ति...धरित्रीम्' नास्ति ।
४. ङ. च. 'धरिपृथू....त्रीम्' नास्ति ।
५. घ. ङ. च. 'साराग्र'
६. ग. 'प्रतिस्फु-'

लोचनम्

प्रतिपत्तॄन् प्रति सा प्रतिभा[1] नानुमीयमाना, अपि तु तदावेशेन भासमानेत्यर्थः । यथोक्तमस्मदुपाध्यायभट्टतौतेन[3]—"नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः" इति । प्रतिभा अपूर्व-

कौमुदी

वस्थस्यैवाभिव्यञ्जकत्वोक्त्या कवेरिव श्रोतुरपि प्रत्यक्षायमाणैव सा प्रतिभेति दर्शितमित्याह—**प्रतिपत्तॄन् प्रतीति** ॥ बहुवचनेन सकलभोक्तृवर्गसाधारण्यं द्योतितम् । परिस्फुरत्ता हि साक्षात्कारगोचरता । सा तु प्रथमं कवावेव संभविनी ; प्रतिपत्तुः सहृदयस्य तु सा अनुमानविषयतया परोक्षैवेति माशङ्कि ; प्रतिपत्तॄन् प्रत्यपि सवित्रादिप्रकाशवत् प्रत्यक्षैव । इदमत्र वस्तुतत्त्वम्—कविर्हि सुकुमारमनसां राजकुमारप्रायाणामास्वादपुरस्कारेण चतुर्वर्गोपायव्युत्पत्तिसंपिपादयिषया काव्यं चिकीर्षुः चिकीर्ष्यमाणकाव्यनिबन्धनी[नीभूत]-विभावादियोजनास्वादनीयरसामृतप्रवाहेण प्रथमं स्वयमेव परिपूरितगम्भीरतर-निजहृदयमहाह्रदो भूत्वा ग्रहाविष्ट इवोन्मत्त इव काव्यं बहिः प्रसार्य श्रोतॄणामपि सहृदयानामात्मसमानयोगक्षेमतां संपादयति ; तेन तेषां काव्यजनिता प्रतीतिर्नानुमानतुल्यरूपा, किं तु साक्षात्कारकल्पैव—इति । अत्राभियुक्तोक्तिं संवादयति—**यथोक्तमिति** ॥ यथा नायकस्य रामादेः कथा[तथा]रसाविष्टस्य विशिष्टस्य कवेः कथा[तथा]काष्ठाधिष्ठितसहृदयभावस्य श्रोतुरिति काव्यनाट्यमण्टपभाजां तादृशरसोर्मिमालानिमज्जनोन्मज्जनव्यतिकरैकात्म्यापन्नहृदयानां कविसहृदयानां न भेदवार्तापीत्यर्थः । प्रतिभा नाम प्रत्यग्रा दृष्टिः । प्रत्यग्रत्वं च जगदुदरविपरिवर्तिनामितरेषां वा स्वेच्छानिःष्यन्दमात्रादनुक्षणमभिनवाभिनववैचित्र्यविशेषशतसहस्रोत्सूत्रयितृत्वात् । एतदाह—**अपूर्वेति** ॥ अपूर्वतया पूर्वस्य वस्तुनो निर्माणे ; अथवा अपूर्वस्यैव वस्तुनः निर्माणे । यदाहुः—"प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः" इति । वामनोऽपि—"कवित्वबीजं प्रतिभानम्" इति । तथा चाह "द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविकर्म च । प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम् ॥" इति ।

१. ग. 'प्रतिभानुमीया नापि तद्विलेशेन'
२. क. ख. 'यदुक्तम्'
३. ग. 'लोल्लटेन' घ. 'तोधेन' ङ. 'तोडेन' च. 'तोटेन'

ध्वन्यालोकः

प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति । येनास्मिन्न[1]तिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवयो[2] गण्यन्ते ॥

इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्—

लोचनम्

वस्तुनिर्माणक्षमा प्रज्ञा । तस्या विशेषो रसावेशवैशद्य[3]सौन्दर्यकाव्यनिर्माणक्षमत्वम् । यदाह मुनिः— "कवेरन्तर्गतं भावम्" इति ॥ येनेति ॥ अभिव्यक्तेन स्फुरता प्रतिभाविशेषेण निमित्तेन महाकवित्वगर्[4]णनेति यावत् ॥

इदं चेति ॥ न केवलम् "प्रतीयमानं पुनरन्यदेव" इत्येतत्कारिकासूचितौ स्वरूपविषयभेदावे[5]व, यावद्भिन्नसामग्रीवेद्य[6]त्वमपि वाच्यातिरिक्तत्वे प्रमाणमिति यावत् ॥

कौमुदी

यथोक्तविशेषशालिन्याः प्रतिभायाः किं विशेषान्तरमित्याशङ्क्याह—तस्या इति ॥ रसावेशः कवेः प्रतिभाया एव वा ; तेन हेतुना यद्वैशद्यं लोकयात्रापतितावस्था-परित्यागेन निर्मलीभावः, तेन यत् सौन्दर्यं लोकोत्तरावस्थान्तरपरिग्रहलक्षणम्, तदेव स्वरूपत इदमीदृगिति व्युत्पादयितुमशक्यत्वात् तत्कार्यलिङ्गमुखेन दर्शयति—काव्यनिर्माणेति ॥ न शब्दार्थसंघटनमात्रे ; नापि गुणालङ्कारसुन्दरशब्दार्थरचनमात्रे ; अपि तु एतदभिधास्य-मानप्रतीयमानानुप्राणिते मुख्यभूते काव्यनिर्माणे विषये समर्थत्वम् ; तच्च तथाविध-काव्यनिर्मितिकार्यदर्शनादवसेयमिति भावः । उक्तप्रकारेण व्याख्यातार्थे मुनिवचनं मानयति —यदाहेति ॥ येनेति यच्छब्दो न सरस्वतीकर्तृकाभिव्यञ्जकत्वरूपवाक्यार्थ-परामर्शकः ; अपि तु विशिष्टप्रतिभाविशेषपरामर्शक इत्याह —अभिव्यक्तेनेत्यादि ॥ महा-कवित्वगणना महाकवित्वेन गणनेत्यर्थः ॥

"इदं चापरम्" इत्यादिवृत्तिग्रन्थेन समनन्तरकारिकायाः काव्यात्मत्वप्रतिपादककारि-काद्वयान्तरिततया "प्रतीयमानम्" इतर[इति] कारिकया सम्बन्धो वर्ण्यत इत्याशयेनाह—न

१. क. ख. 'इयति'
२. क. ख. 'इति' अधिकः ।
३. क. 'वैशारद्यसौन्दर्यम्'
घ. 'वैशद्यक्षमत्वं काव्यनिर्माणक्षमत्वम्'
४. क. ख. ग. 'महाकविगणना'
५. क. ख. 'एवम्'
६. घ. 'वेद्यमानमपि'

ध्वन्यालोकः

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स तु[1] काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ७ ॥

शब्दार्थशासनज्ञानमात्रेऽपि परं न वेद्यते सोऽर्थो यस्मात् केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते । यदि च[2] वाच्यरूप एवासा[3]वर्थः स्यात्त[4]द्वाच्य[5]वाचक-

लोचनम्

वेद्यत इति ॥ न तु न[6] वेद्यते, येन न स्यादसाविति भावः । काव्यस्य[7] तत्त्वभूतो

कौमुदी

केवलमिति ॥ नतु तया स्वरूपभेदो विषयभेदो वा नाभिहितः ; कथं तदुक्तसमुच्चयार्थश्चकारः इत्यत उक्तम्—कारिकासूचिताविति ॥ अन्यदिति स्वरूपभेदः; एवेति विषयभेदश्च सूचितः ; इतरथा अन्यतरवैफल्यं स्यादित्यर्थः । यैव हि वाच्यप्रतिपत्तौ सामग्री शब्दार्थशासनज्ञानात्मिका न सैव व्यङ्ग्यप्रतीतावपि ; किन्तु ततोऽन्या रसचर्वणसमर्थसमधिकविमलमतिमुकुरशालितालक्षणा । तत्र यदि वाच्यव्यङ्ग्ययोरैकात्म्यमेव स्यात्, तर्ह्येकसामग्रीवेद्यत्वमेव स्यात् । अतो भिन्नसामग्रीजन्यज्ञानवेद्यत्वादपि व्यतिरेकः प्रतीयत इत्यर्थः । "वेद्यते स तु" इत्येतदप्ययोगव्यवच्छेदमुखेन विधेयकोटौ निविशत इत्याह—न त्विति ॥ कुतो वेदनाभावस्य निषेध इत्याशङ्क्य तस्यार्थसत्तानिवृत्तिहेतुत्वादित्याह—येनेति ॥ "काव्यतत्त्वार्थभावनाविमुखानाम्" इत्यत्र काव्यस्य तत्त्वं काव्यमेव वा तत्त्वं तस्यार्थ इति विग्रहो मा ज्ञायि ; किं तु वाच्यस्य देहांशपातिनो व्यावृत्त्यर्थमात्मवाचितत्त्वशब्देनार्थस्येदं निरूपणमित्याह—तत्त्वभूत इति ॥ इह सर्वत्रार्थशब्दो नाभिधेयवचनः स्वशब्दाभिधेयत्व[त्वस्य] निरस्तत्वात् ; किं तु अर्थ्यते प्राधान्येनेत्यर्थः, वाच्यस्यार्थस्य तं प्रति सर्वथा पर्यवसानात् । स च यद्यपि मुख्यतया रसादिरेव, अत एवोक्तं मुनिना "काव्यार्थान् भावयन्ति" इति, तथापीह वस्त्वलंकारध्वन्योरपि वाच्यापेक्षयोत्कर्षः कियान् भवतीत्यभि-

१. क. ख. 'हि'
२. क. ख. 'च' नास्ति ।
३. ग. 'अस्यार्थः'
४. क. 'तत्' नास्ति ।
५. ग. 'वाचकरूप'
६. ङ. 'न' नास्ति ।
७. क. ख. ग. 'काव्यतत्त्व'

## ध्वन्यालोकः

स्वरूपपरिज्ञानादेव तत्प्रतीतिः स्यात् । अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थ[1]भावनाविमुखानां स्वरश्रुत्यादिलक्षण[2]मिवाप्रगीतानां[3] गान्धर्वलक्षणविदामगोचर एवासावर्थः ॥

## लोचनम्

योऽर्थस्तस्य भावना[4] वाच्यातिरेकेणानवरतं[5] चर्वणा तत्र विमुखानाम् । स्वराः षड्जादयः सप्त । श्रुतिर्नाम शब्दस्य वैलक्षण्यकारि[6] यद्रूपान्तरं तत्परिणामानां[7] स्वरतदन्तरालोभयभेदकल्पिता द्वाविंशतिविधा । आदिग्रहणेन[8] जात्यंशकग्रामरागभाषाविभाषान्तरभाषा[9]देशीमार्गा गृह्यन्ते । प्रकृष्टं गीतं येषां ते प्रगीताः ; गातुं वा प्रारब्धा इत्यादि[10]कर्मणि क्तः[11] ; प्रारम्भेण[12] चात्र फलपर्यन्तता[13] लक्ष्यते ॥

## कौमुदी

प्रायेणार्थत्वमुक्तम् । भावना नाम मानसो व्यापार आस्वादनादिपर्यायश्चर्वणेत्याह—**तस्य भावना चर्वणेति** ॥ वाच्यप्रतीयमानविवेकरहितानामपि संमुग्धदर्शिनां काव्यश्रवणसमनन्तरं तदर्थचर्वणा दृश्यत एवेति तद्विमुखत्वं कथमित्यत उक्तम्—**वच्यातिरेकेणेति** ॥ वाच्यात् पृथङ्निष्कृष्य प्रतीयमानांशगोचरा चर्वणा न सर्वेषाम्, कतिपयानामेव तु सेत्यर्थः । कदाचिद्वाच्यत्वातिरेकेण चर्वणेऽपि सति केषांचिद्वाच्यसंवलनकृतानास्वाद्यविशेषान्तरोपनिपातविनिपातविच्छिन्नप्रवृत्तिरेव सेत्याह—**अनवरतमिति** ॥ **षड्जादय इति** ॥ तदाह मुनिः—"षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा । पञ्चमो धैवतश्चैव निषादः सप्त ते स्वराः ॥" इति ॥

## उपलोचनम्

"अप्रगीतानाम्" इत्येव वृत्तौ पाठः समादरणीयः । प्रगीतानामित्यस्यैव लोचने विवरणात् तथैव पाठो भवेदिति न भ्रमितव्यम् । "प्रारम्भेण चात्र फलपर्यन्तता लक्ष्यते"

१. क. ख. 'काव्यार्थतत्त्व'
२. क. ख. 'श्रुत्यादिलक्षण'
३. क. ख. ग. 'प्रगीतानां'
४. घ. 'भावना च'
५. क. ख. ग. 'अनवरतचर्वणा'
६. क. ख. घ. ङ. च. 'ण्यमात्रकारि'
७. ग. 'तत्परिणामानाम्' नास्ति । घ. 'तत्परिमाणानाम्'
८. क. ख. 'आदिशब्देन' घ. 'आदिग्रहणेन' नास्ति ।
९. ग. 'जात्यंशतद्ग्रामरागभाषाभाषान्तरभागा'
१०. घ. 'इत्यादि' नास्ति ।
११. घ. च. 'क्तः' नास्ति ।
१२. घ. 'प्रारम्भे च'
१३. ग. 'पर्यन्तमालक्ष्यते'

ध्वन्यालोकः

एवं वाच्यव्यतिरेकिव्यङ्ग्यस्य[1] सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति प्रतिपादयति[2]—

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥ ८ ॥**

लोचनम्

**एवमिति** ॥ स्वरूपविषयभेदेन[3] भिन्नसामग्रीज्ञेयत्वेन चेत्यर्थः[4] । प्रत्यभिज्ञेयाविल्यर्हार्थे कृत्यः; सर्वो[5] हि तथा यतते इतयिता प्राधान्येन[6] लोकसिद्धत्वं[7] प्रमाणमुक्तम् ।

कौमुदी

एवमित्यनेन कारिकाद्वयप्रतिपादितेन[दितः] प्रकारोऽवमृश्यत इति दर्शयति—**स्वरूपविषयभेदेनेति** ॥ अनेन "प्रतीयमानम्" इति कारिकार्थः संगृहीतः ॥ **भिन्नसामग्रीज्ञेयत्वेन चेति** ॥ समनन्तरातीतकारिकार्थसंग्रहः । कृत्यप्रत्ययस्य प्राधान्यप्रतिपादनसमुचितमर्थमाह—**अर्हार्थे इति** ॥ एवमपि कथं प्राधान्यसिद्धिः तत्प्रमाणोपन्यासं विनेत्यत्राह—**सर्वो हीति** ॥ **तथेति** ॥ विशिष्टशब्दार्थबुभुत्साप्रका-

उपलोचनम्

इति लोचनकारोक्तिः प्रगीतपदस्य द्वितीयविवरणविषया । प्रथमविवरणे गीतस्य प्रकृष्टत्वं च अभ्यासपाटवोपगतगानकौशलरूपम् । एतदेव फलमभिप्रेतम् "फलपर्यन्तता" इत्यत्र । एवं प्रगीतपदार्थवर्णने स्वयमेव सुधियः नञर्थयोजनेन "अप्रगीतानाम्" इत्यस्य 'अभ्यासातिशयाधिगमनीयगानकौशलरहितानाम्' इति प्रकृतानुगुणमर्थं जानीयुरिति लोचनकाराणामभिसन्धिः ॥

"सर्वो हि तथा यतते इतीयता"—इति लोचनपाठः सर्वत्र दृश्यते । कौमुद्याञ्जने च स एव पाठः समादृतः । तथापि अत्र 'इति यता' इति पाठेन समधिकं प्रकृतानुगुण्यं भजमानेन भवितव्यमित्यभ्यूह्यते । 'यता' "प्रत्यभिज्ञेयौ" इत्यत्र दृश्यमानेन कृत्यप्रत्ययविशेषणेत्यर्थः ॥

१. ग. 'अर्थस्य' अधिकः ।
२. ग. 'प्रदर्शयति'
३. क. ख. 'स्वरूपभेदेन विषयभेदेन
४. घ. 'त्वेत्यर्थः'
५. क. ख. ग. 'अपि' अधिकः ।
६. क. ख. घ. 'प्राधान्ये'
७. क. ख. 'प्रसिद्धत्वम्' ग. 'प्रासि' ङ. 'सिद्धत्वम्'

## लोचनम्

नियोगार्थेन च कृत्येन शिक्षाक्रम उक्तः । प्रत्यभिज्ञेयशब्देनेदमाह—"काव्यं तु जातु जायेत कस्यचित् प्रतिभावतः" इति नयेन यद्यपि स्वयमस्यैतत् परिस्फुरति तथापीदमित्थमिति [3]विशेषतो निरूप्यमाणं सहस्रशाखीभवति । यथोक्तमस्मत्परमगुरुभिः श्रीमदुत्पलपादैः—

"तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।
[5]लोकस्यैष तथानवेक्षितगुणस्यात्मापि विश्वेश्वरो
नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥" इति ।

## कौमुदी

रेणेत्यर्थः ॥ **इयतेति** ॥ अर्हत्वाभिधानेनैवेत्यर्थः । शब्दार्थयोः प्रत्यभिज्ञानार्हत्वं सार्वजनीनप्रत्यभिजिज्ञासितत्वोपलम्भादवगम्यत इति तदर्हत्वोक्त्या तदितरवैलक्षण्येन प्राधान्यं लोकप्रसिद्धिप्रमाणात् प्रमीयत इत्यर्थः । न केवलमर्हार्थ एवायं कृत्यः, नियोगार्थोऽपीत्याह—**नियोगार्थेन चेति** ॥ नियोगार्थत्वे चास्य श्रोतृजनशिक्षाविशेषफलपर्यन्तत्वसिद्धिरित्याह—**शिक्षाक्रम उक्त इति** ॥ तर्हि 'यत्नतः प्रतिपत्तव्यौ' इति वक्तव्ये "प्रत्यभिज्ञेयौ" इति वदतः कोऽभिप्राय इत्यत्राह—**इदमाहेति** ॥ तुशब्दः शास्त्रादिभ्यो विशेषद्योतकः । कवेः कर्म काव्यम् । तमेव विशेषमाह—**जातु जायेत कस्यचिदिति** ॥ इह जन्मनि समनन्तरजन्मनि वा ततोऽपि दवीयसि वा कस्यचित् मनुष्याणां सहस्रेषु । कोऽसाविति चेत् **प्रतिभावत इति** ॥ न तु विपश्चितोऽपीत्यर्थः । तस्यापि कस्यचिदेव रसावेशविशदसुन्दरहृदयस्य न सर्वस्य प्रतिभावतोऽपि, एतत् काव्यतत्त्वं तथा ॥ **एतदिति** ॥ सामान्येनैवेति ॥ **सहस्रशाखीभवति** ॥ न पुनरेकरूपतया निर्धारयितुं पार्यत इत्यर्थः । ननु स्फुटतरपरिस्फुरणगोचरीभवतः कथमनवधारणीयत्वावधारणमित्यशङ्क्य तद्विषयलोकप्रसिद्धविषयनिदर्शनपरामभियुक्तोक्तिमुदाहरति—**यथोक्तमिति** ॥ भट्टेन्दुराजस्य साक्षात् स्वगुरोर्गुरवोऽमी इति परमगुरुत्वं प्रत्यभिज्ञाप्रस्थानप्रवर्तयितॄणामुत्पलदेवपादानाम् । यद्यपीयं श्रीमदीश्वरप्रत्यभिज्ञाशास्त्रान्ते सामान्यतोऽवगतस्यापि ईश्वरस्य विशेषावगममन्तरेण न फलपर्यन्तीभावलाभ इत्येतमर्थं निदर्शयितुं लोकप्रसिद्धतत्तादृशविषयप्रदर्शनपरोक्तिः, तथापि तुल्यविषयत्वात् प्रस्तुतार्थोपपादकतयात्रोदाहृता ॥ **तैस्तैरिति** ॥ कान्तोपनामविषय-

१. क. ख. 'अस्यैव तत्परिष्कारीति'
ग. 'अस्यैव तत्'
२. क. ख. ग. 'इति' अधिकः ।
३. घ. 'विशेषतो नि' नास्ति ।
४. क. ख. 'यदुक्तम्'
५. घ. ङ. च. 'लोकस्य...ज्ञोदिता' नास्ति ।
६. क. ख. 'गुणः स्वात्मापि'

ध्वन्यालोकः

स व्यङ्ग्योऽर्थस्तद्व्यक्तिसामर्थ्ययोगी[1] शब्दश्च कश्चन, न शब्दमात्रम्[2]। तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ। व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण ॥

लोचनम्

तेन ज्ञातस्यापि[3] विशेषतो निरूपणमनुसंधानात्मकमत्र[4] प्रत्यभिज्ञानम्। न तु तदेवेदमित्येतावन्मात्रम् ॥—महाकवेरिति ॥ यो महान् कविरहं[5] भूयासमित्याशास्ते[6]।

कौमुदी

प्रयत्नातिभारः सूचितः। तैस्तैर्देवोपयाचितक[तैस्तैरप्युपयाचितैः] दूतीसंप्रेषणात्मवृत्तान्तनिवेदनादिभिः उपचारपुरःसरैरनुनाथितैः उपनतोऽपीति संगतिः। न केवलमुपगत एव अन्तिके समीप एव स्थितोऽपि। अनेनानेकजननसमुचितपुण्यपरिपाकपरिप्रापितत्वं प्रतिभानस्य प्रत्यायितम्। अन्तिके स्थित इति विमलतरमणिमुकुरतलप्रतिफलद्रूपत्वम्। लोकसमान इत्यादिना परामर्शरूपप्रत्ययान्तरानुदये तस्य समग्रफलपर्यन्तपरिस्फुटतरावभासविषयत्वविरहः। ननु 'तदेवेदम्' इत्येवंरूपं हि प्रत्यभिज्ञानं सर्वत्र प्रसिद्धम्, इह तु विशेषतो निरूपणरूपं विज्ञानान्तरम् "प्रत्यभिज्ञेयौ" इति वाचोयुक्त्या विधित्सितमिति विधायकमिदं वचनमपेक्षितुं[तं] विधातुमसमर्थमित्याशङ्क्य प्रत्यभिज्ञाशब्दार्थं निष्कृष्य निदर्शयति—तेनेति ॥ यतो न प्राथमिकेन सामान्यावगाहिज्ञानमात्रेण फलपर्यन्ततत्सतत्त्वानुभवलाभः, विशेषावगमोद्भवे च तल्लाभः, ततो हेतोरित्यर्थः। विशेषतो निरूप्यते निश्चीयते येन तत्त्वं तादृशमनुसन्धानरूपं ज्ञानमिह प्रत्यभिज्ञापदेन जिघृक्षितमित्यर्थः। महाकवित्वनिर्वृत्तौ शिक्षानर्हत्वान्नियोगायोगमाशङ्क्याह—यो महानिति ॥ न कवित्वमात्रेण चरितार्थत्वम् "नाकवित्वमधर्माय मृतये दण्डनाय वा" इति उक्तदिशा। तेन विशिष्टं कवित्वमेवाशासनाविषय इत्युक्तम्—महान् कविरिति ॥ ननु ध्वनेरेव काव्यात्मत्वात्तस्यैव प्राधान्यमभिधेयम्; ध्वनिश्च व्युत्पत्तित्रयाश्रयेण शब्दार्थव्यापाराश्रयरूप इत्युक्तम्। इह तु

१. क. ख. 'तत्प्रकाशानसामर्थ्य-'
२. क. क. 'सर्वः'
३. घ. 'संज्ञात'
४. क. ख. घ. ङ. 'निरूपणानुसन्धान'
५. क. ख. 'महाकविरित्यहम्' ग. 'महाकविरहं'
६. ङ. च. 'आशंसते' घ. 'आशङ्कते'

## लोचनम्

एवं व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य शब्दस्य च प्राधान्यं वदता व्यङ्ग्यव्यञ्जकभावस्यापि प्राधान्य[1]मिति ध्वनति ध्वन्यते ध्वननमिति त्रितयम[2]प्युपपन्नमित्युक्तम् ॥

ननु प्रथमोपादी[3]यमानत्वाद्वाच्यवाचक[4]तद्भावस्यैव [5]प्राधान्यमित्याशङ्क्य[6] उपायानामेव प्रथममुपादानं भवतीत्यभिप्रायेण विरुद्धोऽयं [7]प्राधान्ये साध्ये हेतुरिति दर्शयति—

## कौमुदी

शब्दार्थयोरेव प्राधान्यमुक्तम् । अतस्तावेव ध्वनिः । न भावव्युत्पत्त्या ध्वननव्यापारोऽपि ध्वनिशब्दवाच्यः समर्थयितव्य इत्याशङ्क्य तत्प्राधान्यस्य शब्दार्थरूपध्वनिप्राधान्योक्तावनुक्तसिद्धत्वाददोष इत्याह—**एवमिति** ॥ व्यञ्जनव्यापारप्राधान्यस्य व्यङ्ग्यव्यञ्जकप्राधान्याभिधाननान्तरीयकसिद्धित्वादनभिधानमित्यर्थः ॥

"इदानीं व्यङ्ग्यव्यञ्जकयोः" इत्यादिना समनन्तरकारिकाया व्यङ्ग्यादिप्राधान्येऽपि वाच्यादेः प्रथमोपादानयुक्तत्वोक्तिपरत्वमुक्तम्, तत्र कुतोऽयमयुक्तत्वशङ्कावतारः, कथं वा तन्निरास इत्याशङ्क्य शङ्कामुन्मीलयति—**नन्विति** ॥ **वाच्यवाचकतद्भावस्येति** ॥ द्वन्द्वैकवद्भावः । वाच्यश्च, वाचकश्च, तद्भावः वाच्यवाचकभावश्चेति ; यद्धि प्रधानं तदेव प्रथममुपादातव्यम् । वाच्यादय एव प्रथममुपादीयन्ते, न व्यङ्ग्यादयः ; अतस्तेषामेव प्राधान्यं न्याय्यम् । विमतं वाच्यादिकमेव प्रधानं भवितुमर्हति, प्रथममुपादीयमानत्वात् ; संप्रतिपन्नवत् । व्यङ्ग्यादिप्राधान्ये तु दृश्यमानं प्रथमोपादानमयुक्तं स्यादित्यर्थः । उक्तशङ्कानिरासस्य कारिकायां वृत्तौ चानुद्भिन्नत्वादभिप्रायमाविष्करोति—**उपायानामिति** ॥ "उपायमातिष्ठति पूर्वमुच्चैरुपेयमाप्तुं जनता यथैव" इत्युक्तदिशा प्रथमोपादीयमानत्वं न प्राधान्यगमकम्, प्रत्युत स्वव्याप्तोपाय[स्वव्यापकोपाय]त्वावगमनद्वारेणाप्राधान्यमेव गमयेत् —इत्ययं हेतुः साध्यविपरीतव्याप्तत्वाद्विरोधो[विरुद्धो] नाम हेत्वाभास इत्यर्थः । आलोकशब्दोऽयं न करणव्युत्पत्त्या प्रकाशगुणवाचकः ; भावव्युत्पत्त्या चाक्षुषज्ञानवचन इत्याह—

१. क. ख. 'उक्तम्' अधिकः ।
२. ग. 'उपलक्षणम्'
३. क. ख. 'उपादेयमान'
४. ग. 'तत्' नास्ति ।
५. क. ख. 'किं न' अधिकः ।
६. घ. 'शङ्क्याह—उपाया'
७. घ. 'प्राधान्येन'

ध्वन्यालोकः

इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयः तदपि युक्तमेवेत्याह—

**आलोकार्थी यथा दीपशिखायां यत्नवान् जनः ।**
**तदुपायतया तद्वदर्थे[1] वाच्ये तदादृतः ॥ ९ ॥**

यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवान् जनो[2] भवति तदुपायतया—न हि दीपशिखामन्तरेणालोकः संभवति—तद्वद्व्यङ्ग्यमर्थं प्रत्यादृतो जनो वाच्येऽर्थे[3] यत्नवान् भवति । अनेन प्रतिपादकस्य कवेर्व्यङ्ग्यमर्थं[4] प्रति व्यापारो दर्शितः ॥

प्रतिपाद्यस्यापि तं दर्शयितुमाह—

**यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते ।**
**वाच्यार्थपूर्विका[5] तद्वत्प्रतिपत्तस्य[6] वस्तुनः ॥ १० ॥**

लोचनम्

**इदानीमित्यादिना** ॥ आलोकनमालोकः । वनितावदनारविन्दावलोकनमित्यर्थः[7] । तत्र चोपायो दीपशिखा ॥

प्रतिपदिति भावे क्विप् ॥ **तस्य वस्तुन इति** ॥ व्यङ्ग्यरूपस्य सारस्येत्यर्थः ।

कौमुदी

**आलोकनमालोक इति** ॥ तस्यार्थनीयता अर्थनीयवस्तुविषयत्वकृतेत्युक्तम्—**वनितेति** ॥ यस्मादेवमालोकनक्रियावचनत्वमालोकशब्दस्य नालोकाख्यगुणवाचकत्वम्, अतः तत्र दीपशिखाया उपायत्वं सङ्गतमेवेत्याह—**तत्र चेति** ॥ चशब्दः तुशब्दार्थे ॥ **भावे क्विबिति** ॥ प्रतिपादनक्रियावचन इत्यर्थः । तच्छब्देन प्रकृतो व्यङ्ग्यार्थो गृह्यते । "अन्यदेव वस्तु" इतिवदिहापि वस्तुशब्दः सारवचन इत्याह—**व्यङ्ग्यरूपस्येति** ॥ इह पदार्थवाक्यार्थसहोदरत्वं यद्वाच्यव्यङ्ग्यार्थप्रतिपत्त्योः दर्शितम्, तस्यान्यदपि प्रयोजनमस्तीति[ति दर्शयति]—**अनेनेति** ॥ आत्यन्तिकत्वं सहृदयभावस्य काष्ठाप्राप्तिः । एष

१. ग. 'अर्थो वाच्यो'
२. क. ख. 'जनः' नास्ति ।
३. ख. 'वाच्यार्थे'
४. क. ख. 'अर्थं' नास्ति ।
५. अ. 'वाक्यार्थ-'
६. क. ख. 'प्रतिपन्नस्य'
ग. 'प्रतिपत्तव्य-'
७. घ. '-द्याला-'
ङ. च. '-न्दालो-'

ध्वन्यालोकः

**यथा हि[1] पदार्थद्वारेण वाक्यार्थस्यावगमः तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः ॥**

**इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्यते[3] तथा दर्शयति—**

लोचनम्

अनेन श्लोकेनात्यन्तसहृदयो यो न भवति तस्यैव स्फुटसंवेद्यं[4] एष क्रमः ; यथा[5] अत्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यार्थक्रमः[6][7]। काष्ठाप्राप्तसहृदयभावस्य[8] तु[9] वाक्यवृत्तकुशलस्येव[10] सन्नपि[11] क्रमोऽभ्यस्तानुमानाविनाभावस्मृत्यादिवदसंवेद्य[12] इति दर्शितम्[13] ॥

**यथा न व्यालुप्यते[14] इति** ॥ प्राधान्यादेव हि[15] तत्पर्यन्तानुसरणरणरणकत्वरिता[16]

कौमुदी

इति वाच्यव्यङ्ग्यार्थनिष्ठः । तदीयाया बुद्धेरपरिचितविषयतया मन्दमन्दमेव सञ्चरणसम्भावनादन्तरान्तरा विश्रान्तिसम्भवादित्यर्थः । तत्र दृष्टान्तमाह—**यथेति** ॥ किमिति पुरुषविशेषनियतत्वेन क्रमपरिस्फुरणमुक्तम् ? सर्वस्यापि स क्रमो विद्यमानत्वादेव किं न प्रतीतिपथमारोहेदिति, नेत्याह—**काष्ठाप्राप्तेति** ॥ सतोऽपि क्रमस्यासंवेदनं दृष्टान्तोक्त्या निष्टङ्कयति—**अभ्यस्तेति** ॥

उत्तरकारिकायां सतोऽपि क्रमस्य[स्या]लक्षणमुक्तम् । तस्य कथं प्राधान्योपपादकत्वमित्याकाङ्क्षायामाह—**प्राधान्यादेव हीति** ॥ प्रकर्षेण प्रथमं वाधीयते निधीयतेऽस्मिन् बुद्धिरिति तत्प्रधानं तद्भावादेव हेतोः तत्पर्यन्तं प्रधानभूतप्रतीयमानपर्यन्तं यदनुसरणं बुद्धेरनुधावनं तद्विषयो रणरणक उत्कण्ठातिरेकः तेन त्वरिताः सन्तः अत एव मध्ये वाच्यप्रतीयमानयोरन्तराले विश्रान्तिं पदबन्धलाभं न कुर्वन्ति, तथा च का कथा क्रमपर्यालोचनायामित्यर्थः । प्राधान्ये तत्प्रतिपत्तौ हेतुरित्यर्थः ॥ **यथा न व्यालुप्यत इति** । किन्तु

१. क. ख. ग. 'हि' नास्ति ।
२. क. ख. 'वाक्यार्थाव'
३. ग. 'व्यालुप्येत'
४. क. ख. 'संवेद्यक्रमः' ग. घ. ङ. च. 'संवेद्य एव क्रमः'तं
५. च. 'तथा'
६. क. ख. ग. '-वाक्यक्रमः'
७. क. ख. ग. 'प्रतिपाद्यापि दर्शयितुमाह—इदानीमित्यादिना ॥' अधिकः ।
८. ङ. '-सहृदयस्य'
९. घ. 'तु' नास्ति ।
१०. क. ख. 'वाक्यार्थवृत्त-'
११. ग. 'असन्नपि'
१२. क. ख. 'अनुमान-' नास्ति ।
१३. क. ख. ग. घ. च. 'इति दर्शितम्' नास्ति ।
१४. क. ख. ग. 'व्यालुप्येत'
१५. क. ख. ग. 'हि' नास्ति
१६. क. ख. '-नुसरणत्वरिता' ग. 'प्राधान्यादेव रणरणिकत्वरितया' घ. ङ. 'सरणरणकत्वरिता'

ध्वन्यालोकः

स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन् ।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ ११ ॥

यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न विभाव्यते विभक्ततया—

लोचनम्

मध्ये विश्रान्तिं न कुर्वत इति क्रमस्य सतोऽप्यलक्षणं प्राधान्ये हेतुः ॥

स्वसामर्थ्यम् आकाङ्क्षायोग्यतासंनिधयः ॥ **विभाव्यत इति** ॥ विशब्देन विभक्ततोक्ता। विभक्ततया न भाव्यत इत्यर्थः। अनेन विद्यमान एव क्रमो न संवेद्यत इत्युक्तम्। तेन यत् स्फोटाभिप्रायेणासन्नेव क्रम इति व्याचक्षते तत् प्रत्युत विरुद्धमेव। वाच्येऽर्थे

कौमुदी

प्रत्युत प्रसिध्यतीत्यर्थः। पदार्थस्य वाक्यार्थप्रतिपादने किं सामर्थ्यमित्याकाङ्क्षायामाकाङ्क्षादिसहकारिसामर्थ्यमेव कार्योत्पत्तिहेतुत्वात् सामर्थ्यशब्देन गृह्यत इत्याह—**आकाङ्क्षेति** ॥ वाक्यार्थप्रतिपत्तावपि पदार्थप्रतिपत्तिदर्शनात् कथं न विभाव्यत इत्युक्तमित्यतो व्याचष्टे—**विभक्ततयेति** ॥ **अनेनेति** ॥ विभावनमात्रनिषेधेन वस्तुसत्ताया अनुज्ञानादित्यर्थः। कथं क्रमस्यासत्त्वं कार्यकारणयोः क्रमस्यावश्यंभावित्वादित्यत उक्तम्—**स्फोटाभिप्रायेणेति** ॥ अविभक्तरूपस्फोटवाक्यार्थपक्षानुसारेणेत्यर्थः ॥ **विरुद्धमेवेति** ॥ वाच्यातिरिक्तव्यङ्ग्यार्थासिद्धिश्चेत्यर्थः। कथं वाच्यार्थवैमुख्यं तत्प्रतीत्यनुदये प्रतीयमानार्थस्याप्रतीतिप्रसक्तेरित्यत आह—**विश्रान्तिनिबन्धनमिति** ॥ विश्रान्तिरेव निबन्धनं कारणं यस्य स तथा। एतद्विशेषणस्य फलमाह—**अनेनेति** ॥ सहृदयलक्षणप्रदर्शन-

१. क. ख. 'प्रथयन्नपि'
२. अ. 'पदार्थौ'
३. क. ख. 'सतोपलक्षणम्'
४. क. ख. 'इत्यर्थः'

ध्वन्यालोकः

**तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।**
**बुद्धौ तत्त्वार्थदर्शिन्यां [1]झटित्येवावभासते ॥ १२ ॥[2]**

लोचनम्

वि[3]मुखो विश्रान्तिनि[4]र्बन्धनं परितोषमलभमान आत्मा हृदयं येषामित्यनेन सचेतसामित्यस्यैवार्थोऽभिव्यक्त[5]ः । सहृदयानामेव तर्ह्ययं महिमास्तु, न[6] काव्यस्यासौ कश्चिदतिशय [7]इत्यत्राह[8]—**अवभासत इति** ॥ तेनात्र विभक्तता[9] न भासते । न[10] तु वाच्यस्यैव[11] सर्वथानवभासः । अत एव तृतीयोद्द्योते घटप्रदीपदृष्टान्तबलाद्व्यङ्ग्यप्रतीतिकालेऽपि वाच्यप्रतीतिर्न विघटत इति व[12]क्ष्यते तेन सह अस्य ग्रन्थस्य न विरोधः ॥

कौमुदी

परेणेत्यर्थः ॥ **अभिव्यक्त इति** ॥ य एवंविधास्त एव सचेतस इति । न वाच्यार्थवैमुख्यमात्रपरमिदम् अनुपयोगादित्यर्थः ॥ **तर्हीति** ॥ यद्युक्तलक्षणहृदयविशिष्टबुद्ध्युपाधिकमस्य झटित्येन स्फुरणं तर्ह्यन्वयव्यतिरेकाभ्यां तद्बुद्धेरेव तद्धेतुत्वादन्यत्रादृष्टचरत्वाच्च सहृदयानामेव लोकोत्तरः कश्चित् अतिशयोऽयं न काव्यस्येत्येवास्थीयताम्; सत्यपि काव्यव्यापारे तथाविधसहृदयबुद्धिगोचरीभावाभावे तददर्शनादित्यर्थः । काव्यश्रवणसमयसमनन्तरसमासाद्यमानजन्मनस्तदवभासस्य कार्यस्य परिस्फुटोपलब्धस्य काव्यव्यापारैकनिबन्धनत्वनिश्चयादिति भावः । इत्थं श्लोकद्वयं व्याख्याय तथा व्याख्याने फलमाह—**तेनेति** ॥ अत्र वाच्यार्थे विभक्तता व्यङ्ग्यार्थापेक्षया पृथक्त्वम्; विभक्तत्वस्य केवलमनवभासनम्, न सर्वथैवेति स्वरूपेणापीति यावत् ॥ **अत एवेति** ॥ यत एवमेतद्व्याख्यातमत एवेत्यर्थः । वाच्यस्य स्वरूपतोऽवभासाङ्गीकरणाद्विभागमात्रस्यानवभासाङ्गीकाराच्चेत्यभिप्रायः ॥ **न विरोध इति** ॥ इतरथा विरोधः स्यादेवेत्यर्थः ॥

१. ख. 'झगित्येव'
२. क. ख. 'यत्रावभासते' अधिकः ।
३. ङ. 'विमुखी'
४. घ. 'न्धनपरि'
५. क. ख. 'विभक्तः'
६. क. ख. ग. 'तु' अधिकः ।
७. क. ख. 'इत्याशङ्क्याह—यत्रावभासत इति'
८. ग. 'आह' नास्ति ।
९. ग. 'विभक्ततया'
१०. ग. 'ननु' ङ. 'न च'
११. घ. ङ. च. 'वाच्यस्य सर्वथैव'
१२. क. ख. 'वक्ष्यति'

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥**

लोचनम्

**सद्भावमिति** ॥ सत्तां साधुभावं प्राधान्यं चेत्यर्थः । द्वयं हि प्रतिपिपादयिषितम् । [1]**प्रकृत इति** ॥ लक्षणे ॥ **उपयोजयन्निति** ॥ उपयोगं गमयन् । "तमर्थम्" इति चायमुपयोगः । स्वशब्द आत्मवाची । [2]स्वं चार्थश्च स्वार्थौ । तौ[3] गुणी[4]कृतौ याभ्याम् यथासंख्येन तेनार्थो गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः ॥ **तमर्थमिति** ॥

कौमुदी

ननु ध्वनेरेव[रिव]प्राधान्यस्यापि प्रतिपादितत्वात् कथं वृत्तौ सद्भावमात्रस्य प्रतिपादितत्वोक्तिरित्याशङ्क्य "सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते" इत्युक्तत्वात् साधुत्वस्य प्राधान्यलक्षणस्य च सच्छब्देन संग्रहान्न दोष इत्याह—**सत्तामिति** ॥ अर्थद्वयवाचित्वाङ्गीकारेण व्याख्याने हेतुमाह—**द्वयं हीति** ॥ वृत्तौ प्रकृतशब्दो ध्वनिलक्षणविषयः, अन्यस्य प्रकृतस्याभावादित्याह—**लक्षण इति** ॥ उपोपसृष्टस्य युजिधातोः सम्बन्धमात्रातिरिक्तार्थवाचकत्वमङ्गीकृत्याह—**उपयोगं गमयन्निति** ॥ ननु सत्ताप्राधान्ययोः लक्षणोपयोगगमकं पदं लक्षणवाक्ये नावगम्यत इत्याशङ्क्य प्रस्तुतपरामर्शिना तच्छब्देनार्थसमानाधिकरणेन लक्षणविनिवेशावगमाददोष इत्याह—**तमर्थमिति** ॥ शब्दस्य स्वार्थसंभवेऽप्यर्थस्य तदभावात् कथमुपसर्जनस्वार्थत्वमर्थस्येत्यत आह—**स्वशब्द इति** ॥ तथापि कथं स्वशब्दस्यार्थशब्देन संबन्ध इत्यत उक्तम्—**स्वश्चार्थश्चेति** ॥ उपसर्जनीकृतेत्यस्य व्याख्या गुणीकृताविति । याभ्याम् अर्थशब्दाभ्याम् । केन कस्य गुणीकरणमित्यत उक्तम्—**यथासंख्येनेति** ॥ एवं सति पर्यवसितमर्थमाह—**तेनेति** ॥ यत एवमर्थशब्दयोः स्वार्थकर्मकं गुणीकरणं क्रमेण तेनेत्यर्थः । अर्थशब्दस्यात्र न व्यङ्ग्यवचनत्वमिति

१. क. ख. 'पूर्वं प्रकृते'
२. क. ख. 'स्वश्चासौ अर्थश्च तौ'
३. क. ख. 'तौ गुणीकृतौ' नास्ति ।
४. ग. 'भूतौ'

## लोचनम्

"सरस्वती स्वादु तदर्थवस्तु" इति यदुक्तम्[1]। "व्यङ्क्तः"[2] इति द्विवचनेनेदमाह[3]—यद्यप्य[4]-विवक्षितवाच्ये शब्द एव व्यञ्जकः, तथाप्यर्थस्यापि सहकारिता न त्रुट्यति ; अन्यथा-ज्ञातार्थो[5]ऽपि शब्दस्तद्व्यञ्जकः स्यात् ; विवक्षितान्यपरवाच्ये च[6] शब्दस्यापि सहकारित्वं भवत्येव। विशिष्टशब्दाभिधेयतयाँ[7] विना तस्यार्थस्याव्यञ्जकत्वात्—इति सर्वत्र शब्दार्थयो-रुभयोरपि ध्वननं[8] व्यापारः। तेन यद्भट्टनायकेन द्विवचनं दूषितं तद्गजनिमीलिकयैव। "अर्थः शब्दो वा" इति तु विकल्पाभिधानं प्राधान्याभिप्रायेण। काव्यं च तद्विशेष-

## कौमुदी

वक्तुमभिधेयेति वचनम्। तर्हि "तमर्थम्" इत्यत्राप्यर्थवचनत्वं स्यात् तदर्थमाह—**सरस्वतीति** ॥ **यदुक्तमिति** ॥ वस्तुतत्त्वं तदर्थशब्देनोक्तमिति शेषः। नन्वर्थशब्दयोः प्रत्येकमेवान्यानपेक्षया व्यञ्जनलक्षणस्वकार्यनिर्वर्तनसमर्थतयोपगमात् समुच्चयसमुच्चितस्य व्यङ्क्त इति द्विवचनप्रयोगस्यानुपपत्तिमाशङ्क्य तदभिप्रायमाह—**द्विवचनेनेदमाहेति** ॥ यत्र शब्दस्य प्राधान्येन व्यञ्जकत्वं तादृशं स्थलं दर्शितम्—**अविवक्षितवाच्य इति** ॥ **शब्द एवेति** ॥ प्राधान्येनेति शेषः। सहकारित्वानपाये हेतुमाह—**अन्यथेति** ॥ अर्थस्य तद्रूपकारकत्वाभावे सतीत्यर्थः। यत्रार्थस्यैव व्यञ्जकत्वं तदुदाहरति—**विवक्षितान्य-परवाच्य इति** ॥ शब्दस्य सहकारित्वे हेतुमाह—**विशिष्टेति** ॥ वैशिष्ट्यं गुणालं-कारोपस्कृतत्वम् ॥ **उभयोरपीति** ॥ गुणप्रधानभावेनान्योन्यसहकारितयोभयोरपि शब्दार्थयोः समुच्चयेन व्यञ्जनकर्तृत्वाद्द्विवचनमुपपद्यत इत्यर्थः। एवं द्विवचनाभिप्रायमुक्त्वा तदनभिज्ञतया यद्दूषणं कैश्चिदुद्भावितं तन्निरवकाशमित्याह—**तेनेति** ॥ ननूभयोरपि व्यञ्जकत्वेऽर्थः शब्दो वेति विकल्पानुपपत्तिरित्याशङ्क्याह—**अर्थः शब्दो वेति त्विति** ॥ यत्र यस्य प्राधान्यं तत्र तस्यैव कर्तृत्वम्, इतरस्य कथञ्चिदनु-यायित्वमात्रमिति कृत्वा विकल्पार्थो वाशब्द इत्यर्थः। काव्यविशेषस्य ध्वनित्वे काव्यस्य

१. घ. 'स्वस्वेति' अधिकः।
२. क. ख. 'व्यङ्क्तः द्योतयतः' अधिकः।
३. घ. 'इत्थम्'
४. च. 'यद्यपि विव'
५. क. ख. ग. 'ज्ञातोऽपि'
६. घ. 'च' नास्ति।
७. ङ. '-यता'
८. ग. 'ध्वननव्या-'

लोचनम्

श्चासौ, काव्यस्य वा विशेषः। काव्यग्रहणाद्गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम्[2]। तेनैतन्निरवकाशम्[3]—श्रुतार्थापत्तावपि[1] ध्वनिव्यवहारः स्यादिति। यच्चोक्तम्—'चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात्' इति तदङ्गीकुर्म एव। नाम्नि[4] खल्वयं[5] विवाद इति। यच्चोक्तम्[6]—'चारुणः प्रतीतिर्यदि काव्यात्मा प्रत्यक्षादिप्रमाणा-

कौमुदी

ध्वनित्वं न स्यादिति कर्मधारयसमासाश्रयणम्। विशिष्यते व्यवच्छिद्यत इति विशेषः। शास्त्रादिभ्यश्च व्यवच्छेदो विवक्षितः। इदानीं प्रयोजनान्तराभिधित्सया विग्रहान्तरं दर्शयति—**काव्यस्य वेति**॥ इह विशिनष्टीति विशेषः, तेन चात्मरूपत्वमासूत्रितम्। उक्तं हि प्राक् "विशेषहेतुत्वादात्मा इति व्यवस्थाप्यते" इति। काव्यपदेन विशेषणे प्रयोजनमाह—**काव्यग्रहणादिति**॥ यो ध्वनिलक्षण आत्मा स गुणालंकारोपस्कृतशब्दार्थ-पृष्ठपाती सन्नेव ध्वनिव्यवहारगोचर इति योजना। काव्यविशेषपदस्यैवमर्थत्वे सति परपर्यनुयोगपरिहारः फलिष्यतीत्याह—**तेनैतदिति**॥ यस्माद्गुणाद्युपस्कृत-शब्दार्थपृष्ठपातिनो ध्वनिव्यपदेशस्तेन हेतुनेत्यर्थः। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुते यद्रात्रिभोजनं गम्यते तत्रापि ध्वनिव्यवहारः स्यात्, वाच्यार्थसामर्थ्याक्षेपेण अर्थान्तर-स्यापि तत्र प्रतीतिः स्यात्—इति यच्चोक्तं तत् रात्रिभोजनार्थस्य कथितविशेषवत्त्वाभावेन निरवकाशमित्यर्थः। आक्षेपान्तरमनुभाष्य दूषयति—**यच्चोक्तमिति**॥ यदि चारुत्वहेतुतया प्रसिद्धेभ्यो गुणादिभ्योऽन्यः काव्यात्मा स्यात् तर्हि पारि-शेष्याच्चारुत्वप्रतीतिरेव तदात्मास्तु तस्यादृष्टत्वात्, तत्परित्यागेनादृष्टवस्त्वन्तरपरिकल्पना-गौरवादिति तदतिरिक्तो न ध्वनिरित्याक्षेपः। कुतोऽङ्गीकार इत्यत उक्तम्—**नाम्नीति**॥ खलुरवधारणे। गुणादिव्यतिरिक्तस्य काव्यजीवितत्वेन कस्यचिद्वस्तुनो भवताप्यङ्गीकृतत्वात्; एतावतैव सिद्धमनोरथाः संवृत्ताः स्म इत्यर्थः। चारुत्वप्रतीतिरेव गुणादिजन्यचारुत्वप्रतीतिविलक्षणा समुद्भवन्ती निरालम्बनज्ञानानुत्पत्तेः तत्तादृशम् आलम्बनं बलादुपस्थापयतीति भावः। पुनरप्याक्षेपान्तरम् अनुभाषते—**यच्चोक्तमिति**॥

१. घ. 'वस्तुः शब्दा-'
२. घ. 'उच्यते'
३. क. ख. 'तेन नैत-'
४. क. ख. ग. 'नास्ति'
५. घ. 'अयं' नास्ति।
६. क. ख. ग. 'यथोक्त'

ध्वन्यालोकः

यत्रार्थो वाच्यविशेषः वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति । अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनु-

लोचनम्

दपि सा भवन्ती तथा स्यात्' इति, तत्र शब्दार्थमयकाव्यात्माभिधानप्रस्तावे क एष प्रसङ्ग इति न किंचिदेतत् ॥

स इति ॥ अर्थो वा, व्यापारो वा ; अर्थोऽपि वाच्यो वा ध्वनतीति ; शब्दोऽप्येवम् ; व्यङ्ग्यो वा ध्वन्यत इति ; व्यापारो वा शब्दार्थयोर्ध्वननमिति । कारिकया तु प्राधान्येन समुदाय एव काव्यरूपो मुख्यतया ध्वनिरिति

कौमुदी

तथेति ॥ काव्यात्मत्वेन ॥ तत्रेति ॥ तस्मिन्नाक्षेपे विषय इत्यर्थः । शब्दार्थमयकाव्यजीवित-निरूपणप्रकरणे हि शब्दगम्यस्यैवात्मत्वसंभावना नान्यप्रमाणगम्यस्येति प्रकरणबलादेव दूरनिरस्तोऽयमनिष्टप्रसङ्ग इत्यर्थः । उपसंहरति—नेति ॥

ननु स काव्यविशेषो ध्वनिरिति कस्येदं ध्वनिसंज्ञितत्वाभिधानमिति न जानीमः ; काव्यस्य शब्दार्थव्यापारात्मकत्वेन बहूनां संभवादन्यतमस्यैव ध्वनिव्यपदेशकरणे काव्यविशेष-रूपत्वाभावप्रसक्तिः[क्तेः], अनेकार्थत्वस्यान्याय्यत्वाच्च—इत्याशङ्क्य प्रागुक्तव्युत्पत्त्यनुसारेण सर्वेषामेवामीषां ध्वनित्वम् ; अपि शान्ति[अविश्रान्ति]मदनेकार्थत्वस्य व्युत्पत्तिभेदाङ्गीकारे सत्यदोषत्वादित्याह—अर्थो वेत्यादि ॥ अर्थो वा ध्वनिरित्येवं सर्वत्र द्रष्टव्यम् । अर्थो हि द्वि-विधः, वाच्यो व्यङ्ग्यश्च । तत्र वाच्यस्य ध्वनिशब्दवाच्यत्वं व्युत्पत्त्या दर्शयति—अर्थोऽपी-ति ॥ वाच्यो वा ध्वनतीति ॥ ध्वनिरित्यनुषङ्गः ॥ एवमिति ॥ ध्वनतीति ध्वनिरिति । एवं शब्दवाच्यव्यङ्ग्यव्यापाराणां चतुर्णां ध्वनित्वमुपपादितम् ; तथापि "स ध्वनिः" इति ध्वनि-संज्ञितत्वेन कारिकायाम् एषामन्यतमोऽर्थः अन्यो वा निर्दिष्ट इत्यपेक्षायामाह—कारिकया त्विति ॥ मुख्यतयेति ॥ इतरेषाममुख्यतयैव ध्वनित्वमित्यर्थः । मुख्यत्वे हेतुः—प्राधान्येनेति ॥ समुदायिनां समुदायांशरूपतया तदन्तर्भावादंशिरूपस्य तस्यैव प्राधान्यात् मुख्यतया तस्यैव ध्वनित्वम्, इतरेषाम् अप्राधान्यादमुख्यत्वमित्यर्थः । कथं ध्वनेर्गुणादिभ्यो

१. क. 'वाचकविशेषः' नास्ति ।
२. ग. घ. 'काव्याभिधान'
३. क. ख. ग. 'वाच्यरूपमुखतया'

ध्वन्यालोकः

प्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम् । यदप्युक्तम् 'प्रसिद्ध-प्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति' इति, तदप्ययुक्तम् । यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये तु परीक्ष्यमाणे स एव

लोचनम्

प्रतिपादितम्[1] ॥ विभक्त इति ॥ गुणालङ्काराणां वाच्यवाचकभावप्राणत्वात् अस्य च तदन्यव्यङ्ग्यव्यञ्जकभावसारत्वान्नास्य तेष्वन्तर्भाव इति । अनन्यत्रभावो[2] विषयर्थः । एवं[3] 'तद्व्यतिरिक्तः कोऽयं ध्वनिः' इति निराकृतम् ॥ लक्षणकृतामेवेति ॥ लक्षणकारा[4]प्रसिद्धता विरुद्धो[5] हेतुः । तत एव हि यत्नेन लक्षणीयता । लक्ष्ये[6] त्वप्रसिद्धत्व-

कौमुदी

विभक्तविषयत्वमित्यत आह—गुणालङ्काराणामिति ॥ शब्दार्थतत्संघटनाश्रया हि गुणालंकारा इत्युक्तम्; अतस्ते वाच्यवाचकभावोपजीविन एव; ध्वनिस्तु व्यङ्ग्यव्यञ्जकभावाश्रय इति भिन्नविषयत्वमित्यर्थः । नन्विह विषयस्य विभक्तत्वमुक्तम्, आश्रयविभागस्तु न दर्शित इति किं केन संगतमित्यत उक्तम्— अनन्यत्रेति ॥ 'ननु गुणादिव्यतिरेकेण ध्वनिर्नाम न कश्चित्' इत्येवमभाववादेषु जाग्रत्सु कथमिह ध्वनिलक्षणनिर्वाह इत्याशङ्क्य अस्यैव लक्षणस्य तत्क्षेपेऽपि सामर्थ्यमस्त्विति दर्शयन्नाद्याभाववादनिरासे तात्पर्यमाह—एवमिति ॥ अथवा "यदप्युक्तम्" इत्यादिना द्वितीयाभावदूषणाभिधानात् "अप्रतिषिद्धमनुमतं भवति" इति न्यायेन प्रथमाभाववादस्यानुमतत्वं प्रतिभायात्; तद्व्यावृत्त्यर्थं तस्य वृत्तिकृतोक्ताभिप्रायेण निरस्तत्वमाह—एवमिति ॥ निर्दोषलक्षणकथनमुखेन तत्स्वरूपसद्भावस्य समर्पितत्वात् । किं लक्षणकृतामप्रसिद्धत्वादलक्षणीयत्वम्? लक्ष्येष्वप्रसिद्धत्वात्? आद्ये विरुद्धो हेतुरित्याह—लक्षणकारेति ॥ तत[तत्] एवोपपादयति—तत एव हीति ॥ लक्षणीयत्वे सति लक्षणकाराप्रसिद्धत्वं लक्षणीयत्वमेवापादयतीति साध्यविपरीतेन लक्षणीयत्वेन व्याप्तत्वाद्विरुद्धोऽयं हेतुरित्यर्थः । द्वितीये त्वसिद्धत्वमित्याह—लक्ष्ये त्विति ॥ यदुक्तमभाव-

१. ग. घ. '-दितः'
२. क. ख. ग. च. 'अन्यत्र'
३. क. ख. 'एवं' नास्ति।
४. क. ख. ग. '-कारप्रसि-'
५. घ. 'त्वाविरोधो'
६. क. ख. ग. 'लक्ष्यत्व-'

ध्वन्यालोकः

सहृदयाह्लादकारि[1] काव्यतत्त्वम् ; ततोऽन्यच्चित्रमेव[2]ेत्यग्रे दर्शयिष्यामः । यदप्युक्तम्[3] 'कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिप्रकारेष्वन्तर्भावः' इति, तदप्यसमीचीनम् । [4]वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण

लोचनम्

मसिद्धो हेतुः । यच्च[5] नृत्तगीतहास्या[6][7]दिकल्पं तत् काव्यस्य[8] न किंचित् ॥ **चित्रमिति** ॥ विस्मयकृद्वृत्तादिवशात्[9], न तु सहृदयाभिलषणीय[10]चमत्कारसाररसनिःष्यन्दमयमित्यर्थः[11] । काव्यानुकारित्वाद्वा[12] चित्रम्, आलेख्यमात्रत्वाद्वा[13], कलामात्रत्वाद्वा ॥ **अग्र इति** ॥

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते[14] ।
द्विधा काव्ये[15] ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥"

कौमुदी

वादिभिः गुणादिव्यतिरिक्तस्य तस्य वस्तुनो नृत्तगीतादिप्रायत्वमेवेति न भवदभिमतध्वनिवस्तुसिद्धिरिति तद्दूषयति—**यच्चेति** ॥ कविव्यापारगोचरत्वाभावान्न तस्य काव्यत्वमिति काव्यपदेनैव तद्व्यवच्छेदान्न तदुद्भावनावकाश इत्यर्थः । चित्रशब्दस्यार्थान्तरे प्रसिद्धत्वात् कथं काव्यवाचकत्वमित्याशङ्क्य 'अहो चित्रम्' इत्यादिवद्विस्मयकारित्वगुणयोगादयं व्यपदेश इत्याह—**विस्मयकृदिति** ॥ विस्मयकृत्त्वं ध्वनेरप्यस्तीति परिसंख्यानार्थतामभिप्रेत्याह—**वृत्तादिवशादिति** ॥ आदिशब्देनानुप्रासादिसंग्रहः । विस्मयकार्येवेत्यत्र व्यवच्छेद्यमाह—**न त्विति** ॥ लोकप्रसिद्धचित्रद्रव्यगुणयोगाद्वा चित्रत्वमित्याह ; विष्ण्वाद्यनुकाररूपत्वम्, आलेख्यमात्रत्वम्, कलारूपत्वं च चित्राणाम् ; तद्योगात् काव्ये चित्रशब्दप्रवृत्तिरित्यर्थः । क्रमेणात्र काव्याभासत्वम्, निःसारत्वम्, अकृत्स्नत्वं चोक्तम् । उत्तानदर्शिनामाश्चर्य-

१. क. ख. 'सहृदयाह्लादि काव्यम्'
२. क. ख. 'एव' नास्ति ।
३. ग. 'उदितम्'
४. ग. 'अपि' अधिकः ।
५. क. ख. 'यतः' अधिकः ।
६. क. ख. ग. ङ. च. 'न च'
७. ग. 'हास्य' नास्ति ।
घ. 'गीतवाद्या-'
८. क. ख. ग. 'वा क्वापि' अधिकः ।
९. क. ख. 'वृत्त्यादि'
१०. ङ. 'सहृदयहृदया-'
११. ङ. 'मानं'
१२. ग. ङ. च. '-कारकारि-'
१३. क. ख. ग. 'लेख्य'
१४. क. ख. घ. ङ. च. 'व्यवस्थितं'
१५. क. ख. घ. ङ. च. 'काव्यं ततो'
ग. 'काव्येऽन्ततो'

ध्वन्यालोकः

व्यवस्थितस्य ध्वनेः कथमन्तर्भावः ? वाच्यवाचकचारुत्वहेतवो हि[1] तस्याङ्गभूताः, न तु अङ्गि[2]रूपा एवेति प्रतिपादयिष्यमाणत्वात् । परिकरश्लोकश्चात्र—

व्यङ्ग्यव्यञ्जकसंबन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ॥

ननु यत्र प्रतीयमानस्या[3]र्थस्य वैशद्येनाप्रतीतिः स नाम मा भूद्ध्वने-

लोचनम्

इति तृतीयोद्द्योते वक्ष्यते[4] । परिकरार्थं कारिकार्थ[5]स्याधिकावापं कर्तुं श्लोकः परिकरश्लोकः ॥ यत्रेति[6] ॥ अलङ्कारे ॥ वैशद्येनेति ॥ चारुतया स्फुटतया चेत्यर्थः ॥ अभिहितमिति[7] ॥ भूतप्रयोगः, आदौ "व्यङ्क्तः" इत्यस्य व्याख्यातत्वात् ॥ गुणीकृतात्मेति ॥ आत्मे-

कौमुदी

बुद्धिजनकत्वं तु प्रागुक्तमिति विशेषः । अत एवात्र वाशब्दाः समुच्चयार्था एव न विकल्पार्थाः । परिकरस्य सापेक्षत्वात् कस्येत्यपेक्षायामुक्तम्—कारिकार्थस्येति ॥ परिकरार्थमित्येतत् विवृतम्—अधिकावापं कर्तुमिति ॥ कारिकायामनुक्तस्याधिकस्यापेक्षितस्यावापः प्रक्षेपः, तं कर्तुम् । 'यत्र' इति सामान्यवाचिनोऽप्यलङ्कारान्तर्भावस्य शङ्किष्यमाणत्वात् प्रकरणबलादलङ्कारविषयत्वं गम्यत इत्याह—अलंकार इति ॥ विशदशब्दस्य चारुत्वस्फुटत्वविषयप्रयोगदर्शनादुभयस्य चेह संभवादुभयार्थत्वमित्यर्थः । इदानीमेव कारिकाया व्याख्यायमानत्वात् कथम् "अभिहितम्" इति भूतप्रयोग इत्याशङ्क्य उत्तरपदस्य प्राग्व्याख्यातत्वापेक्षया तदुपपत्तिमाह—भूतप्रयोग इति ॥ यत् प्राक् स्वयं व्याख्यातम् "स्वशब्द आत्मवाची" इति तद्वृत्तौ "गुणीकृतात्मा" इतीह व्याख्यानस्यानुगतस्यापेक्षणादेवेत्याशयेनाह—आत्मेत्यनेनेति ॥ 'अर्थो गुणीभूतः' इति वक्तव्ये "गुणीकृतात्मा" इति वचनं स्वशब्दव्याख्यानाभिप्रायमित्यर्थः । समासोक्त्यादिषु

१. क. ख. 'हि' नास्ति ।
२. क. ख. 'तदेक-'
३. ग. 'अपि' अधिकः ।
४. क. ख. 'वक्ष्यति'
५. घ. 'कारिकार्थ' अधिकः ।
६. ङ. 'यत्रेति काव्येऽलंकारे'
७. घ. 'त इति'

ध्वन्यालोकः

विषयः । यत्र तु प्रतीतिरस्ति यथा समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्ति-पर्यायोक्तापह्नुति[1]दीपकसङ्करालङ्कारादौ[2] तत्र[3] ध्वनेरन्तर्भावो भविष्यतीत्यादि निराकर्तुमभिहितम् "उपसर्जनीकृतस्वार्थौ" इति । अर्थो गुणीकृतात्मा, गुणीकृताभिधेयश्च शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति । तेषु कथं तस्यान्तर्भावः ? व्यङ्ग्यप्राधान्ये हि ध्वनिः । न चैतत् समासोक्त्यादिष्वस्ति । समासोक्तौ तावत्—

लोचनम्

त्यनेन स्वशब्दस्यार्थो व्याख्यातः ॥ न चैतदिति ॥ व्यङ्ग्यस्य[4] प्राधान्यम् । प्राधान्यं च ज्ञप्तौ[5] यद्यपि न चकास्ति "बुद्धौ तत्त्वावभासिन्याम्" इति तु[6] नयेन[7] अखण्डचर्वणा[8]-विश्रान्तेः, तथापि विवेचकैर्जीवितान्वेषणे क्रियमाणे यदा[9] व्यङ्ग्योऽर्थः पुनरपि वाच्यमेव

कौमुदी

व्यङ्ग्यप्राधान्याभावोक्तिर्वृत्तौ न काव्यश्रवणसमनन्तरभाविकाव्यार्थप्रतिपत्तिसमयभावि-प्रतीत्यपेक्षा, किन्तु तदनन्तरावतारिवाच्यव्यङ्ग्यगुणप्रधानभावविवेकावस्थासंवेदन-विषयीभावापेक्षैवेति दर्शयितुम् "तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् । बुद्धौ तत्त्वावभासिन्यां झटित्येवावभासते ॥" इत्युक्तदिशा प्रथमं व्यङ्ग्यार्थचर्वणायां झटिति विश्रान्त्युत्पत्तेः वाच्यार्थगतत्वेन व्यङ्ग्यार्थगतत्वेन[त्वेन वा] प्राधान्यस्य स्फुरणाभावान्न समासोक्त्यादौ व्यङ्ग्यप्राधान्याभावोऽध्यवसातुं पार्यत इति शङ्कामनुवदति—**प्राधान्यं चेति** ॥ ज्ञप्तौ काव्यार्थप्रतिपत्तिदशायामित्यर्थः ॥ **न चकास्तीति** ॥ स्वरूपत एवार्थस्फुरणेऽसति कुतस्तस्य व्यङ्ग्यनिष्ठतयाभावावधारणप्रसङ्ग इति भावः । समाधत्ते—**तथापीति** ॥ **विवेचकैरिति** ॥ चर्वणानिर्वृतिभूमेरुत्थाय विवेकपदवीमधितिष्ठद्भिरित्यर्थः । यद्यपि

१. ग. 'पर्यायापह्नुति'
२. ग. 'संकरादौ'
३. ग. 'तत्र तत्र'
४. ङ. 'व्यङ्ग्यप्राधान्यम्'
५. ग. 'यद्यपि ज्ञप्तौ'
६. क. ख. 'तु' नास्ति ।
७. ङ. 'न्यायेन'
८. क. ख. ग. 'चर्वण'
९. ग 'यथा'

## लोचनम्

अनुप्राणयन्नास्ते तदा तदुपकरणत्वादेव तस्यालङ्कारता, यतो वाच्यादेव तदुपस्कृता[1]-चमत्कारलाभ इति। यद्यपि पर्यन्ते रसध्वनिरस्ति तथापि मध्यकक्ष्या[2][3]निविष्टोऽसौ व्यङ्ग्योऽर्थो न रसोन्मुखीभवति स्वातन्त्र्येण, अपि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्यतोक्ता[4]॥

## कौमुदी

प्रतीतिसमये प्राधान्यं न स्फुरणगोचरः प्रत्युत व्यङ्ग्यार्थनिष्ठतयैव प्रतीतिस्वभावानुसृत्या तदवभासः, तथापि यौक्तिक्या बुद्ध्या गुणप्रधानविवेचनवेलायां प्रवृत्तायां प्राधान्याप्राधान्यमध्यस्थतया प्राधान्येन वा प्राक् प्रतीयमानोऽपि व्यङ्ग्यार्थो वाच्यानुप्राणकतया अवतिष्ठमानश्चेद्व्यवस्थाप्येत, तदा तस्यालङ्कारत्वं बलादापद्यमानं न निवारयितुं शक्यमिति समासोक्त्यादिषु व्यङ्ग्यप्राधान्याभावो विवेकदृष्ट्यपेक्षया वृत्तिकृतोक्त इति न विरोध इत्यर्थः॥ तदुपस्कृतादिति॥ व्यङ्ग्यार्थोपस्कृतादित्यर्थः॥ **वाच्यादेवेति**॥ न व्यङ्ग्यार्थात्। ननु वाच्यमुखेनापि व्यङ्ग्यस्य रसध्वनिपर्यन्तत्वान्न प्राधान्यहानिः, वाच्यस्य तत्र विभावीभावेन रसनिःष्यन्दितया तत्र रसध्वनेरभ्युपगमाद्वाच्यस्य तदुपस्करणमहिम्नैव चमत्कारकारित्वादिति शङ्कामनूद्य परिहरति—**यद्यपीति**॥ **मध्यकक्ष्यानिविष्ट इति**॥ पूर्वोत्तरभूतवाच्यरसध्वनिकक्ष्याद्वयोपजीवनेयमुक्तिः। समासोक्त्यादिषु पूर्वं वाच्यकक्ष्या; तदनन्तरं वस्तुव्यङ्ग्यकक्ष्या; तदनन्तरमन्त्या रसध्वनिकक्ष्येति स्थितिः। तत्र मध्यकक्ष्यानिवेशिनो व्यङ्ग्यस्यार्वाचीनकक्ष्याध्यासिवाच्यार्थाभिमुख्यपुरःसर एवोत्तरकक्ष्याधिरोहि रसोन्मुखीभावः; न साक्षादेव; निम्नदेशनिपातुकनिर्झरनीरप्रवाहन्यायेनार्वाचीनवाच्यार्थानुधावनहेवाकित्वादीदृशि विषये व्यङ्ग्यार्थस्येति तदभिप्रायेण व्यङ्ग्यस्य वाच्योपस्करणमात्रोपक्षीणत्वात् समासोक्त्यादौ गुणीभूतव्यङ्ग्यप्रकारान्तर्भावो वक्ष्यमाणो व्युत्पन्न इत्याह—**वाच्यमेवार्थमिति**॥ **उक्तेति**॥ कारिकावृत्त्यपेक्षयोक्तिः।

१. क. ख. 'तत्' नास्ति। ग. 'तदुपसंस्कृतात्'
२. ग. ङ. 'मध्यम'
३. क. 'कक्षा-'
४. क. ख. ग. 'समासोक्ताविति' अधिकः।

ध्वन्यालोकः

"उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरो[1]ऽपि रागाद्गलितं न लक्षितम् ॥"

लोचनम्

"यत्रोक्ते[2] गम्यतेऽन्यो[3]ऽर्थस्तत्[4]समानैर्विशेषणैः[5] ।
सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा[6] ॥" इति ।

अत्र[7] समासोक्तेर्लक्षणं स्वरूपं[8] हेतुर्नाम तन्निर्वचनमिति[9] पाद[10]चतुष्टयेन क्रमादुक्तम् । उपोढो रागः सान्ध्योऽरुणिमा प्रेम च येन । विलोलास्तारका ज्योतींषि नेत्रत्रिभागाश्च[11] यत्र ॥ **तथेति** ॥ झटित्येव[12] प्रेमरभसेन च[13] गृहीतमाभासितं परिचुम्बितुमाक्रान्तं च । निशाया मुखं प्रारम्भो वदनकोकनदं च[14] । **यथेति**[15] ॥

कौमुदी

"यत्रोक्ते" इत्यादि भामहीयमिदं समासोक्तेर्लक्षणम् । अत्र यथेति पदम् "स्कन्धवानृजुरव्यालः स्थिरोऽन्तिकमहाफलः । जातस्तरुरयं चोच्चैः पातितश्च नभस्वता ॥" इत्युदाहरणप्रदर्शनार्थमित्यवसेयम् । सर्वस्यैवास्य श्लोकस्य लक्षणरूपत्वं मा ज्ञायीति विभागमाह—**स्वरूपमिति** ॥ स्वमसाधारणं रूपमितरव्यावर्तकं लक्षणमिति यावत् । तत् "यत्रोक्ते गम्यतेऽन्योऽर्थः" इत्युक्तम् । यत्र यस्मिन् प्रस्तुतेऽर्थे वर्णिते सत्यन्योऽप्रस्तुतोऽर्थो गम्यते । तच्चैतत् श्लेषादावप्यस्ति तद्व्यावृत्त्यर्थं तत्समान[नेति] विशेषणसम्यं हेतुरुक्तः । तथा च मङ्खुकः—"विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः" इति ॥ **समासोक्तिरिति** ॥ नामोक्तम् । तस्य नाम्नो निर्वचनार्थं **संक्षिप्तार्थतयेति** ॥ समासेन संक्षेपेणैवार्थान्तरस्योक्तिरिति । विशेषणसाम्यं प्रदर्शयन् व्याचष्टे—**उपोढेत्यादि** ॥ **झटित्येवेति** ॥ प्रस्तुते ।

१. ग. 'पुरो विरागात्'
२. क. ख. 'यत्रौक्तौ'
३. ग. 'सोऽर्थः'
४. घ. ङ. 'तत्' नास्ति ।
५. घ. ङ. च. 'माविशेषणः'
६. क. ख. 'बुधैः'
७. घ. ङ. च. 'अत्र' नास्ति ।
८. क. ख. ग. 'स्वरूप' घ. ङ. च. 'स्वरूपे'
९. घ. ङ. 'तत्' नास्ति ।
१०. ङ. 'पद'
११. क. ख. 'गश्च' ग. 'गा वा'
१२. ख. 'झगिति'
१३. क. ख. ग. 'च' नास्ति ।
१४. क. ख. ग. 'चेति'
१५. क. ख. ग. 'यथा' अधिकः ।

लोचनम्

झटिति[1] ग्रहणेन प्रेमरभसेन[2] च । तिमिरं चांशुकाश्च[3] सूक्ष्मा अंशवः तिमिरांशुकं रश्मिशबलीकृतं तमः[4]पटलम्, तिमिरांशुकं[5] नीलजालिका नवोढाप्रौढवधूचितां[6] । रागात् रक्तत्वात्[7] सन्ध्याकृतादिनन्तरम्[8], प्रेमरूपाच्च हेतोः । पुरोऽपि पूर्वस्यां दिशि अग्रे च । गलितं प्रशान्तं पतितं च । तया रात्र्या करणभूतया ; समस्तं मिश्रितं उपलक्षणत्वेन वा । न[9] लक्षितं[10] रात्रिप्रारम्भोऽसाविति न ज्ञातम् ; तिमिरशबलितांशुदर्शने[11] हि रात्रिमुखमिति लोकेन लक्ष्यते, न तु स्फुट आलोके । नायिकापक्षे तु—तयेति कर्तृपदम् । रात्रिपक्षे तु[12] अपिशब्दः[13] लक्षितमित्यस्यानन्तरः । अत्र च नायकेन

कौमुदी

**प्रेमरभसेनेति** ॥ अप्रस्तुते तिमिरांशुकमिति द्वन्द्वसमासाश्रयेण प्रस्तुते योजयति—**तिमिरं चेति** ॥ कप्रत्यार्थमाह—**सूक्ष्मेति** ॥ रूपसादृश्यादंशुके तिमिरशब्दप्रवृत्तिमभिप्रेत्याप्रस्तुते योजयति—**तिमिरं चांशुकमिति** ॥ नीलजालिका नीलं वस्त्रम् । अस्यात्रौचित्यात् ग्रहणमित्याह—**नवोढेति** ॥ नवोढाया अत एवाप्रौढाया वध्वा उचिता । रक्तत्वात् इति प्रस्तुते ; अनन्तरमिति च । प्रेमरूपादित्यप्रस्तुते । हेतोरिति च प्रस्तुते । तयेति निशापरामर्शः । तृतीया च करणार्था । तिमिररश्मिसंभेदे च करणत्वमित्याह—**तयेति** ॥ उपलक्षणार्था वा तृतीयेत्याह—**उपलक्षणत्वेन वेति** ॥ **न ज्ञातम्** ॥ जनैरिति शेषः । अलक्षणे हेतुर्गलनम् । तथापि कथमलक्षणमित्याह—**तिमिरेति** ॥ इदानीमप्रस्तुते योजयति—**नायिकापक्ष इति** ॥ अलक्षणेन च संबध्यत इत्यर्थः । प्रस्तुते पुरोऽपीत्यपिशब्दस्य यथाश्रुतान्वयो दुर्घट इति क्रमभञ्जनेन न लक्षितमपीत्यन्वयमाह—**रात्रिपक्ष इति** ॥ न केवलं

१. ख. 'झगिति'
२. घ. 'प्रेमरसेन'
३. क. ख. ग. 'शुकम्'
४. घ. 'तमःपटलं... गलितम्' नास्ति ।
५. ङ. 'रं चा'
६. क. ख. ग. 'वधूरुदिता'
७. क. ख. 'रसत्वात्'
८. क. ख. 'कृतात्' नास्ति । ग. 'कृताद्रागादन-'
९. घ. 'न' नास्ति ।
१०. क. ख. 'क्षालितम्'
११. क. ख. ग. 'संवलित' ङ. 'शबलीकृत'
१२. क. ख. 'तु' नास्ति ।
१३. घ. 'शब्दम्'

## लोचनम्

पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा पुरोऽग्रे नायकेन तथा गृहीतं[1] मुखमिति संबन्धः । तेनात्र[2] व्यङ्ग्ये प्रतीतेऽपि न प्राधान्यम् । तथा[3] हि— नायिकानायकव्यवहारो निशाशशिनावेव शृङ्गारविभावरूपौ [4]संस्कुर्वाणोऽलङ्कारतां भजते, ततस्तु[5] वाच्याद्विभावीभूताद्रसनिः[6]ष्यन्दः । यस्तु व्याचष्टे—"तया निशयेति कर्तृपदम् । न[7] चाचेतनायाः कर्तृत्वमुपपन्नमिति शब्देनात्र[8] नायकव्यवहार उन्नीतो[9]ऽभिधेय एव, न व्यङ्ग्य

## कौमुदी

प्रत्यक्षेणानवगतमित्येव, किन्तु उन्नीतमपि नेत्यर्थः । नायिकापक्षे पुरोभागे नीलांशुकगलनस्य समुचितां दशामासूचयति—**अत्र चेति** ॥ नायिकापक्षे पुनरित्यर्थः । "पुरः" इत्यस्य "मुखं गृहीतम्" इत्यनेन वान्वय इति चुम्बनौचित्यानुसृत्याह—**यदि वेति** ॥ यत एवमुक्त-प्रकारेणार्थान्तरप्रतीतिः, ततो हेतोरित्यर्थः । अप्राधान्यमुपपादयति—**तथा हीति** ॥ विशेषणसाम्यात् खलु प्रतीयमानमप्रस्तुतं प्रस्तुतावच्छेदकत्वेनैवावभासते ; तेनात्र व्यवहार-मात्रसमारोप एव, न तु ताद्रूप्यारोपः ; स चात्र नायिकानायकव्यवहारो वाक्यार्थभूयास्थितौ निशाशशाङ्कौ संस्कुर्वन्नालङ्कारपन्थानमतिलङ्घितुमलमिति व्यक्तं प्रतीयमानस्याप्राधान्यात् [न्यम्] । संस्कार्यतायां हेतु—**ःशृङ्गारविभावरूपाविति** ॥ शृङ्गारविभावीभवितुं योग्यमित्यर्थः । एवं मध्यकक्ष्यानिविष्टव्यङ्ग्यापेक्षया गुणीभूतव्यङ्ग्यत्वमुक्त्वा पार्यन्तिकरसध्वन्यपेक्षया ध्वनि-त्वमप्यस्तीति दर्शयितुमाह—**ततस्त्विति** ॥ संस्कृतात्, अत एव पूर्वं विभावभावमननुभवतः संस्करणानन्तरं प्राप्तविभावभावात् । समासोक्त्युदाहरणेऽस्मिन् व्याख्यानान्तरमनुभाषते—**यस्त्विति** ॥ यच्छब्दस्य "स प्रकृतम्" इति तच्छब्देनान्वयः ॥ **कर्तृपदमिति** ॥ निशायाः कर्तृत्वमभिदधत्पदमित्यर्थः । ततः किमित्याह—**न चेति** ॥ स्वातन्त्र्यलक्षणं हि कर्तृत्वम्, तच्च चेतनस्यैव कुलालादेर्दृष्टमुपपन्नं चेत्यर्थः । ततोऽपि किमित्याह—**इति शब्देनेति** ॥ निशाशब्देन शशिशब्देन चेत्यर्थः । नायकयोर्व्यवहारः नायकव्यवहारः । उन्नीत उत्प्रेक्षितः । ततश्चाभिधाव्यापारविषय एव, शब्दस्यास्य व्यापारान्तराभावादित्याह—**अभिधेय एवेति** ॥

१. घ. 'गृहीतमुखं'
२. ग. 'तेनाप्यत्र'
३. क. ख. ग. 'ततोऽपि नायक-'
४. ग. 'संस्कुर्वाणौ'
५. ङ. 'ततश्च'
६. क. ख. ग. 'निःष्पन्दः'
७. घ. ङ. च. 'नाचेत-'
८. क. ख. ग. ङ. 'नैवात्र'
९. क. ख. 'आनीतः'

ध्वन्यालोकः

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते । समारोपितनायिकानायक-व्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् ॥

लोचनम्

इति ; अत एव[1] समासेनोक्तिः[2]" इति, स प्रकृतमेव[3] ग्रन्थार्थमत्यजत् "व्यङ्ग्येनानुगतम्" इति[4] । एकदेशविवर्ति चेत्थं रूपकं स्यात्, "राजहंसैरवीज्यन्त शरदैव[5] सरोनृपाः[6]" इतिवत्[7] ; न तु समासोक्तिः, तुल्यविशेषणाभावात्[8] 'गम्यते' इति चानेनाभिधाव्यापारनिरासात्— इत्यलमवान्तरेण बहुना । नायिकाया नायके[9] यो व्यवहारः स निशायां समारोपितः, नायिकायां नायकस्य[10] यो व्यवहारः स च[11] शशिनि समारोपित इति व्याख्याने नैकशेषप्रसङ्गः[12] ॥

कौमुदी

**समासेनोक्तिरिति** ॥ समाख्यासामर्थ्याच्चाभिधेयत्वनिश्चय इत्याह—**अत एवेति** ॥ 'न व्यङ्ग्य इति' इतिशब्द इह संबन्धनीयः । वृत्तिग्रन्थविरोधसमुद्भावनया परिहरति–**स प्रकृतमिति** ॥ कोऽसौ ग्रन्थ इति तमाह—**व्यङ्ग्येनेति** ॥ इतोऽप्ययुक्तमिदं व्याख्यानमित्याह–**एकदेशेति** ॥ एकदेशविवर्तिन उदाहरणमाह—**राजहंसैरिति** ॥ अत्र हि सरसां नृपत्वरूपणमेव शाब्दम्, शरदश्चामरग्राहिणीत्वं राजहंसानां चामरत्वं चार्थमित्येवं यथैकदेशविवर्तित्वम्, तथा तिमिरांशुकमित्यादौ तिमिरादेरंशुकत्वादिरूपणं शाब्दम्, शश्यादेस्तु नायकादित्वमार्थमित्येकदेशविवर्तिरूपकत्वमेव स्यात् ; न समासोक्तिरूपत्वम्, तद्धेतुभूतविशेषणसाम्याभावात् ; तच्च रूपकसमासावलम्बनादित्यर्थः । भामहीयलक्षणवाक्याक्षरव्याघाताच्चाभिधेयत्वपक्षानुपपत्तिरित्याह—**गम्यत इति चेति** ॥ बहुवक्तव्यदूषणत्वं सूचयन्नुपसंहरति—**इत्यलमिति** ॥ ननु "पुमान् स्त्रिया" इत्येकशेषप्रसक्तौ सत्यां कथं वृत्तौ "समारोपितनायिकानायकव्यवहारयोः" इति तद्विरुद्धोऽयं प्रयोगो घटताम्, इत्याशङ्क्य तादृशप्रकारावकाशविरहितं व्याख्यानप्रकारं प्रकटयंस्तदविरोधमाह—**नायिकाया इति** ॥ व्यवहारो व्यापारः

१. क. ख. 'एव' नास्ति ।
२. क. ख. ग. 'समासोक्तिः'
३. क. ख. ग. 'प्रकृतार्थमेव'
४. च. 'च' अधिकः ।
५. क. ख. 'शरदीव'
६. घ. 'सरोरुहाः'
७. ग. 'वत्' नास्ति ।
८. घ 'विशेषणत्वा-'
९. ङ. 'नायिकयोः'
१०. घ. 'च' अधिकः ।
११. क. ख. ग. 'च' नास्ति ।
१२. क. ख. 'न कोऽपि दोष-'

ध्वन्यालोकः

आक्षेपेऽपि[1] व्यङ्ग्यविशेषाक्षेपिणो[2] वाच्यस्यैव चारुत्वम् । प्राधान्येन [3]वाच्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते । [4]तत्र शब्दोपारूढरूपो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः स एव व्यङ्ग्यविशेषमाक्षिपन्मुख्यं काव्यशरीरम् ।

लोचनम्

आक्षेप इति ॥

"प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः" ॥

[5]तत्राद्यो यथा—

"अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेना[6]प्रियेण ते ॥"

इति वक्ष्यमाणमरण[7]विषयो निषेधात्माक्षेपः । [8]तत्र 'इयदस्तु' इत्येतदेव अत्र 'म्रिये[9]' इत्यस्याक्षेप[10]कं

कौमुदी

दुकूलविगलनानवलोकनादिरूपः नायकस्य व्यवहारस्तत्तादृशवदनाम्बुरुहपरिचुम्बनारम्भादिलक्षणः ॥

भामहीयमेवाक्षेपालङ्कारलक्षणमुपक्षिपति—**प्रतिषेध इति** ॥ इवशब्देन प्रतिषेधस्याभासत्वमाभासितम् । तथा च मङ्खुकः—"उक्तवक्ष्यमाणयोः प्राकरणिकयोः विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः" इति ॥ **इष्टस्येति** ॥ प्राकरणिकत्वं दर्शितम् ॥ **विशेषाभिधित्सयेति** ॥ विशेषप्रत्यायनार्थमित्यर्थः । अत्राद्ये भामहीयमेवोदाहरणमाह—**अहं त्वामिति** ॥ आद्यभेदत्वं योजयति—**वक्ष्यमाणेति** ॥ इह वाच्यो य आक्षेपः स निषेधरूपो विवक्षितः नागूरणरूपः, तस्य व्यङ्ग्यत्वादित्याह—**निषेधात्मेति** ॥ इहापि व्यङ्ग्यस्य वाच्योपस्कारकत्वेनाप्राधान्यं दर्शयति—**तत्रेति** ॥ वक्ष्यमाणविषय आक्षेपे । अत्र त्वद्विलोकन-

१. क. ख. 'हि'
२. ग. 'अपि' अधिकः ।
३. क. ख. 'वाक्यार्थे'
४. ग. 'तथा हि तत्र हि'
५. घ. ङ. च. 'मतः । तत्राद्यो' नास्ति ।
६. क. ख. 'प्रियेण'
७. घ. '-मरण-' नास्ति ।
८. ग. 'यतः'
९. ग. 'म्रियते'
१०. क. ख. 'इत्याक्षिपत्'
घ. ङ. च. 'इत्याक्षेपकं'

## लोचनम्

सत् चारुत्वनिबन्धनमित्याक्षेप्येणाक्षेपक[1]मलंकृतं सत् प्रधानम्[2]। उक्तविषयस्तु यथा ममैव[3]—

"भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गति-
स्तत्तादृक्तृषितस्य मे खलमतिः[4] सोऽयं जलं गूहते ।
अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रुध्य[5] भो-
स्त्रैलोक्यप्रथितप्रभावमहिमा मार्गः पुनर्मारवः ॥"

## कौमुदी

महोत्सवविरोधिनि समये, अहं म्रिय एव मरणमनुभवाम्येव इत्येवंरूपस्यार्थस्याक्षेप[पक]-मागूरणं कुर्वाणमेव, इयदस्त्वित्येतद्वाच्यं प्रतिषेधरूपमेव चारुत्वप्रतीतिनिबन्धनम्, न त्वाक्षेप्यं म्रिय इत्येतत् व्यङ्ग्यम्—इत्यतो हेतोराक्षेप्येण मरणाध्यवसायेन व्यङ्ग्येनालंकृतं वाच्यमेवाक्षेपकं प्रधानम्, न त्वाक्षेप्यं व्यङ्ग्यमिति योजना। द्वितीये स्वकीयमेवोदाहरणमाह— **उक्तेति** ॥ भो भोः किं किमित्यादरातिरेके वीप्सा। अकाण्ड एवास्थान एव। निःसहनिसृमरपरिश्रमभरतयावसन्नः। कान्या गतिः इत्यादिकं प्रश्नोत्तरात्मकं पान्थस्य वचनम्। किमपि शरणलवमलभमानोऽहमतिमहति सङ्कटे विपरिवर्त इत्यर्थः। किंनिबन्धनं कीदृशं वा तद्भवतो व्यसनमित्युक्तम्॥ **तादृगिति** ॥ अतिवेलं तृषामूर्छालया सलिलपिपासया परिभूयमानं मामनादृत्य ॥ **सोऽयमिति** ॥ साभिनयोऽसूयातिशयनिःष्यन्दी निर्देशः। अत एव खलमतिरयम् एवमतिबहुलदाहदहनदन्दह्यमानसकलदेहतया महीयसीमार्तिमासादयत्वित्येवं मनसि कृत्वा जलं मदीयदाहनिवृत्तिनिदानं गूहते निह्नोति यतः, अतोऽहमशरणः संवृत्तोऽस्मि। "अस्थानोपनताम्" इत्यादि प्रष्टुरेव पान्थप्रतिबोधनपरं वचनम्। हे पान्थ त्वमात्मीयामेनां तृष्णां प्रति क्रुध्य क्रोधमालम्बस्व, यस्मादियमस्थाने अयोग्ये विषये उपनता; भवितव्यं नाम तावत्तस्या अपि कयापि विचिकित्सया—किमिह मया प्रवर्तितव्यं न वेति। तथा अकाले अनवसरे सुलभा च। कुत एवमिति चेत् यस्मादेष मरुभूमिसम्बन्धी मार्गस्त्रैलोक्यप्रसिद्धमहिमा भवति। न खलु कश्चिदपि न जानाति तृषितापतितपथिकलोकपाथोवितरणसततपराङ्मुखप्रवृत्तिरयमिति। तेन भवदीयायास्तृष्णायाः भवत[भवन् भवतः] एवायमपराधावतारः न पुनरमुष्य कथञ्चित्, अस्य तथाविधस्वभावत्वस्य सुप्रसिद्धत्वात्—इति पिपासातिशयाक्रान्तस्वान्तपान्थपरिसान्त्वनपरेयमुक्तिः। अनेन

१. क. ख. ग. 'आक्षेपं'
२. ग. 'सत्त्वप्रधानम्'
३. ग. 'ममैव' नास्ति।
४. ग. 'जडमतिः' घ. 'खलगतिः'
५. क. ख. 'क्रुध्यतः'

## लोचनम्

अत्र कश्चित् सेवकः प्राप्तः प्राप्तव्यमस्मात्[1] किमिति न लेभे[2] इति प्रत्याशाविशस्य[3]मानहृदयः केनचिदमुनाक्षेपेण[4] प्रतिबोध्यते। तत्राक्षेपेण निषेधरूपेण वाच्यस्यैवासत्पुरुषसेवा-तद्वैफल्य[5][6]तत्कृतोद्वेगात्मनः शान्तरसस्थायिभूत[7]निर्वेदविभावानुभावरूपतया चमत्कृतिदायि[8][9]त्वम्। वामनस्य तु "उपमानाक्षेपः" इत्याक्षेप[10]लक्षणम्। उपमानस्य चन्द्रादेराक्षेपः। 'अस्मिन् सति [11]किं त्वया कृत्यम्[12]' इति। यथा—

"तस्यास्तन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ यदि च ते[13] किं नाम नीलोत्पलैः।
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
ही[14] धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः॥"

## कौमुदी

प्रत्याय्यमानमर्थं दर्शयति—**अत्रेति**॥ 'किं तावत्प्राप्तम्' इत्यादिवद्योग्यत्ववचनः प्राप्त-शब्दः, सेव्यं राजादिकं प्राप्त इति वा। अस्मात् सेव्याद्राजादेः सकाशात्। व्यङ्ग्यस्य वाच्यार्थोपस्कारकत्वेन गुणीभावं दर्शयति—**तत्रेति**॥ किं तद्वाच्यमिति तदाह—**असत्पुरुषेति**॥ अत्र पान्थजलतृष्णादिरूपं न विवक्षितम्, किं त्वसत्पुरुषसेवादिकम्; अन्यथा अप्रस्तुतप्रशंसात्वापत्तेरिति भावः। विभावः सेवावैफल्यम्। अनुभाव उद्वेगः। एवं भामहीयं लक्षणद्वयमुदाहरणे योजयित्वा तस्यैव वामनोक्तेऽपि लक्षणे व्यङ्ग्यस्याप्राधान्यं न विघटत इति दर्शयति—**वामनस्य त्विति**॥ लक्षणवाक्यं विभजते—**उपमानस्येति**॥ मुखादि-संबन्धिन इति शेषः। आक्षेपशब्दार्थमाह—**अस्मिन्निति**॥ अस्मिन् उपमेयाभिमते मुखादौ। तेन उपमानाभिमतेन चन्द्रादिना। उदाहरणमाह—**यथेति**॥ सौम्यं मधुरदर्शनम्;

१. क. ख. 'प्राप्यमस्माकं'
२. क. ख. 'प्रतिलभे'
३. क. ख. 'इत्यन्तर्विषयमान'
४. क. ख. ग. 'विडम्बनाक्षेपेण'
५. घ. 'प्राति...निर्वेदवि' नास्ति।
६. क. ख. 'वैफल्यतः'
ग. 'वैफल्यकृत'
७. ङ. च. 'स्थायी'
८. घ. 'प्रतिभानु'
९. क. ख. ग. 'दायि' नास्ति।
१०. घ. 'आक्षेप' नास्ति।
११. घ. 'किम्' नास्ति।
१२. क. ख ग. 'कृतम्'
१३. क. ख. 'तैः'
१४. क. ख. ग. 'हे यान्तः'

## लोचनम्

अत्र व्यङ्ग्योऽप्युपमार्थो वाच्यस्यैवोपस्कुरुते । किं तेन कृत्यमिति त्व[१]पहस्तनारूपे[२] आक्षेपो वाच्य एव चमत्कारकारणम् । यदि वोपमानस्याक्षेपः सामर्थ्यादाकर्षणम् । यथा—

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं क[३]रोति ॥"

[४]ईर्ष्याकलु[५]षितना[६]यिकान्तरमुपमानमत्रा[७]क्षिप्तमपि वाच्यार्थमेव अलङ्करोतीति । एषा तु[८]

## कौमुदी

अत एव सुभगम् ; तस्यास्तत् स्ववेदनानन्दसमास्वाद्यसौन्दर्यसर्वस्वं मुखमस्ति ; सत्तामनुभवति खलु । अतः पार्वणेन्दुना किं कृत्यमिति । उत्तरवाक्ये 'दृशौ' इत्यत्र 'स्तः' इति विपरिणमय्य योज्यम् । अत्र च 'सौम्यसुभगम्' 'पार्वणेन' इति च साधारणधर्मनिर्देशः । सौन्दर्यस्य पदम्, 'नील' इति ; 'कोमलकान्तिभिः' इति सा[स्वा]नुभवपरामर्शकेन 'तत्र' इत्यनेन च अपर्यवसितासाधारणलालित्यविशेषशालित्वं दर्शितम् । धातुः उचितानुचितानभिज्ञस्य, पुनरुक्तानां यातयामत्वेनानादरास्पदीभूतानाम्, अत एवानुपादेयानां पार्वणेन्दुप्रभृतीनां वस्तूनाम्, रचनायां बहुप्रयासोपादानेन सृष्टौ विषये, य आरम्भा व्यापाराः तेषु, अपूर्वः अन्यस्मिन्नुचितानुचिताभिज्ञे रचयितर्यदृष्टचर इहैव दृष्टः ग्रहः अभिनिवेशविशेषः । अहो [ह्री]महत्कष्टमिति । उपमार्थः उपमारूपोऽर्थः ; वाच्यस्यैवोपस्कुरुते वाच्यमेवालंकरोतीति यावत् ॥ **वाच्य एवेति** ॥ नोपमार्थ इत्यर्थः । आक्षेपशब्दस्यागूरणं वार्थ इत्याह—**यदि वेति** ॥ तत्र वामनमतानुरोधेनैवोदाहरणमाह—**यथेति** ॥ ईर्ष्याकलुषितं यन्नायकान्तरं तदुपमानत्वेनात्र गूर्यते, शरदा नायिकया सकलङ्कस्येन्दोः प्रसाद्यमानत्वाभिधानात् । एवं वामनमतेनाक्षेपालंकारत्वमभिधाय भामहमतेन समासोक्तित्वं स्थापयति—**एषा त्विति** ॥ तुशब्दोऽलंकारान्तरत्वशङ्कां व्यवच्छिनत्ति । अत्र च नायिकापक्षे साक्षादार्द्रनखक्षतस्थतया श्रुतमप्युपमानत्वमैन्द्रधनुषि योजनीयम्—इन्द्रचापाभमार्द्रनखक्षतं दधानेति ;

१. क. ख. ग. 'तु' नास्ति ।
२. क. ख. ग. 'हस्तनारोप' घ. 'हसनारूप'
३. क. ख. ग. ङ. 'चकार'
४. क. ख. ग. 'इत्यत्र' अधिकः ।
५. घ. 'कलङ्कित'
६. क. ख. ग. 'नायिका'
७. क. ख. ग. 'अत्र' नास्ति ।
८. क. ख. 'तु' नास्ति ।

ध्वन्यालोकः

चारुत्वोत्कर्षनिबन्धना[1] हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा । यथा—

"अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिः कीदृक्[2]तथापि न समागमः ॥"

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा ।

लोचनम्

समासोक्तिरेव । तदाह—चारुत्वोत्कर्षेति ॥ अत्रैव प्रसिद्धं दृष्टान्तमाह—अनुरागवतीति ॥ [3]तेनाक्षेपप्रमेयसमर्थनमेवापरिसमाप्तमिति मन्तव्यम् । तत्र तूदाहरणत्वेन[4] समासोक्तिश्लोकः पठितः "अहो दैवगतिः कीदृक्[5]" इति । गुरुपारतन्त्र्यादिनिमित्तको[6]ऽसमागम इत्यर्थः ॥

कौमुदी

'प्रसादयन्ती' इति विशेषणस्य समानत्वात् तत्समभिव्याहृतस्य अस्यापि साम्यस्यैवोपपत्तेः । व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वाधिक्येऽपि व्यङ्ग्यस्यैव किं न प्राधान्यमित्याशङ्क्य तन्निषेधे हेतुत्वेनोत्तरग्रन्थमवतारयति—तदाहेति ॥ तत् तत्र वाच्यस्यैव प्राधान्यं न व्यङ्ग्नस्येत्यस्मिन्नर्थे हेतुमाहेत्यर्थः ॥ अत्रैवेति ॥ चारुत्वोत्कर्षकृतं प्राधान्यमित्येतस्मिन्नर्थे । एवकारोऽलंकारोदाहरणत्वशङ्काशमनार्थः ॥ प्रसिद्धमिति ॥ दृष्टान्तत्वे हेतुः ॥ तेनेति ॥ दृष्टान्तोक्तित्वादेवालंकारान्तरोदाहरणत्वाभावादित्यर्थः ॥ तत्र त्विति ॥ आक्षेपसमर्थन एवेति । तुरवधारणे ॥ समासोक्तिश्लोक इति ॥ नात्र कस्यचिद्विमतिरित्यर्थः । समागमसामग्रीसन्निधावप्यसमागमस्य दैवगतिविजृम्भितत्वं वदता समागमस्याप्रतिविधेयनिमित्तान्तरप्रतिबन्धत्र[त्रा]तवृत्तित्वं सूचितम्, इतरथा निर्हेतुककार्योत्पत्त्यनुपपत्तिरित्याह—गुरुपारतन्त्र्येति ॥ तच्छब्दस्य व्यङ्ग्यपरामर्शकत्वशङ्का मा भूदित्याह—वाच्यस्यैवेति ॥

१. ग. 'निबन्धानाभिदा'
२. क. ख. ग. 'चित्रा'
३. क. ख. 'तेनाक्षेपेण प्रमेयसमर्थानामेव पारि'
४. क. ख. 'तत्रोदाहरणेन'
५. घ. ङ. च. 'कीदृक्' नास्ति ।
६. क. ख. ग. 'निमित्तो' च. 'निमित्तको'

## लोचनम्

तस्यैवेति ॥ वाच्यस्यैवेति यावत्[1]। वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण[2] सामासोक्ति-रित्यमुम्[3]आशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोर्युक्त्येदमेकमेवोदाहरणं[4] व्यतरद्ग्रन्थकृत्; एवं[5] हि समासोक्तिर्वास्तु आक्षेपो[6] वा; किमनेनास्माकम्? [7]समासोक्त्यादिषु सर्वथालङ्कारेषु[8] व्यङ्ग्यं वाच्ये गुणीभवतीति नः साध्यम्—इत्याशयो[9]ऽत्र ग्रन्थे गुरुभिर्[10]निरूपितः ॥

## कौमुदी

यदि प्राधान्यविवक्षायामुदाहरणं ग्रन्थकृता दत्तं तर्हि 'उपोढरागेण' इति प्रागुदाहृत-समासोक्तिश्लोकानुस्मरणेनापि चरितार्थत्वेऽपि किमर्थं समासोक्तिश्लोकान्तरोदा-हरणमित्याकाङ्क्षायां तदभिप्रायं सप्रमाणं प्रदर्शयति—**वामनाभिप्रायेणेति** ॥ 'ऐन्द्रं धनुः' इत्यादिवन्नायकान्तरस्योपमानत्वेनाक्षेपादित्यर्थः ॥ **भामहेति** ॥ अनुरागवती-त्यादिविशेषणसाम्यादप्रस्तुतस्य गम्यमानत्वादित्यर्थः । पुरःशब्दस्य देशकालसाधा-रण्यात् समागमस्य च सम्बन्धिभेदात् भेदेऽपि स्वरूपत एकत्वात् साम्यमवसेयम् । युक्त्या योगेन लाघविकतयेति यावत्। इदम् अनुरागवतीत्यादिकम्। एकं साधारणम्। तथापि साधारणोदाहरणे कोऽभिप्राय इत्यत आह—**एवं हीति** ॥ अनेन प्रकारेणोदाहरणे सतीत्यर्थः । अथ वा मतभेदेनास्यालंकारद्वयरूपत्वे स्थिते सतीत्यर्थः । अलंकारनियम-विवेचनतात्पर्याभावसूचनमुखेन तादृशि विषये वाच्यप्राधान्यनिश्चयप्रतिपादन-प्रयत्नातिशयसूचनार्थमीदृगुदाहरणं ग्रन्थकृत इत्यर्थः ॥ **अत्र ग्रन्थ इति** ॥

१. क. ख. 'तावत्'
२. ग. 'तु' अधिकः ।
३. ग. 'अमुम्' नास्ति ।
४. क. ख. 'युक्त्या' नास्ति ।
   ग. 'युक्त्यैवेद-'
५. क. ख. 'एषापि'
   ग. 'एषा'
६. ग. 'आक्षेपोक्तिः'
७. क. ख. 'समासोक्त्यादिषु' नास्ति ।
८. क. ख. 'अलङ्कारादिषु'
   ग. 'सिद्धालङ्कारेषु'
९. क. ख. ग. 'अत्र' अधिकः ।
१०. ग. 'अस्मद्गुरुभिः'
   ङ. 'अनेन' अधिकः ।

ध्वन्यालोकः

**यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्येन विवक्षित-**

लोचनम्

एवं प्राधान्यविवक्षायां दृष्टान्तमुक्त्वा व्यपदेशोऽपि[२] प्राधान्यकृत एव भवतीत्यत्र दृष्टान्तं स्वपरप्रसिद्धमाह[३]—**यथा[४] चेति** ॥ **उपमाया इति** ॥ उपमानोपमेयभावस्येत्यर्थः ॥ **तयेति** ॥ उपमया । दीपके हि "आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते" इति लक्षणम्[५] ।

"मणिः शाणोल्लीढः समरविजयी हेतिदलितः कलाशेषश्चन्द्रः सुरतमृदिता बाललल[६]ना ।
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जना[७]ः ॥"

कौमुदी

"चारुत्वोत्कर्षनिबन्धना" इत्यादौ "प्राधान्यविवक्षा" इत्यन्ते "यथा च" इत्यादि-दृष्टान्तान्तरोपक्षेपस्य पूर्वापेक्षया विविक्तं विषयमाह—**एवमिति** ॥ स्वपरप्रसिद्धत्वं दृष्टान्तत्वे हेतुतयोक्तम्; तत्तु तावद्दीपके वाच्यप्राधान्यं व्यपदेशहेतुभूतं प्रदर्शयति—**दीपके हीति** ॥ अत्र दीपनकृतमेव चारुत्वमित्यन्वयः । दीपकस्य लक्षणमुदाहरणं च वाक्यमध्ये दर्शयति; अथ वा दीपके हि वाच्यस्यैव प्राधान्यमिति शेषः ॥ **आदिमध्यान्तेति** ॥ अत्र आद्यादयः शब्दा वाक्यविषया द्रष्टव्याः, न तु श्लोकमात्रापेक्षाः । तत्र "आदिमध्यान्तवाक्यगतत्वेन धर्मस्य वृत्तावादिमध्यान्तदीपकाख्यास्त्रयो भेदाः" इति मङ्खुकवचनात् "तनिम्ना शोभन्ते" इति अन्तवाक्यगतत्वादन्तदीपकोदाहरणमेतत् ज्ञेयम्; इतरयोस्त्वनुदाहरणं विस्तरभयाद-प्रस्तुतत्वाच्च । आदिदीपकं यथा ममैव मयूरदूते काव्ये—

"सा जागर्ति स्वपिति च मुधा मूकतामेत्य बद्धं
ब्रूते रोदित्यधिकमतुलं धैर्यमालम्बते च ।

१. ज. 'छेकापह्नु-'
२. क. ख. ग. 'अपि' नास्ति ।
३. क. ख. '-सिद्ध-'
४. ग. 'यथा चैतद्रूपाबाः'
५. क. ख. 'तत्र दीपकेनैव शोभा यथा' अधिकः ।
६. ग. ङ. '-वनिता'
७. ग. घ. ङ. च. 'नराः'

लोचनम्

इत्यत्र दीपन[1]कृतमेव चारुत्वम् । "अपह्नुतिरभीष्टस्य किंचिदन्तर्[2]गतोपमा" इति[3] । तत्रापह्नवेनैव[4] शोभा[5]—

"नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥" इति ।

कौमुदी

मूर्छां प्राप्नोत्यपि च भजते चेतनामित्यशक्तो
वक्तुं वेधा अपि विरहजव्यापृतीरङ्गनानाम् ॥" इति ।

अत्र बह्वीनां क्रियाणामेककारकसंबन्धात् क्रियादीपकम् । आदिवाक्ये 'सः' इति कर्तृकारकनिर्देशाच्चादिदीपकम् । मध्यदीपकं यथा ममैव—

"कुचसीमनि कुटिलदृशां घुसृणरसाः शारदीषु रजनीषु ।
चन्द्ररुचः सुन्दरतां दधति व्यङ्ग्येषु चैव सुकविगिरः ॥"

अत्र सुन्दरताधानक्रियाया मध्यवाक्यगतत्वान्मध्यदीपकम् ॥ **दीपनकृतमिति** ॥ अनेन दीपयतीति ण्वुलि दीपकशब्दोत्पत्तिः सूचिता ॥ **एवेति** ॥ न गम्यमानेनोपमानोपमेयभावेनेत्यर्थः । अभीष्टस्य प्रस्तुतस्य भृङ्गालीविरावादेः । शुक्तिकादौ रजतत्वाद्यपह्नवेऽतिप्रसक्तिं वारयितुम्—**अन्तर्गतोपमेति** ॥ तत्र भेदाग्रहनिबन्धनो मिथ्याध्यवसायरूपोऽपह्नवः, इह तूपमानोपमेयभावनिबन्धनः समीचीन एव प्रत्यय इत्यर्थः । उदाहरणात् प्रागेव लाघविकतया दीपकदर्शितां रीतिमिहाकर्षति—**तत्रेति** ॥ वाच्यभूतेनापह्नवेनैव, न तु व्यङ्ग्यभूतोपमया । सा तु वाच्यमेवालङ्कुर्वाणा शोभायै कल्पत इत्यर्थः । उदाहरणं भामहीयमेवाह—**नेयमिति** ॥ मुहुर्विरौतीत्यन्वयः । 'मदेन मुखरा' 'आकृष्यमाणस्य' इति च बिम्बप्रतिबिम्बभावेनोक्तिः उपमानोपमेयभावमार्गशोधनार्था । इदानीम्

१. क. ख. ग. 'दीपक-'
२. क. ख. 'अर्थगतोपमा' ग. 'अन्तगतोपमा'
३. क. ख. 'इति' नास्ति ।
४. क. ख. 'अपह्नुत्येव'
५. क. ख. ग. 'यथा' अधिकः ।

ध्वन्यालोकः

त्वान्न तया व्यपदेशः, तद्वदत्रापि द्रष्टव्यम् । अनुक्तनिमित्तायामपि विशेषोक्तौ

"आहूतोऽपि सहायैरेमीत्युक्त्वा[1] विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥"

लोचनम्

एवमाक्षेपं विचार्योद्देशक्रमेणैव प्रमेयान्तरमाह—अनुक्तनिमित्तायामपीति[2] ॥

"एकदेशस्य विगमे[3] या गुणान्तरसंस्तुतिः ।
विशेषप्रथनायासौ विशेषोक्तिरिति स्मृता ॥"

यथा—"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं[4] यस्य शम्भुना न हृतं बलम् ॥"

कौमुदी

"अनुक्तनिमित्तायाम्" इत्यादिग्रन्थस्याक्षेपप्रमेयसमर्थनेन संबन्धमाह—एवमिति ॥ "आक्षेपं विचार्य" इत्यनेन समासोक्तिश्लोके यत्पूर्वमुक्तम् "आक्षेपप्रमेयसमर्थनमेवापरिसमाप्तम्" इति तदनुसन्धत्ते। तेन दीपकादेरत्र प्रासङ्गिकत्वमेव, न तु प्राकरणिकत्वमिति दर्शितम् । अत एवाह—उद्देशक्रमेणैवेति ॥ समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तीत्याद्युद्देशक्रमानुरोधेनेत्यर्थः । ननु 'विशेषोक्ति[क्तौ]' इत्येव वक्तव्ये किमर्थम् 'अनुक्तनिमित्तायाम्' इति विशेषणम्? अचिन्त्यनिमित्तोक्तनिमित्तलक्षणप्रकारद्वयव्यवच्छेदार्थं चेत्, तत्र किं निबन्धनमित्यपेक्षायां प्रथमं विशेषोक्तेर्लक्षणमाह—एकदेशस्येति ॥ एकदेशस्य तनुमत्त्वादेः कारणरूपस्य विगमे राहित्येऽपि गुणान्तरस्य बलवत्त्वादेः धर्मस्य कार्यरूपस्य संस्तुतिः प्रतिपादनं यत् कस्यचिद्विशेषस्याभिव्यञ्जनार्थं सा विशेषप्रथनार्थोक्तिरिति विशेषोक्तिर्नामालङ्कार इत्यर्थः । सा चाचिन्त्यनिमित्ता, उक्तनिमित्ता, अनुक्तनिमित्ता चेति त्रिधा भवति । तत्राद्याया उदाहरणमाह—यथेति ॥ स इति ॥ ब्रह्मादिकीटपर्यन्तेष्वप्रतिबद्धवीर्यत्वेन सुप्रसिद्धः । एकः प्रधानभूतोऽन्यनिरपेक्ष एव ; अत एव कुसुमायुध इति ॥ त्रीणीति ॥ संख्यानिर्देशोऽयमजितशेषनिषेधार्थः । 'शंभुनापि' 'तनुं

१. ग. 'आमित्युक्त्वा'
२. क. ख. 'अपि' नास्ति ।
३. क. ख. 'निगमे'
४. घ. 'तनुः'

ध्वन्यालोकः

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रम्[1]। न त्वत्र काचिच्चारुत्व-

लोचनम्

इयं चाचिन्त्यनिमित्तेति नास्यां व्यङ्ग्यस्य सद्भावः। उक्तनिमित्तायामपि[2] वस्तुस्वभाव[3]-मात्रत्वे पर्यवसानमिति तत्रा[4]पि न व्यङ्ग्यसद्भावा[5]शङ्का। यथा—

"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने॥"

तेन प्रकारद्वयमवधीर्य[6] तृतीयं प्रकारमाशङ्कते "अनुक्तनिमित्तायामपि इति॥ व्यङ्ग्य-स्ये[7]ति॥ "शीतकृता खल्वार्तिरत्र निमित्तम्" इति भट्टोद्भटः; तदभिप्रायेणाह–न त्वत्र काचि-

कौमुदी

हरतापि' इत्युभयत्रापिशब्दो योज्यः। बलस्य तन्वाश्रयत्वात् तद्विगमे तदाश्रयबलाभावस्य न्याय्यत्वात्; इह तन्वभावेऽपि बलसद्भावे यन्निमित्तं तदचिन्त्यमेव, लोकप्रतीतिगोचराति-लङ्घित्वात्, न तु स्वरूपत एवाभावात्, निमित्तमन्तरेण नैमित्तिकासम्भवात्; न तु तदस्मदादिप्रतीतिगोचर इत्येतावत्। उक्तमेवाचिन्त्यनिमित्तत्वमुपजीव्य व्यङ्ग्याभावमाह— **नास्यामिति**॥ निमित्तं हीह व्यङ्ग्यत्वेन संभावनीयम्, तच्चाचिन्त्यत्वेन स्थितमिति तथाभूतस्य व्यङ्ग्यस्य न सद्भाव आशङ्कनीय इत्यर्थः। एवमाद्यभेदावधीरणे हेतुमभिधाय द्वितीयभेदावधीरणेऽपि तमाह—**उक्तनिमित्तायामिति**॥ अवार्यवीर्यत्वमिहोक्तमेव यद्यपि निमित्तम्, तथापि तदुक्तेर्वस्तुस्वभावमात्रपर्यवसितत्वान्नार्थान्तरव्यञ्जनसंभवाशङ्केति न तत्र व्यङ्ग्यसंभव इत्यर्थः। यथा दह्यमानः कर्पूरो निरवशेषमेव दह्यते, तथा निरवशेषं दग्धोऽपी-त्यर्थः॥ **तेनेति**॥ यस्मात् प्रकारद्वये व्यङ्ग्यसद्भावो नास्ति, तस्माद्धेतोरित्यर्थः। ननु व्यङ्ग्य-प्रतीतौ सत्यां कथं तत्कृतचारुत्वनिष्पत्त्यभाव इत्याशङ्क्य निमित्तं ह्यत्र व्यङ्ग्यम्, तच्च वस्तुतो न चारुत्वहेतुस्तदनुपलम्भादित्याह—**शीतकृतेति**॥ **निमित्तमिति**॥ व्यङ्ग्यमिति शेषः।

१. क. ख. ज. 'न तु प्रतीति-निमित्ता काचित्'
ग. 'न तु तत्प्रतीतिनिमित्ता'
२. क. ख. 'अपि' नास्ति।
३. क. ख. '-भावमात्रे तु'
ग. 'भावे पर्यवसितम्'
४. क. ख. 'तथापि'
५. क. ख. ग. '-भावशङ्का'
६. क. ख. ग. 'अवधार्य'
७. घ. 'व्यङ्ग्यस्येति' नास्ति।

ध्वन्यालोकः

निष्पत्तिरिति न प्राधान्यम्। पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं तद्भवतु

लोचनम्

चारुत्वनिष्पत्तिरिति॥ यत्तु रसिकैरपि निमित्तं परिकल्पितम्—'कान्तासमागमे गमनादपि लघुतरमुपायं स्वप्नं मन्यमानो निद्रागमनबुद्ध्या संकोचं नात्यजत्' इति तदपि निमित्तं चारुत्वहेतुतया नालंकारविद्भिः कल्पितम्; अपि तु विशेषोक्तिभाग एव न शिथिलयतीत्येवंभूतोऽभिव्यज्यमाननिमित्तोपस्कृतश्चारुत्वहेतुः; अन्यथा तु विशेषोक्तिरेवेयं न भवेत्। एवमभिप्रायद्वयमपि साधारणोक्त्या ग्रन्थकृत् न्यरूपयत्,

कौमुदी

ननूक्तनिमित्तव्यतिरिक्तं किञ्चिन्निमित्तमस्तु व्यङ्ग्यम्, तच्चारुत्वनिष्पत्तिहेतुरिति व्यङ्ग्यप्राधान्यमिह स्यादिति शङ्कामनुवदति—**यत्त्विति**॥ रसिकपरिकल्पितनिमित्तस्य चारुत्वहेतुत्वविरहविरोधसूचनार्थोऽपिशब्दः॥ **लघुतरमिति**॥ सङ्कोचापरित्यागमात्रसुगमत्वान्निद्रागमस्येति भावः। किं केवलमभिव्यज्यमानं चारुत्वहेतुः, आहोस्विद्वाच्यार्थोपस्कारकपु[रपु]रस्कारेण? नाद्य इत्याह—**तदपीति**॥ केवलमिति शेषः॥ **अलङ्कारविद्भिरिति**॥ विशेषोक्तेरलङ्कारत्वमिच्छद्भिरित्यर्थः। केवलं तादृङ्निमित्तप्रतीतौ काव्यगतत्वेन कस्यचिच्चारुत्वविशेषस्यासंवेदनार्थमित्यर्थः[नादित्यर्थः]। किं तर्हि चारुत्वहेतुरिति पृच्छति—**अपि त्विति**॥ द्वितीयपक्षाभ्युपगमेनोत्तरमाह—**विशेषोक्तीति**॥ अभिव्यज्यमानं यन्निमित्तं प्रियतमास्वप्नसमागमोपायरूपं तेनोपस्कृतो 'न शिथिलयतीत्येवंभूतः' विशेषोक्तिभाग एव चारुत्वहेतुः, न तु निमित्तमेव; तस्यैवालङ्कारत्वापत्तौ तदुपस्काररूपविशेषविरहे विशेषोक्तित्वभङ्गप्रसङ्गादित्याह—**अन्यथेति**॥ केचित्पुनरभिप्रायान्तरानुसारे व्यङ्ग्यस्य चारुत्वहेतुत्वसंभवात् तदभावं प्रतिपादयन्नयं ग्रन्थ उद्भटाभिप्रायानुरोधेन व्यवस्थित इत्यास्थिषत; तद्वस्तुसतत्त्वास्मद्ग्रन्थकाराभिप्रायवैमुख्यविजृम्भितमित्याह—**एवमिति**॥ उद्भटरसिकलोकास्थितमित्यर्थः॥ **साधारणोक्त्येति**॥ व्यङ्ग्यस्य प्रकरणसामर्थ्यादित्यर्थः। इतरथा शीतकृतार्तिरूपस्येत्यपि

१. क. ख. 'काचिच्चारुत्वहानिः' घ. ङ. च. 'कापि चारुत्व-'
२. क. ख. ग. 'परि' नास्ति।
३. क. ख. 'न मनागपि' य. 'गमनादपि' नास्ति।
४. क. ख. ग. '-कृद्भिः'
५. घ. '-तः'
६. क. ख. 'विभज्यमान-'
७. घ. ङ. 'वस्तुतः'

लोचनम्

न त्वौद्भटेनैवाभिप्रायेण ग्रन्थो व्यवस्थित इति मन्तव्यम् ॥ **पर्यायोक्तेऽपीति**[1] ॥

"पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥"

इति लक्षणम् ।

"शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः ।
रामस्यानेन धनुषा देशिता धर्मदेशना ॥"

इत्यत्र भीष्मस्य भार्गवप्रभावाभिभावी[2] प्रभाव इति यद्यपि प्रतीयते, तथापि तत्सहायेन "देशिता[3] धर्मदेशना" इत्यभिधीयमानेनैव काव्यार्थोऽलंकृतः[4] । अत एव

कौमुदी

किं नावक्ष्यदिति भावः ॥ **औद्भटेनेति** ॥ शैत्यकृतार्तिनिमित्तविषय इत्यर्थः । पर्यायोक्तस्योद्भटोद्भावितं लक्षणमाह—**पर्यायोक्तमिति** ॥ यच्छब्दबलात् तत् पर्यायोक्तमिति योज्यम् । पर्यायशब्दार्थमाह—**अन्येनेति** ॥ तमेव स्फुटयति—**वाच्यवाचकेति** ॥ वृत्तिर्व्यापारः । तथापि किंस्वरूपोऽसावित्यत्राह—**अवगमात्मनेति** ॥ उदाहरणमाह—**शत्रुच्छेदेति** ॥ मुनेरेव सतः शत्रुसम्बन्धोऽनुचित एव । तत्र तदुच्छेदेच्छैव तावत् असदृशी; तस्या अपि हेतुवशात् कथञ्चिदुदयमासेदुष्या द्रढिमावाप्तिरत्यन्तानुचिता । अत एवोक्तम्—**उत्पथगामिन इति** ॥ एतदेव ताच्छील्यप्रत्ययेन प्रत्यायितम् । अनेन भीष्मेण कर्त्रा, धनुषा करणेन । धर्मदेशना धर्मोपदेशः । अत्रापि वाच्यप्राधान्यं न विघटत इत्याह—**अत्रेति** ॥ **तत्सहायेनेति** ॥ तेन प्रतीयमानेनोपस्कृतेनेत्यर्थः । काव्यार्थोऽत्र प्रकृतो वीररसः । उक्तमेव वाच्यप्राधान्यं विपक्षे बाधकसूचनमुखेन समर्थयते—**अत एवेति** ॥ यतोऽत्र वाच्यस्यैव प्राधान्यम्, न तु प्रतीयमानस्य, अत एव सर्वमेतद्युज्यते; अन्यथा सर्वमेतदनुपपन्नं स्यात् । अतो वाच्यस्यैव प्राधान्यमनिच्छताप्यच्छमतिना अभ्युपेयमित्यर्थः । किं तत्सर्वमिति तदाह—लक्षणपदं लक्ष्यपदं सामान्यलणमिति ।

१. क. ख. ग. 'यथा' अधिकः ।
२. घ. '-प्रभाभि-'
क. ख. ग. '-प्रताप-'
३. ग. 'दर्शिता'
४. क. ख. 'वाक्यार्थो'

लोचनम्

पर्यायेण प्रकारान्तरेणावगमात्मना व्यङ्ग्येनोपलक्षितं स[1]द्यदभिधीयते तदभिधीयमानम् उक्तमेव सत् पर्यायोक्त[2]मिति—अभिधीयत इति लक्षणपदम्, पर्यायोक्तमिति लक्ष्यपदम्, अर्थालङ्कारत्वं सामान्यलक्षण[3]मिति—सर्वं युज्यते । यदि तु 'अभिधीयते' इत्यस्य बलाद्व्याख्यानम्—अभिधीयते प्रतीयते प्रधानतयेति, उदाहरणं च "भम धम्मिअ" इत्यादि, तद[4]लङ्कारत्वमेव दूरे संपन्नम्, आत्मतायां पर्यवसानात्;

कौमुदी

लक्षणपदमित्यत्र पदशब्दो वाक्यपरः । किं तल्लक्षणपदमिति तदाह—**पर्यायेणेत्यादि** ॥ पर्यायेणेत्यस्य व्याख्या–**प्रकारान्तरेणेति** ॥ कोऽसौ प्रकार इति तदाह–**अवगमात्मनेति** ॥ अस्य व्याख्या—**व्यङ्ग्येनेति** ॥ व्यञ्जनव्यापारविषयीभूतेनेत्यर्थः । तृतीयार्थमाह—**उपलक्षितं सदिति** ॥ यदभिधाव्यापारविषयीभवति तदभिधीयमानं पर्यायोक्तमिति सङ्गतिः । अभिधीयमानमित्यस्य विवरणम्—**उक्तमेव सदिति** ॥ वचनव्यापारविषयीकृतमेव वर्तमानमिति न व्यञ्जनव्यापारस्पृष्टमिति । अनेन लक्षणवाक्येनैव वाच्यस्य व्यङ्ग्यानुगतस्य प्राधान्यमवगमितमित्यर्थः । किं पुनस्तल्लक्ष्यपदमिति—**पर्यायोक्तमिति** ॥ वचनव्यापारस्यात्र व्यपदेशनिमित्ततयोक्तत्वात्तस्य प्राधान्यमवगम्यत इत्यर्थः । किं तत्सामान्यलक्षणमित्यत्राह—**अर्थालङ्कारत्वमिति** ॥ व्यङ्ग्यप्राधान्ये ह्यलङ्कार्यत्वापत्तेरर्थालङ्कारत्वभङ्गप्रसङ्ग इत्यर्थः । नन्वभिधीयत इति लक्षणवाक्ये वाच्यप्राधान्यस्य व्यक्तत्वात् ग्रन्थे "यदि प्राधान्येन" इति व्यङ्ग्यप्रधानत्वशङ्का निर्बीजेत्याशङ्क्य तत्पदस्य कथमपि क्लेशेन व्याख्यानमपेक्ष्य तत्पक्षानुवाद इत्याह—**यदि त्विति** ॥ तुशब्दोऽरुचिं सूचयति ॥ **बलादिति** ॥ शब्दपरिपीडनेनेत्यर्थः । अभीत्ययमाभिमुख्ये वर्तते; आभिमुख्यं च प्राधान्यनिबन्धनम्, आभिमुख्येन बुद्धौ धीयते निधीयत इति प्रधानतयावगम्यमानत्वं नाम; न त्वभिधाव्यापारविषयत्वमेवेति । एवं सति कथमुक्तोदाहरणम्, अत्र वाच्यस्यैव प्राधान्यावगमादित्याशङ्क्याह—**उदाहरणं चेति** ॥ अलङ्कारत्वदूरीभावे हेतुः—**आत्मतायामिति** ॥ मा भूदलङ्कारत्वम्, अतोऽपि हि श्लाघ्यमलङ्कार्यमेवास्तु, कः खलु उच्चपदारोहकुतूहली न भवेदित्यत्राह—**तदा चेति** ॥ न केवलमस्य प्रसिद्धस्वभावपरित्यागः, अप्रसिद्धावान्तरभेदकल्पना चापद्येतेत्याह—

१. ग. 'यद्यदभि-'
२. क. ख. ग. '-योक्तमेवा-'
३. क. ख. 'च' अधिकः ।
४. ङ. 'तदलङ्कार-'

ध्वन्यालोकः

**नाम[1] तस्य ध्वनावन्तर्भावः, न तु ध्वनेस्तत्रान्तर्भावः । तस्य महाविषयत्वेन**

लोचनम्

तदा[2] चालङ्कारमध्ये गणना न कार्या, भेदान्तराणि चास्य वक्तव्यानि । तदाह— **यदि प्राधान्येनेति** ॥ **ध्वनाविति** ॥ आत्मन्यन्तर्भावादात्मैवासौ[3] नालङ्कारः स्यादित्यर्थः ॥ **तत्रेति**[4] ॥ यादृशोऽलङ्कारत्वेन विवक्षितस्तादृशे[5] ध्वनिर्नान्तर्भवति । न तादृगस्माभिर्ध्वनिरुक्तः । ध्वनिर्हि सर्वत्रभावाद्व्यापकः[6] समस्तप्रतिष्ठास्थानत्वाच्चाङ्गी ; न[7] चालङ्कारो व्यापकोऽन्यालङ्कारवत् ; न चाङ्गी अलङ्कार्यतन्त्रत्वात्[8] ; अथ

कौमुदी

**भेदान्तराणीति** ॥ वृत्तौ ध्वन्यन्तर्भावमात्रमुक्तम् । तस्यालङ्कारत्वाभावप्रसङ्गपर्यवसायितामाह—**आत्मनीति** ॥ अलङ्कार्यत्वालङ्कारत्वयोः गुणप्रधानभावेन विरुद्धत्वादेकधर्मिविनिवेशायोगादित्यर्थः । कथं ध्वनेः पर्यायोक्तेऽनन्तर्भावोक्तिः, आत्मत्वेनाविशिष्टत्वादुभयोरपि उभयान्तर्भावस्य स्वेच्छया वक्तुं शक्यत्वादित्यत्राह—**यादृश इति** ॥ इहालङ्कार इति विशेष्यपदं यादृश इत्युपसर्जनीभूतव्यङ्ग्यार्थ इत्यर्थः । अनन्तर्भावे हेतुमाह—**न तादृगिति** ॥ "उपसर्जनीकृतस्वार्थौ" इति व्यङ्ग्यप्राधान्ये ध्वनित्वाभिधानादित्यर्थः । एतदेवोपपादयितुं ध्वन्यलङ्कारयोः विरुद्धधर्माक्रान्तत्वात् आत्यन्तिकं भेदं प्रदर्शयति—**ध्वनिर्हीति** ॥ सर्वेष्वप्यलङ्कारेषु व्यावर्तमानेष्वलङ्कार्यतानुवृत्तत्वादित्यर्थः । अपरमपि वैलक्षण्यमाह—**समस्तेति** ॥ समस्तानां गुणादीनां प्रतिष्ठा प्रत्येकमसंकीर्णतया प्रत्यग्रतया प्रतिनियततया च या स्थितिः तस्याः स्थानमास्पदम्, अत एव स्वयमनन्यतन्त्रस्थितिः, तस्य भावस्तत्त्वं तस्मादित्यर्थः । अलङ्कारस्यापि तादृशत्वात्तदन्तर्भावोऽस्त्वित्याशङ्क्याह—**न चेति** ॥ लोकप्रसिद्धकटकाद्यलङ्कारवदित्यर्थः । ननु लोकसिद्धालङ्काराणां व्यापकत्वाद्यभावेऽपि पर्यायोक्तस्याभ्युपगम्यत एव । न चैतावतालङ्कारत्वहानिः ; वस्तुस्वभाववैचित्र्यवाचोयुक्त्यैव तदुभयसंभवविरोधस्य आत्मन एकस्य कर्मकर्तृत्वादिविरुद्धधर्मसमवायवत्, सुपरिहरत्वादिति वैयात्यात् प्रत्यवतिष्ठमानं प्रत्याह—**अथेति** ॥

१. ग. 'नाम' नास्ति ।
२. ग. ङ. 'तथा'
३. क. ख. 'आत्मनि' नास्ति ।
४. ग. 'तत्रेति' नास्ति ।
५. ग. 'तादृशो'
६. क. ख. ग. 'महाविषयः' अधिकः ।
७. ग. 'न वा'
घ. 'न' नास्ति ।
८. ग. 'अतन्त्रत्वात्'

ध्वन्यालोकः

## अङ्गित्वेन च प्रतिपादयिष्यमाणत्वात् । न पुनः पर्यायोक्ते भामहोदाहृतसदृशे

लोचनम्

[1]व्यापकत्वाङ्गित्वे तस्योपगम्येते, [2]त्यज्यते [3]चालङ्कारता, तद्[4]अस्मिन्नय एवायमवलम्ब्यते[5] । केवलं मात्सर्यग्रहात् पर्यायोक्तवार्त्ताति[6] भावः । न चेयद[7]पि प्राक्तनैर्दृष्टम्; अपि [8]त्वस्माभिरेवोन्मीलितमिति दर्शयति—**न पुनरिति** ॥ भामहस्य यादृक्तदीयं रूपमभिमतं

कौमुदी

**अस्मन्नय इति** ॥ आत्मैवायमेवं सति स्यात्, नालङ्कार इत्यर्थः । ननु ध्वनित्वेनात्मत्वेन वा तस्यास्माभिरनभ्युपगमात्, पर्यायोक्तत्वेन च तस्याभ्युपगमात् कथं युष्मन्नयावलम्बनविडम्बनाप्रसङ्ग इत्यत्राह—**केवलमिति** ॥ माधु[मात्स]र्यस्य ग्रहो ग्रहणम्, मात्सर्यहेतुको वा यो ग्रहोऽभिनिवेशः, मात्सर्यमेव वा ग्रहः तदावेशादिति । वृत्तौ "न पुनः" इति पुनःशब्देन "यदि प्राधान्येन" इत्यादिना व्यङ्ग्यप्राधान्यानुवादोऽभ्युपगम्यवाद इति दर्शितम्; तदेतदाह—**न चेति** ॥ **इयदिति** ॥ व्यङ्ग्यस्य प्राधान्यमपि । कुतः तादृशस्यैवालङ्कारत्वमिति भावः । प्राक्तनैर्भामहादिभिः; उन्मीलितम् उत्प्रेक्षितं प्रौढ्यालम्बनेनेत्यर्थः । 'न पुनः पर्यायोक्ते व्यङ्ग्यस्य प्राधान्यम्' इति वक्तव्ये "भामहोदाहृतसदृशे" इति विशेषणम् अभियुक्तमूर्धाभिषिक्तभामहोदाहरणानुरोधित्वादुदाहरणान्तरस्य तदुदाहरणे च व्यङ्ग्यस्याप्राधान्यात् तद्वदेवेतरोदाहरणेष्वपि व्यङ्ग्याप्राधान्यमेव युक्तमिति पर्यायोक्ते व्यङ्ग्याप्राधान्ये हेतुतयोपात्तमित्याह—**भामहस्येति** ॥ न खल्वस्ति संभवः—अन्यादृगभिमतम्

उपलोचनम्

"न चेयदपि" इत्यवतारिकायां लोचनकाराः प्रकाशयन्ति स्वाशयम्—'आनन्दोपक्रमं ध्वनिप्रस्थानम्' इति ॥

१. ग. 'व्यापकाङ्गित्वे'
२. ङ. 'इत्यर्थ्यते' अधिकः ।
३. च. 'नालङ्कार-'
घ. 'न चा-'
४. घ. 'अस्मन्मत एव'
५. ग. '-लम्बते'
क. ख. 'लम्भ्यते न'
६. क. ख. ग. '-भागिति'
७. ग. चेदमपि'
घ. 'चेह यदपि'
८. घ. 'तु' नास्ति ।

## लोचनम्

तादृगुदाहरणेन दर्शितम्; तत्रापि[1] नैव व्यङ्ग्यस्य प्राधान्यं चारुत्वाहेतुत्वात्; तेन तदनुसारितया तत्सदृशं यदुदाहरणान्तरमपि कल्प्यते तत्र नैव व्यङ्ग्यस्य प्राधान्यमिति सङ्गतिः। यदि तु तदुक्तमुदाहरणमनादृत्य "भम धम्मिअ" इत्याद्युदाह्रियते, तदस्मच्छिष्यतैव। केवलं तु[2] नयम[नयमन]वलम्ब्यापश्रवणेनात्मसंस्कार[3] इत्यनार्यचेष्टितम्। यदाहुरैतिहासिकाः—"अवज्ञयाप्यवच्छाद्य शृण्वन्नरकमृच्छति" इति[4]। भामहेन ह्युदाहृतम्[5]—

## कौमुदी

अन्यादृगुदाहृतमिति। तेन तदीयोदाहरणानुरूपतया भामहस्य पर्यायोक्तस्वरूपमभिमतं गम्यत इत्यर्थः। तथापि तदुदाहरणे व्यङ्ग्यप्राधान्यविवक्षणात्तादृगेतदभिमतं किं न स्यादिति नेत्याह—**तत्रापीति**॥ अपिशब्द उदाहरणान्तरसमुच्चयार्थः। प्राधान्याभावे हेतुः—**चारुत्वेति**॥ तच्च वक्ष्यत इति भावः। तथाप्युदाहरणान्तरे व्यङ्ग्यप्राधान्यमस्त्वित्याशङ्क्य किं तन्मतानुसारेण तत्सदृशमुदाहरणान्तरं विवक्षितम्, तद्विसदृशं वा? आद्ये न व्यङ्ग्यप्राधान्यप्रसङ्ग इत्याह—**तेनेति**॥ **सङ्गतिरिति**॥ भामहोदाहृत एव तावन्न व्यङ्ग्यप्राधान्यम्, का कथा तत्सदृशीति योजनेत्यर्थः। ननु—"युक्तियुक्तं तु गृह्णीमो न तु तद्वाक्यगौरवात्" इति न्यायेन भामहभाषितमुदाहरणं नाद्रियामहे, किन्तु व्यङ्ग्यप्राधान्यसंभावनास्थानभूतम् "भम धम्मिअ" इत्यादिकमेवाचक्ष्महे; ततश्च व्यङ्ग्यप्राधान्यमप्याह। तमेवेति द्वितीयं पक्षमाशङ्क्य प्रागुक्तमनुस्मारयन्नाह—**यदि त्विति**॥ **अस्मिन् शिष्यतेति [अस्मच्छिष्यतेति]**॥ अपसिद्धान्तापत्तिरित्यर्थः। तदेव सोपहासं विशदयति—**केवलं त्विति**॥ विधिवद्गुरूपसदनपूर्वकं गुरुमुखादेव शास्त्ररहस्यावबोधमनवष्टभ्येत्यर्थः। अपश्रवणं श्रवणाभासः। आत्मसंस्कारः तत्त्वावबोधजनित आत्मनोऽतीन्द्रियः कश्चिदतिशयविशेषः। अनार्यचेष्टितत्वे प्रमाणमुक्तम्—**यदाहुरिति**॥ अवज्ञया विद्यायां गुरौ चावमानेन हेतुना आत्मनोऽपह्नवं कृत्वा, श्रोतव्यं शृण्वन् श्रोता नरकं प्राप्नोति। किं तत् भामहेनोदाहृतमिति तदाह—**भामहेनेति**॥ पर्यायेणावगमात्मना प्रकारान्तरेण। रसशब्दोऽत्र विषवाचकः।

१. क. ख. 'तत्र चैव न' ग. '-वरणे-'
२. क. ख. ग. 'तन्नय-' घ. 'तु नयमल-'
३. क. ख. 'धंश्रवणे-'
४. घ. च. 'इति' नास्ति।
५. क. ख. '-प्युदाहृतम्' घ. 'हि' नास्ति।

ध्वन्यालोकः

व्यङ्ग्यस्यैव प्राधान्यम्, वाच्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात् । अपह्नुति-दीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्यानुयायित्वं प्रसिद्धमेव ॥

लोचनम्

"गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः ।
विप्रा न भुञ्जते..................... ॥" इति ।

एतद्धि भगवद्वासुदेववचनं पर्यायेण रसदानं निषेधेति । यत्स एवाह—
.................."तच्च रसदाननिवृत्तये" इति । न चास्य रसदाननिषेधस्य व्यङ्ग्यस्य किंचिच्चारुत्वमस्ति येन प्राधान्यं शङ्क्येत । अपि तु तद्व्यङ्ग्योपोद्बलितं विप्रभोजनेन विना यन्न भोजनं तदेव उक्तप्रकारेण पर्यायोक्तं सत् प्राकरणिकं भोजनार्थमलंकुरुते ; न ह्यस्य निर्विषं भोजनं भवत्विति विवक्षितमिति पर्यायोक्तमलंकार एवं चिरंतनानामभिमत इति तात्पर्यम् ॥ **अपह्नुतिदीपकयोरिति** ॥ एतत्पूर्वमेव निर्णीतम्, अत एवाह—**प्रसिद्धमिति** ॥ प्रतीतं प्रसाधितं

कौमुदी

तत्र गमकमाह—**यदिति** ॥ **तद्व्यङ्ग्येति** ॥ तेन रसदाननिषेधेन व्यङ्ग्येन । तदेव तद्वाच्यमेव । उक्तप्रकारेणावगमात्मना प्रकारान्तरेणोपलक्षितत्वेन । न केवलं व्यङ्ग्यस्य चारुत्वाभावादेवाप्राधान्यम्, अविवक्षितत्वाच्चेत्याह—**न हीति** ॥ अस्य भगवतः । उपसंहरति—**इति पर्यायोक्तमिति** ॥ एतद्वाच्यस्य प्राधान्यं व्यङ्ग्यस्यानुयायित्वं च ॥ **पूर्वमिति** ॥ "यथा च दीपके" इत्यादिनेति शेषः । समासोक्त्यादिभ्यो दीपकादौ विशेषतः कीदृशी तत्प्रसिद्धिरित्याशङ्क्य प्राङ्निर्णीतत्वापेक्षं तद्वचनमित्याह—**अत एवेति** ॥ सिद्धिशब्दस्य ज्ञप्त्यर्थाङ्गीकारेणाह—**प्रतीतमिति** ॥ अस्य प्रयोजकव्यापारपर्यवसायितयार्थमाह—**प्रसाधितमिति** ॥ ज्ञप्त्यर्थाङ्गीकारेणैव सिद्धेः प्रमाणजन्यत्वरूपप्रकर्षवाचकोपसर्गसामर्थ्याव-

१. क. ख. ग. '-तिनौ'
२. क. ख. ग. '-धयति'
३. ङ. 'तत्' नास्ति ।
४. क. ख. ग. 'यदन्न-'
५. ख. ग. 'तेन'
६. क. 'निर्विशेषं'
७. ख. 'भवतीति'
ग. 'भोजनं त्विति'
क. ख. ग. 'एवेति'
ष. 'प्रसारितम्'

लोचनम्

प्रामाणिकं[1] चेत्यर्थः । पूर्वं चैतत् 'उपमादिव्यपदेशभाजनमेव[2][3] तद्यथा[4] न भवति' इत्यमुया छायया दृष्टान्ततयोक्तमपि, उद्देशक्रमपूरणाय[5] ग्रन्थशय्यां योजयितुं पुनरप्युक्तम् 'व्यङ्ग्यप्राधान्याभावान्न[6] ध्वनिः' इति छायान्तरेण । वस्तु पुनरेकमेव । उपमाया

कौमुदी

लम्बेनाह—**प्रामाणिकमिति** ॥ तथाप्युक्तस्यैवाधुनाप्यभिधानात् पौनरुक्त्यमपरिहार्यमित्याशङ्क्य स्वरूपैक्येऽपि प्रकारभेदाददोष इत्याह—**पूर्वं चेति** ॥ चकारः समुच्चये । न केवलमिदानीमेव, पूर्वमपीति । एतत् दीपकादि पूर्वमुक्तमपीति संबन्धः । कथमेतत् पूर्वमुक्तमित्यत उक्तम्—'तत् दीपकादि, उपमादिव्यपदेशभाजनमेव न दीपकादिव्यपदेशभाजनमिति यथा न भवति' इति येयं छाया प्रकारः तया; उपलक्षणमेतत्; दृष्टान्तत्वेनोक्तं पूर्वमिति योजना । कया पुनश्छाययेदानीं उच्यत इत्याह—**व्यङ्ग्यप्राधान्याभावादिति** ॥ ननु व्यङ्ग्याप्राधान्यस्यैव व्यपदेशाभावध्वनित्वाभावयोः हेतुत्वाद्व्यपदेशाभाववत् ध्वनित्वाभावोऽपि तद्धेतुबलादेव सुज्ञान इति छायान्तरेणापि तदुक्तिर्नात्यन्तायार्थवतीत्याशङ्क्य तत्प्रयोजनमाह—**उद्देशेति** ॥ "पर्यायोक्तापह्नुतिदीपक" इति योऽयमुद्देशक्रमस्तस्याः परिपूर्तिरपह्नुतिदीपकयोः व्यङ्ग्याप्राधान्योक्तौ स्यात् । तत्परिपूर्तेरपि मुखतः प्रतीत्यभावेऽप्यर्थात् सिध्यन्त्या उक्तिः किमर्थेत्यत उक्तम्—**ग्रन्थशय्यां योजयितुमिति** ॥ शय्या नाम एकरूपः सन्निवेशविशेषः; तत्संपादनमस्य प्रयोजनम्; अन्यथास्य प्रकरणस्यान्तर[रा]विच्छेदप्रतीतेः श्रोतृजनमानसखेदाविर्भावो दुर्वार इत्यर्थः । वस्तु उपमारूपव्यङ्ग्याप्राधान्यरूपम् । तत्र हेतुः—**उपमाया इति** ॥ ननु दीपके व्यङ्ग्यत्वेनोपमाया ध्वनित्वाशङ्कैव नास्ति; तदैव हि सा स्यात्,

१. क. ख. 'प्रामाणिकं' नास्ति ।
ग. 'चेत् प्रमाणितं'
२. घ. 'उपमान-'
३. क. ख. ग. 'एव' नास्ति ।
४. क. ख. ग. 'एतद्यथा'
५. क. ख. 'उद्देश्यक्रम-'
ग. 'उद्देशानुक्रम-'
६. क. ख. ग. 'व्यङ्ग्यम्'

लोचनम्

एव व्यङ्ग्यत्वेन ध्वनित्वाशङ्कनात् । यत्तु विवरणकृत्—"दीपकस्य सर्वत्रोपमान्वयो [1]नास्ति" इति बहुनोदाहरण[2]प्रपञ्चेन वि[3]चारितवान्, तदनुपयोगि निस्सा[4]रं सप्रतिक्षेपं च ॥

"म[5]दो जनयति प्रीतिं सानङ्गं[6] मानभङ्गुरम्[7] ।
स प्रियासङ्गमोत्कण्ठां सासह्यां मनसः शुचम्[8] ॥" इति ।

अ[9]त्राप्युत्तरोत्तरजन्य[10]त्वेऽप्युपमानोपमेयभावस्य सु[11]कल्पत्वात् । न हि क्रमिकाणां नोपमानोपमेयभावः । तथा हि—

कौमुदी

यदि सर्वत्र व्यङ्ग्यतयोपमान्वयो न व्यभिचरेत्; स तु क्वचिदेव, तद्रहितानामपि बहूनामुदाहरणानामुपलम्भात् । अतो न दीपके ध्वनित्वशङ्कावसर इति विवरणकारस्य विचारप्रकारमुपक्षिप्य प्रतिक्षिपति—**यत्त्विति** ॥ यत्र व्यङ्ग्यप्रतीतिः तत्र ध्वनेरन्तर्भावशङ्का ह्यत्र प्रस्तुता, न सर्वालङ्कारेषु; तत्र दीपकेऽपि यत्र नास्ति तत्र मा भूत्; यत्र पुनरस्ति तत्र ध्वन्यन्तर्भावशङ्का कुतो न स्यात्—इत्युपमान्वयनैयत्यविचारस्यानुपयोगित्वम्; तथालङ्कारस्वरूपविचारस्याप्रस्तुतत्वात् अनुपयोगित्वम् निःसारत्वम् । इयतोऽस्यार्थस्य बहुना प्रपञ्चेन विचारणात् । सुप्रतिषेधत्वमुपपादयति—**मद इति** ॥ मदो विशिष्टविषयनिषेवणसमुन्मीलितो हर्षविशेषः । प्रीतिः विशिष्टविषयाभिषङ्गरूपा । मानभञ्जनमित्यनङ्गविशेषणम् । उत्तरोत्तरजन्यत्वेऽपीति क्रमिकत्वमुक्तम् । ननूपमानोपमेयभावस्य मुखचन्द्राद्यक्रमिकवस्तुष्वेव दृष्टत्वात् कथं क्रमिकेषु तत्कल्पनं दृष्टानुसारित्वात् कल्पनाया इत्याशङ्क्य अदर्शनमसिद्धमित्याह—**न हीति** ॥ दर्शनमेव स्फोरयति—**तथा हीति** ॥

उपलोचनम्

"मदो जनयति" इति पद्ये "सानङ्गं मानभङ्गुरम्" इति पाठ एव वामनकाव्यालङ्कारसूत्रवृत्त्यादृत इति स एव उपरि निवेशितः । कौमुद्यां तु "मानभञ्जनम्" इत्यर्वाचीनपाठः समादृतः ॥

१. क. ख. ग. 'न' नास्ति ।
२. क. ख. 'उदाहरणादेः'
घ. ङ. 'उदाहरणानि'
च. 'उदाहरणादिप्र-'
३. क. ख. 'विस्तारितवान्'
४. क. ख. 'नितराम्'
५. क. ख. 'अत्र हेतुमाह—मद इत्यादि सुकल्पत्वात् इत्यन्तम्' अधिकः
६. घ. 'सानन्दम्'
७. घ. ङ. च. '-भञ्जनम्'
८. घ. 'शुचिं'
९. घ. 'अत्र च'
१०. क. ख. 'जन्यत्वेन'
११. ग. 'विकल्पत्वात्'

ध्वन्यालोकः

संकरालंकारेऽपि यदालंकारोऽलंकारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य

लोचनम्

"राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः ।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥"

इति [1]न न भवति ; तस्मात् क्रमिकत्वम्, समं वा प्राकरणिकत्वमुपमां [2]रुणद्धीति कोऽयं त्रास इत्यलं गर्दभीदोहानुवर्तनेन ॥

सङ्करालङ्कारेऽपीति ॥

"विरुद्धालंक्रियोल्लेखे समं [3]तद्वृत्त्यसम्भवे ।
एकस्य च [4]ग्रहे न्यायदोषाभावात्[5] स सङ्करः ॥"

इति लक्षणादेकः प्रकारः । यथा ममैव—

"शशिवदनासितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसम्भवहृद्याकारा कृता विधिना ॥" इति ।

कौमुदी

न न भवति भवत्येव । सोपहासमुपसंहरति—तस्मादिति ॥ समं वेति ॥ "मणिः शाणोल्लीढः" इत्यादिविषयम् ; तत्र हि व्यक्तमेव मण्यादीनां प्राकरणिकत्वेन साम्यम् ; साधारणधर्मसम्बन्ध एव हि सर्वात्रोपमानोपमेयभावजीवितं नान्यत् किञ्चित् । स चार्थः शाब्दो वास्त्विति क्रमवत्सु सर्वेषु प्राकरणिकेष्वेव वासौ संभवत्येवेत्यर्थः । यत्रालङ्काराणां क्षीरनीरनीत्या स्फुटभेदतया संश्लेषः स सङ्करालङ्कारः । स च चतुर्विधः, सन्देहैकवाक्यवर्तनैकवाक्यांशवर्तनानुग्राह्यानुग्राहकभावभेदात् । तत्रादौ सन्देहसङ्करे ध्वनित्वाभावं व्युत्पादयितुमाह—विरुद्धेति ॥ उल्लेख उल्लासः । समं युगपत् । तयोर्विरुद्धयोरलंक्रिययोर्वृत्तेर्वर्तनस्यासम्भवे सतीत्यर्थः । एकस्यालङ्कारस्यान्यालङ्कारत्यागेन ग्रहणे

१. क. ख. ग. 'न तु'
२. क. ख. ग. 'निरुणद्धि'
३. क. ख. च. 'तद्व्यक्त्य-' घ. 'तद्वृत्त-'
४. क. ख. 'वचो न्याय-'
५. क. ख. '-दोषाभावेऽपि' ग. घ. ङ. '-दोषाभावे च'

## लोचनम्

अत्र च[1] शशी वदनमस्याः, तद्वद्वा वदनमस्या इति रूपकोपमोल्लेखात्[2] युगपद्द्वया-सम्भवादेकतरपक्षत्यागग्रहे[3] प्रमाणाभावात् संकर इति व्यङ्ग्यवाच्यतायाः[4] एव अनिश्चयात् का ध्वनिसंभावना? योऽपि द्वितीयः प्रकारः—'शब्दार्थालंकाराणामेकत्र[5] भावः' इति तत्रापि प्रतीयमानस्य का शङ्का? यथा—"स्मर स्मरमिव प्रियं रमसे[6] रमसे यदालिङ्गनात्" इति। तत्रैव[8] यमकमुपमा च। तृतीयः प्रकारः—

## कौमुदी

क्रियमाणे, न्यायः साधकं प्राणम्[प्रमाणम्]; दोषः बाधकम्, तयोरभावादिति उदाहरणे लक्षणं यो[योजयन्] ध्वनिसम्भावनां निराचष्टे—अत्र चेति॥ "मयूरव्यंसकादयश्च" इति रूपकसमासात् 'उपमितं व्याघ्रादिभिः" इत्युपमासमासाच्चेत्यर्थः॥ **एकतरपक्षत्यागग्रह इति**॥ एकतरस्य पक्षस्य त्यागे ग्रहणे चेत्यर्थः॥ **व्यङ्ग्यवाच्यताया इति**॥ को व्यङ्ग्यः को वा वाच्य इत्यनिश्चयात् काव्यं[कास्य]व्यङ्ग्यप्राधान्यकृतध्वनित्वसम्भावना-पीत्यर्थः। संप्रत्येकवाक्यवर्तनलक्षणसङ्करमाह—**योऽपीति**॥ शब्दालङ्काराणामर्थालङ्काराणां च॥ **एकत्रेति**॥ वाक्ये भावः सद्भावः॥ **तत्रापीति**॥ तस्मिन् संरम्भ[संकर]भेदेऽपि तदेवोपपादयन्नुदाहरणमाह—**स्मर यथेति[यथा स्मरेति]**॥ उदाहरणे लक्षणं योजयति—**तत्रैवेति**॥ तस्मिन्नेकस्मिन्नेव वाक्ये अयं[यमकं] चोपमा च वर्तेते इत्यर्थः। तत्रोपमाया वाच्यत्वनिश्चयात् स्मरशब्दयमकस्य च वाचकालङ्कारत्वादेव व्यङ्ग्यत्वाभावान्न प्रतीयमानशङ्कापीत्यर्थः। अथैकवाक्यांशावर्तनलक्षणं सङ्करभेदमाह—**तृतीय इति**॥ **यत्रेति**॥ वाक्ये॥ **साम्यादिति**॥ वाच्यत्वाविशेषादित्यर्थः। उदाहरणं लक्षणयोजनं च क्रमेण दर्शयति—**यथेत्यादिना**॥ स्वामिनो विपत्तौ सत्यां समुचितं

१. क. ख. ग. 'च' नास्ति।
२. घ. '-ल्लोलात्'
३. क. ख. '-ग्रहणे'
४. घ. 'व्यङ्ग्य-' नास्ति।
५. ङ. '-तया'
६. क. ख. 'एको भावः'
ग. 'एकत्र भासते'
७. क. ख. 'न रमसे'
ग. 'रमयसे'
८. क. ख. ग. 'अत्रैव'
च. 'अत्रैव च'

## लोचनम्

यत्रैकत्र वाक्यांशेऽनेकोऽर्थालंकारः तत्रापि द्वयोः साम्यात् कस्य व्यङ्ग्यता । यथा—

"तुल्योदयावसानत्वाद्गतेऽस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमोगुहाम् ॥" इति ।

अत्र हि स्वामिविपत्तिसमुचितव्रतग्रहणहेवाकिकुलपुत्रकरूपणमेकदेशविवर्तिरूपकं दर्शयति । उत्प्रेक्षा चेवशब्देनोक्ता । तदिदं प्रकारद्वयमुक्तम् ।

"शब्दार्थवर्त्यलंकारा वाक्य एकत्र वर्तिनः ।
संकरो वैकवाक्यांशप्रवेशाद्वाभिधीयते ॥" इति ।

चतुर्थस्तु प्रकारः यत्रानुग्राह्यानुग्राहकभावोऽलंकाराणम् । यथा—

"प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः ।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥"

## कौमुदी

यद्व्रतग्रहणम्, तत्र हेवाकी स्वयं प्रवृत्तो यः कुलपुत्रकस्तद्रूपणं यद्वासरविषयं तदेकम् तदेकदेशविवर्ति तमोगुहामिति तमसो गुहात्वविषयं रूपकं कर्तुं[कर्तृ] दर्शयति । क्रमेण भास्वतः स्वामित्वम्, अस्तंगमनस्य विपत्तित्वम्, गुहानिवासस्य व्रतग्रहणत्वम्, तमःप्रवेशस्य तदर्थव्यापारत्वम्, वासरस्य कुलपुत्रकत्वं च तमसो गुहात्वरूपणेन शाब्देन अर्थात् सिद्धं भवतीत्यर्थः । अथवा एकदेशविवर्तिरूपकस्य विशेषणत्वेन योज्यम् कुलपुत्रकरूपणमिति ; यथोक्तकुलपुत्रकरूपणमवगम्यमानम् यत्रेति ; यदि वा रूपयतीति रूपणमिति ; दर्शयति "तमोगुहाम्" इत्यंशेन कविरिति शेषः । तत्रैवालङ्कारान्तरप्रतीतिमासूचयति—**उत्प्रेक्षेति** ॥ अनयोर्भेदयोर्भट्टोद्भटादिमतत्वम् आह—**तादिदमिति** ॥ प्रकारान्तरम् आह—**चतुर्थ इति** ॥

१. क. ख. 'यत्रैकवाच्यांशे'
२. क. ख. 'एकस्य'
३. क. ख. 'कान्तौ'
४. घ. '-दीपन-'
५. ग. घ. च. '-वृत्त्यलं-'
६. क. ख. 'भाविनः'
७. ग. '-रश्चैक-'
८. ग. '-प्रवेशश्चा-'
९. क. ख. ग. 'च' अधिकः ।

## लोचनम्

अत्र मृगाङ्गनावलोकनेन[1] तदवलोकनस्योपमा यद्यपि व्यङ्ग्या, तथापि वाच्यस्य सं[2]संदेहालंकारस्याभ्युत्थानकारिणीत्वेन अनुग्राहकत्वाद्गुणीभूता । अनुग्राह्यत्वेन हि सं[3]संदेहे पर्यवसानम् । यथोक्तम्—

"परस्परोपकारेण यत्रालंकृतयः स्थिताः ।
स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि संकरः ॥" इति[4] ।

तदाह—**यदालंकार इत्यादि** ॥ एवं चतुर्थेऽपि प्रकारे ध्वनिता निराकृता । मध्यमयोस्तु व्यङ्ग्यसंभावनैवे[5] नास्तीत्युक्तम् । आद्ये तु प्रकारे "शशिवदना" इत्याद्युदाहृते

## कौमुदी

नन्वस्मिन् प्रकारे प्रागुक्तप्रकारद्वय इव न व्यङ्ग्यालङ्काराभावः, वाच्यात् सन्देहालङ्कारादन्यस्योपमालङ्कारस्य व्यङ्ग्यस्यात्र विद्यमानत्वादिति तत्र ध्वनिसंभावनास्त्येवेति शङ्कामनुभाष्य दूषयति—**अत्रेति** ॥ न हि साधर्म्यविरहे सन्देह उत्थातुमर्हति, अन्यथा सर्वत्र सन्देहप्रसरप्रसङ्गादिति भावः । अनुग्राहकत्वेऽपि कुतो गुणीभाव इत्याशङ्क्यानुग्राह्यालङ्कारप्रतीतिपर्यवसायित्वादित्याह—**अनुग्राह्यत्वेन हीति** ॥ अनुग्राहकालङ्कारस्येति शेषः । अत्राप्युद्भटाभिमतत्वं दर्शयितुं तदीयं वचनमाह—**यथोक्तमिति** ॥ परस्परोपकारेण अनुग्राह्यानुग्राहकभावेन । स्वातन्त्र्येण अन्यानपेक्षया । आत्मलाभं नो लभन्ते आत्मानं नोपलभन्ते इत्येतत् । अस्मिंश्चतुर्थभेदे ध्वन्यभावपरतया वृत्तिग्रन्थमवतारयति—**तदाहेति** ॥ तदेव स्पष्टयति—**एवमिति** ॥ "यदालङ्कारः" इत्याद्युक्तप्रकारेणेत्यर्थः । मध्यमप्रकारयोः किमिति ध्वनित्वशङ्का ग्रन्थे न निराकृतेत्याशङ्क्य शङ्काभावादेवेत्याह—**मध्यमयोस्त्विति** ॥ **उक्तमिति** ॥ समनन्तरमिति शेषः । ननु सन्देहसङ्करेऽपि प्रागुन्मीलितदिशा ध्वनित्वासम्भवात् किमर्थं ग्रन्थे तत्प्रतिपादनमित्याशङ्क्य मध्यमप्रकारद्वय इव व्यङ्ग्यात्यन्ताभावाभावात् कस्यचित् ध्वनित्वसम्भावनोत्पत्तेरुपयोग्येव तन्निराकरणमित्याह—**आद्ये त्विति** ॥ कुतः प्राधान्यस्य

१. घ. 'ङ्गनाभिरव'
२. क. ख. ग. 'सा'
३. क. ख. ग. 'सन्देहे'
४. क. ख. ग. 'इति' नास्ति ।
५. घ. ङ. च. 'एव' नास्ति ।

ध्वन्यालोकः

प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम् । अलंकारद्वयसंभावनया तु वाच्य-

लोचनम्

कथंचिदस्ति संभावनेत्याशङ्क्य निराकरोति—अलंकारद्वयेति ॥ सममिति ॥ द्वयोरप्यान्दोल्यमानत्वादिति भावः । ननु यत्र व्यङ्ग्यमेव प्राधान्येन भाति तत्र किं कर्तव्यम् ? यथा

"होइ ण गुणाणुराओ खेलाणँ णवरं पसिद्धिसँरणाणम् ।
किर पॅह्लवइ ससिमॅणी चन्दे ण पिआमुहे दिट्ठे ॥"

कौमुदी

समत्वमित्याशङ्क्याह—द्वयोरपीति ॥ ननु सङ्करालङ्कारे कुत्र व्यङ्ग्यस्य प्राधान्येनावस्थानं यत्र ध्वनिविषयत्वमनुज्ञातमित्याशङ्क्य तद्विषयं दर्शयितुं शङ्काग्रन्थं विवृणोति—ननु यत्रेति ॥ सङ्करालङ्कारे ॥

"भवति न गुणानुरागः खलानां केवलं प्रसिद्धिशरणानाम् ।
[किल] प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥"

गुणेषु परैः वर्ण्यमानेष्वपि स्वयं ज्ञातेष्वपि 'गुणा एव स्वीकर्तव्याः' इति प्रयत्नतः प्रतिबोध्यमानानामपि खलस्वभावत्वादेव स्वभावस्य विपरिवर्तयितुमशक्यत्वान्न तेषु खलानामनुराग उत्पद्यते ; उत्पत्त्यधीना तद्विशेषवार्ता ; तदभावे तु किं क्रियतामित्यर्थः ; यतोऽमी वराका गड्डरिकाप्रवाहपतिता विवेकवार्ताविरहितपामर-प्रायलोकप्रसिद्धिमात्रावष्टब्धबुद्धय एव, न तु वस्तुसतत्त्वविमर्शलेशशालिनः, तत्सम्भवेऽपि कथञ्चिन्निरूढनिबिडतरलोकप्रसिद्धिवासनाशतपरवशीक्रियमाणमानसा एव । एतत्प्रसाधनार्थं विशेषविषयमर्थान्तरन्यासमाह—यद्ययं शशिमणिरणीयस्यपि गुणे गुणितानुरागः स्यात्, तदा सकलसंसारसारसर्वस्वभाजने भामिनीवदनकोकनदे

१. च. 'किं तु' अधिकः ।
२. घ. 'वलननपरव'
३. ब 'ह्णणाण'
४. घ. 'वण्णुव'
ङ. च. 'पण्ण'
५. क. ख. ग. 'सिमणं'

ध्वन्यालोकः

व्यङ्ग्ययोः समं प्राधान्यम्। अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रावस्थानं तदा सोऽपि ध्वनिविषयोऽस्तु, न तु स एव ध्वनिरिति वक्तुं शक्यम्, पर्यायोक्तनिर्दिष्टन्या-

लोचनम्

अत्रार्थान्तरन्यासस्तावद्वाच्यत्वेन भाति, व्यतिरेकापह्नुती तु व्यङ्ग्यत्वेन प्रधानतयेत्यभिप्रायेणाशङ्कते—**अथेति** ॥ तत्रोत्तरम्—**तदा सोऽपीति** ॥ सङ्करालङ्कार एवायं न भवति, अपि त्वलङ्कारध्वनिर्नामायं ध्वनेर्द्वितीयो भेदः । यच्च पर्यायोक्ते निरूपितं तत्सर्वमत्राप्यनुसरणीयम् । अथ सर्वेषु संकरप्रभेदेषु व्यङ्ग्य-

कौमुदी

नयनपदवीमवतरत्येव सत्येकान्ततो विनिःष्यन्देत ; न त्वेवम्, किन्तु चन्द्रबिम्बसन्दर्शनसमयैकनिःष्यन्दनशीलत्वनिमित्तप्रवृत्तचन्द्रमणिशब्दवाच्यत्वप्रसिद्धिमात्रावष्टम्भेन जडिमादिबहुदोषकलुषीकृतनिःसारचन्द्रशब्दवाच्यक्षुद्रतरपदार्थविशेषदर्शन एव निर्भरहृष्यदखिलाङ्गतया निःष्यन्दते । अर्थान्तरन्यासस्य वाच्यत्वं तावद्युक्तम् । चन्द्रापेक्षया प्रियामुखस्याधिकगुणत्वावगमात् व्यतिरेकः 'नायं चन्द्रः प्रियामुखमेव तु सः' इत्यपह्नुतिश्च व्यङ्ग्यत्वेनावगम्येते ; तयोरेव चमत्कारकारित्वात् प्राधान्यं चेति ध्वनित्वमप्रत्यूहमत्र व्यवस्थितमित्यर्थः । प्रधानतया व्यङ्ग्यत्वेन भात इत्यन्वयः ; अथवा व्यङ्ग्यत्वेन प्रधानतया च भात इति । नन्वेवं सति सङ्करालङ्कारत्वं ध्वनित्वं चैकत्र सन्निपतेत् ; तच्च गुणप्रधानभावविरोधादनुरोद्धव्यमिति कथं तत्र ध्वनिविषयत्वोक्तिरित्यत्राह—**संकरालङ्कार एवेति** ॥ "न तु स एव" इत्यादेः व्याख्यातप्रायत्वमाह—**यच्चेति** ॥ "क्वचित् संकरालङ्कारे" इत्युक्तत्वात् "अपि च" इत्यादिग्रन्थस्य संकरालङ्कारविशेषविषयत्वमापातप्रतीयमानमपाकर्तुं तात्पर्यमाह—**अथेति** ॥ उक्त-

१. क. ख. 'तत्राप्यवस्थानम्'
२. क. ख. ग. 'आभाति'
३. घ. ङ. 'अत्र'
४. ग. 'अलङ्कारध्वनिर्नामायम्' नास्ति ।
५. क. ख. 'ध्वनिनामा'
६. ग. 'यत्तु'
७. क. ख. 'मप्यत्रानु'

ध्वन्यालोकः

यात्। अपि च संकरालंकारेऽपि[1] च क्वचित् संकरोक्तिरेव ध्वनिसंभावनां निराकरोति[2]।

लोचनम्

संभावनानिरासप्रकारं साधारणमाह—अपि चेति ॥ 'क्वचिदपि संकरालंकारे च' इति संबन्धः। सर्वभेदभिन्न इत्यर्थः। [3]संकीर्णता तु[4] मिश्रत्वं [5]लोलीभावः; तत्र कथमेकस्य प्राधान्यं क्षीरजलवत्?

"अधिकारादपेतस्य[6] वस्तुनोऽन्यस्य या स्तुतिः।
अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्तिता[7] ॥"

अप्रस्तुतस्य वर्णनं प्रस्तुताक्षेपिण इत्यर्थः। स [8]चाक्षेपस्त्रिभिः[9] प्रकारैर्भवति—

कौमुदी

तात्पर्यार्थानुगुण्येनैव क्रमभञ्जनेन "अपि च क्वचित्" इत्यत्र सङ्गतिमाह—क्वचिदपीति ॥ सम्बन्धमुट्टङ्क्य वैस्पष्ट्यार्थमर्थमाह—सर्वभेदभिन्न इत्यर्थ इति ॥ संकरोक्तेरेव ध्वनित्वबुद्ध्युत्पत्तिनिरोद्धृत्वमुक्तम्। तत् कथमित्यपेक्षायामाह—संकीर्णता त्विति ॥ तुरवधारणे। मिश्रत्वं न सम्बन्धमात्रं तिलतण्डुलवत्, किन्तु क्षीरनीरवदात्यन्तिकः संश्लेष इत्याह—लोलीभाव इति ॥ सामान्यानवधारणे विशेषावधारणस्याशक्यत्वात् प्रथमं सामान्यलक्षणमाह—अधिकारादिति ॥ अधिकारः प्रस्तुतत्वम्; तदेवत[तदपेत]त्वमप्रस्तुतत्वम्। एतदाह—अप्रस्तुतस्येति ॥ स्तुतिशब्दार्थमाह—वर्णनमिति ॥ नन्वप्रस्तुतस्य वर्णनमयुक्तम्, अप्रतिपिपित्सितार्थप्रतिपादनेन वक्तुरनवधेयवचनत्वप्रसङ्गात् इत्यत्राह—प्रस्तुताक्षेपिण इति ॥ आक्षेप आकर्षणम्। लक्षणे यदप्रस्तुतप्रशंसायास्त्रैविध्यमुक्तम्, तत् प्राणभूताक्षेपत्रैरूप्यकृतमित्याह—स चेति ॥ के

१. क. ख. ग. 'संकरालंकारस्य'
२. क. ख. ग. 'करोति'
३. ग. 'संकीर्णं'
४. क. ख. 'तु' नास्ति। घ. 'हि'
५. घ. 'अलोली-'
६. ग. 'रानपेतस्य'
७. क. ख. 'परिकल्पिता'
८. क. ख. ग. 'च' अधिकः।
९. क. ख. 'त्रिविधः'

ध्वन्यालोकः

**अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तनिमित्तिभावाद्वा, [१]अभिधीयमानस्य अप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभिसंबन्धः, तदा [२]अभिधीयमानप्रतीयमानयोः**

लोचनम्

सामान्यविशेषभावात्, निमित्तनिमित्तिभावात्, सारूप्याच्च। तत्र प्रथमे प्रकारद्वये प्रस्तुताप्रस्तुतयोस्तुल्यमेव प्राधान्यमिति प्रतिज्ञां करोति—**"अप्रस्तुत"** इत्यादिना **"प्राधान्यम्"** इत्यन्तेन। तत्र सामान्यविशेषभावेऽपि द्वयी गतिः—सामान्यमप्राकरणिकं शब्देनोच्यते, गम्यते तु प्राकरणिको विशेषः, स एकः प्रकारः। यथा—

कौमुदी

ते प्रकारा इत्यत्रोक्तम्—**सामान्येति** ॥ अयं च प्रकारत्रयनियमः "यदा सामान्यविशेषभावात्" इत्यादिवृत्तिग्रन्थे क्रमेण तदनुवा[वादा]त्सिध्यन्निह सुग्रहत्वाय ग्रन्थकृतोपवर्णितः। एवं लक्षणं तत्प्रकारभेदं चोपदिश्य "अप्रस्तुतप्रशंसायाम्" इति ग्रन्थस्य साधारण्येन प्रथमप्रकारद्वये ध्वन्यभावप्रदर्शकत्वमाह—**तत्र प्रथम इति** ॥ नन्वनेनैव ग्रन्थेन तुल्यप्रधानत्वसिद्धौ "यदा तावत्" इत्यादेः "अयमेव न्यायः" इत्यन्तस्य आनर्थक्यमाशङ्क्य अनेन सामान्यमुखेन प्रतिज्ञैव क्रियते; प्रतिज्ञातोपपादकत्वेनोत्तरग्रन्थारम्भ इति न वैयर्थ्यमिति वक्तुमाह—**प्रतिज्ञां करोतीति** ॥ कियतो वा वृत्तिग्रन्थस्य प्रतिज्ञारूपत्वमित्यत उक्तम्—**प्राधान्यमित्यन्तेनेति** ॥ "निमित्तनैमित्तिकभावे च" इत्यतः प्राक्तनग्रन्थेन प्रथमप्रकारस्यापि द्विप्रकारत्वं सिद्धवत्कृत्य तयोर्द्वयोरपि प्रकारयोः प्राधान्यसाम्योक्त्या ध्वनित्वनिरासेन प्रथमप्रकारविषयप्रतिज्ञोपपादिता। तत्र किं तत् प्रकारद्वयम्, कथं वा तत्र प्राधान्यसाम्यमित्यपेक्षायामाह—**तत्रेति** ॥ तयोः प्रकारयोः मध्य इत्यर्थः। गतिः प्रकारः। अप्राकरणिकमप्रस्तुतम्, प्राकरणिकः प्रस्तुतः ॥ **स एक इति** ॥ सामान्याद्विशेषप्रतीतिरूपः। उदाहरति—**यथेति** ॥

उपलोचनम्

क. ख. ग. मातृकासु दृष्टस्य पाठस्य एवं योजना—अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावात् निमित्तनिमित्तिभावाद्वा 'प्रस्तुताक्षेपः' इति शेषः; अभिधेयप्रतीयमानयोरित्यस्य 'तदा' इत्यादिः ॥

१. क. ख. ग. 'अभिधीय......संबन्धः' नास्ति। २. क. ख. ग. 'अभिधेयप्रतीयमानयोः'

## लोचनम्

"अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम् ।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥"

अत्र हि दैव[1]प्राधान्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितं सत् प्रकृते क्वापि[2] वस्तुनि[3] विनष्टे विशेषात्मनि पर्यवस्यति । तत्रापि च[4] विशेषांशस्य सामान्येन व्याप्यत्वाद्व्यङ्ग्य[5]विशेषवद्वाच्यसामान्यस्यापि[6] प्राधान्यम् । न हि सामान्यविशेषयोर्युगपत्

## कौमुदी

अत्र अप्रस्तुतप्रस्तुतयोः सामान्यविशेषरूपयोः वाच्यत्वव्यङ्ग्यत्वे दर्शयति—**अत्र हीति** ॥ **सर्वत्र सामान्यरूपमिति** ॥ संसारनैर्घृण्यादौ सामान्यरूपमनुगतम् ; न हि दैवप्राधान्यं विशेषतः कुत्रचिद्विशेषरूपे साधारण्येन निविशते, सर्वत्रापि तदायत्तस्थितित्वादित्यर्थः ॥ **क्वापीति** ॥ प्रेयसीपुत्रादिरूपे । अत्र व्यङ्ग्यवाच्ययोस्तुल्यप्राधान्यं दर्शयति—**तत्रापि चेति** ॥ ननु व्यङ्ग्यविशेषस्य तावदस्तु प्राधान्यम्, व्यङ्ग्यत्वाद्विशेषरूपत्वाच्च ; वाच्यस्य तु कथं तद्वत् प्राधान्यं वाच्यत्वात् सामान्यरूपत्वाच्चेत्याशङ्क्याह—**विशेषांशस्येति** ॥ विशेषो हि सामान्येन सर्वत्र व्याप्यते, अन्यथा सामान्यत्वस्यैवानिष्पत्तेः ; न च वैपरीत्येन व्याप्यव्यापकभावः ; अतो विशेषप्राधान्यनान्तरीयकता[तया] सामान्यप्राधान्यस्यापि सिद्धेर्द्वयोः प्राधान्यं सममेवेत्यर्थः । नन्वेवमप्येकस्मिन् वाक्ये कथं द्वयोर्युगपत् प्राधान्येन विषयभावः गुणप्रधानतयैव अन्वयनैयत्यात्, इतरथा एकस्यैकदैव गुणत्वं प्रधानत्वं च विरुद्धमापद्येतेत्याशङ्क्य सामान्यविशेषवस्तुव्यतिरिक्तविषय एवायं नियमः, तयोस्तु नित्यसंश्लिष्टमूर्तित्वादेवाभेदसहिष्णुभेदधर्मकत्वात् गुणत्वं प्रधानत्वं वा समकालाविरुद्धमित्याह—**न हीति** ॥

१. क. 'स्वातन्त्र्यं'
२. क. ख. ग. 'क्वापि' नास्ति । घ. 'कुत्रापि'
३. क. ख. ग. 'क्वापि' अधिकः ।
४. क. ख. 'तत्रापि विशे' ग. 'तत्र च विशे'
५. क. ख. 'व्याप्तत्वाद्व्यङ्ग्यस्य' ग. 'प्राप्तत्वाद्व्यङ्ग्यं च'
६. क. ख. 'वाच्यस्य'

लोचनम्

प्राधान्यं विरुध्यते[1] । यदा तु विशेषोऽप्राकरणिकः[2] प्राकरणिकं सामान्यमाक्षिपति[3] तदा द्वितीयः प्रकारः । यथा—

"एतत्तस्य मुखात् कियत्कमलिनीपत्रे कणं[4] पाथसो
यन्मुक्तामणिरित्यमंस्त[5] स जडः शृण्वन् यदस्मादपि[6] ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
स्तत्रोड्डीय गतो[7] ममेत्यनुदिनं[8] निद्राति नान्तः[9] शुचा ॥"

कौमुदी

सामान्यविशेषयोरिति हेतुत्वेन योजनीयम् ॥ **द्वितीय इति** ॥ विशेषात् सामान्यप्रतीतिरूपः ॥ **एतत्तस्येति** ॥ इह खलु कश्चिज्जडमतिः जलजपलाशपतितजलबिन्दुसन्दर्शी सदृशसन्दर्शनसमुद्बुद्धसंस्कारतया निसर्गजडिमास्कन्दनतिरस्क्रियमाणासंभावनाबुद्धिरयमिह मुक्तामणिरिति बभ्राम । अथ तदर्थनाकदर्थितहृदयो झटिति तदुपादानव्याप्रियमाणाङ्गुल्यग्रसंस्पर्शमात्रविलीनेऽपि तस्मिन् अनुन्मिषिततत्त्वबुद्धिः प्रत्युताचेतनेऽपि मणौ अत्यन्तासंभावितमपि विहायसागमनं संभावयन् तदलाभदुःखभारदोधूयमानमानसतयानुदिनं निद्रामलभमान एव आस्ते । तत्तादृगवस्थजडविषयेयमुक्तिः । मुखात् आरम्भतः प्रथममिति यावत् । कमलिनीपत्रस्थितं पाथसो जलस्य कणं मुक्तामणिरित्येवममंस्त मननं कृतवानिति यत्, तदेतत् तस्य जडस्य कियत् अत्यल्पमेव ; सादृश्यनिमित्तस्य भ्रमस्य सर्वत्र सुलभत्वात् संभावित एव मुक्तामणिभ्रम इत्यर्थः । अस्मात् कमलिनीपत्रपाथःकणमुक्तामणिभ्रमात् अन्यच्छृण्विति गर्भवाक्यम् । सः जातमुक्तामणिभ्रमो जडः, तस्मिन् मुक्तामणिबुद्ध्या सलिलबिन्दौ आदीयमान एव अङ्गुल्यग्रेण या लघ्वी क्रिया तदादानोपयोगिनी तयैव अत्यन्ताय लयं गते सति झटित्यदर्शनाज्जडत्वादेवारोपितममकारः हा हन्त ! असौ मदीयो मुक्तामणिः समुत्पत्य

१. क. ख. 'विभाव्यते'
२. घ. '-षः प्राकर-'
३. ग. 'आक्षिपतीति तत्र'
ङ. 'आक्षिपति तत्र'
घ. च. 'आक्षिपतीति तदा'
४. ग. 'कणः'
५. ग. घ. 'यः'
६. घ. 'फलमित्य'
७. ग. 'ततः कुत्रोड्डीय'
८. क. ख. 'इहे'
९. क. 'नार्तः'

ध्वन्यालोकः

**सममेव प्राधान्यम् । यदा तावत् सामान्यस्य अप्रस्तुतस्या-**

लोचनम्

इति[1] । अत्र अस्थाने महत्त्वसंभावना[2] सामान्यं प्रस्तुतम् ; अप्रस्तुतं तु जलबिन्दौ मणित्वसंभावनं विशेषरूपं वाच्यम् । तत्रापि सामान्यविशेषयोर्युगपत्प्राधान्ये न विरोध इत्युक्तम् । एवमेकः प्रकारो द्विभेदोऽपि[3] विचारितः, "यदा[4] तावत्" इत्यादिना "**विशेषस्यापि प्राधान्यम्**" इत्यन्तेन । एनमेव[5] न्यायं निमित्तनैमित्तिकभावेऽतिदिशंस्तस्यापि द्विप्रकारतां दर्शयति । कदाचिन्निमित्तमप्रस्तुतं सदभिधीयमानं नैमित्तिकं प्रस्तुतमाक्षिपति[6] । यथा—

"ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च ।
ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः ॥"

कौमुदी

गत इति निश्चिन्वानोऽतिवेलमुपजातपरितापो निद्रामपि न लभत इति । अत्र प्रस्तुताप्रस्तुतौ सामान्यविशेषौ दर्शयति—**अत्रेति** ॥ अत्र प्रसाधितमेव समप्राधान्यमतिदिशति—**तत्रापीति** ॥ उक्तेऽर्थे ग्रन्थमवतारयति—**एवमिति** ॥ निमित्तनैमित्तिकभावस्यैकरूपत्वात् कथं द्विप्रकारसामान्यविशेषभावोक्तन्यायातिदेश इत्याशङ्क्य न्यायातिदेशमुखेनास्यापि द्विप्रकारसूचनपरोऽयं ग्रन्थ इत्याह—**एनमेवेति** ॥ उपजीव्योपजीवकभावश्च न्यायः ॥ **य इति** ॥ न बान्धवा एव बान्धवाः, न सुहृद एव सुहृदः ; किन्तु ये परस्याभ्युदये सति परां प्रीतिं भजन्ते, व्यसनेष्वापत्सु न परित्यजन्ति च, त एव मुख्यतया बान्धवाः, त एव च सुहृदोऽपि ; अपरस्तद्विपरीतवृत्तिर्लोकशब्दमात्रवाच्यो लोकनमात्रव्यापारो लब्ध-

उपलोचनम्

"एतत्तस्य" इति भल्लटीयः अन्यापदेशोऽयमद्वैतमतानुसारिणां सहृदयानामन्यादृशमास्वादनीयं सारमभिव्यञ्जयति । तथा हि—शाङ्करो मायावादः उच्चावचं प्रपञ्चमपलपितुं वा उद्योगिपुरुषधौरेयाणामुत्साहक्षेमानं शिथिलयितुं वा सर्वथा न प्रावर्तिष्ट ; परं तु अस्थाने महत्त्वसंभावनां नाम सर्वानर्थमूलमुन्मूलयितुम्, यथावत् वस्तुस्थितावास्थां व्यवस्थापयितुं चेति । अत्र "कुत्रोड्डीय गतो हहा" इति पाठः तात्पर्यं सम्यक्पुष्णाति ॥

१. क. ख. ग. 'इति' नास्ति ।
२. क. ख. ग. 'भावनं'
३. क. ख. 'अपि' नास्ति ।
४. घ. 'यथा'
५. क. ख. ग. 'एतमेव'
६. क. ख. 'प्रस्तुतं' नास्ति ।

ध्वन्यालोकः

भिधीयमानस्य प्राकरणिकेन विशेषेण[1] प्रतीयमानेन संबन्धस्तदा विशेष[2]प्रतीता[3]वपि प्राधान्येन तस्य सामान्येनाविना[4]भावात् सामान्यस्यापि प्राधान्यम् । यदा[5]पि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्रा[6]धान्ये सामान्ये सर्वविशेषा[7]णामन्तर्भावाद्विशेषस्यापि प्राधान्यम् । निमित्तनिमित्तिभावे चायमेव न्यायः ।

लोचनम्

अत्राप्रस्तुतं सुहृद्बान्धवरूपत्वं निमित्तं [8]सज्जनासक्त्या वर्णयति नैमित्तिकीं श्रद्धेयवचनतां [9]प्रस्तुतामात्मनोऽभिव्यङ्क्तुम् । तत्र नैमित्तिकप्रतीतावपि निमित्तप्रतीतिरेव प्रधानीभवत्यनुप्राणकत्वेनेति [10]व्यङ्ग्यव्यञ्जकयोः प्राधान्यम् । कदाचित्तु नैमित्तिकमप्रस्तुतं वर्ण्यमानं सत् प्रस्तुतं निमित्तं व्यनक्ति । यथा सेतौ—

"सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरम् ।
सुमरामि महणपुरओ अमुद्धअन्दं च हरजडापब्भारम् ॥"

अत्र जाम्बवान् कौस्तुभलक्ष्मीविरहितहरिवक्षः[11]स्मरणादिकम[12]प्रस्तुतं नैमित्तिकं वर्णयति

कौमुदी

जन्मफलत्वात् स्वार्थपरः स्वाभीष्टानभीष्टार्थप्राप्तिपरिहारमात्रचरितार्थमानी । अत एव समग्रदौर्जन्यभाजनीभूतो निरुपाख्य एवेति ॥ **सज्जनासक्त्येति** ॥ सज्जनहेवाकविशेषबहुमानपूर्वकमित्यर्थः ॥ **नैमित्तिकप्रतीताविति** ॥ श्रद्धेयवचनता ह्यत्र वक्तुः प्राधान्येन प्रतिपिपादयिषिता इति व्यङ्ग्यस्य तावत् प्राधान्यं निर्विवादमेव । न चेयता वाच्यस्याप्राधान्यम्, प्रधानभूतनैमित्तिकप्रतीतावपि अनुप्राणकत्वेन आत्मलाभहेतुत्वेन निमित्तभूतबान्धवत्वादेः प्रधानतया

१. ख. 'विशेषणेन'
२. ज. 'विशेषस्य'
३. क. ख. 'प्रतीतौ सत्यामपि'
४. क. ख. 'विना भावात्'
५. ज. 'यदा तावत्'
६. क. ख. 'प्राधान्येन'
७. क. ख. 'विशेषणानां'
८. क. ख. 'सज्जरासन्धोक्त्या'
९. ग. 'प्रस्तुतात्मनो'
१०. क. ख. 'वाच्यव्यङ्ग्ययोः'
११. क. ख. 'स्मरणरूपमप्रस्तुतस्य वृद्धत्वस्य व्यङ्ग्यस्यानुप्राणकत्वमिति व्यङ्ग्यानुप्राणकत्वेन वाच्यस्यापि प्राधान्यम् । वृद्धतामेव चिरजीवित्व'
१२. ग. 'प्रस्तुतनैमि-'

## लोचनम्

प्रस्तुतं वृद्धसेवाचिरजीवित्वव्यवहारकौशलादिनिमित्तभूतं[1] मन्त्रितायामुपादेयमभिव्यङ्क्तुम्[2] । तत्र निमित्तप्रतीतावपि नैमित्तिकं वाच्यभूतम् । प्रत्युत तन्निमित्तानुप्राणितत्वेनो-[3]द्धुरकन्धरीकरोत्यात्मानमिति समप्रधानतैव वाच्यव्यङ्ग्ययोः । एवं द्वौ प्रकारौ प्रत्येकं द्विविधौ विचार्य[4] तृतीयः प्रकारः परीक्ष्यते सारूप्यलक्षणः[5] । तत्रापि द्वौ प्रकारौ—अप्रस्तुतात् कदाचिद्वाच्याच्चमत्कारः, व्यङ्ग्यं तु तन्मुखप्रेक्षम्[6] । यथास्मदुपाध्यायभट्टेन्दुराजस्य—

"प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि[7] ।
तस्यास्य स्मितमात्रकेण जनयञ्जीवापहारक्रियां[8]
भ्रातः प्रत्युपकारिणां धुरि परं वेतालकीलायसे ॥"

## कौमुदी

प्रतिभासात् । न ह्यात्मनस्तथाविधनैसर्गिकसुहृत्त्वाद्यनुपजीवनेन श्रद्धेयवचनत्वं प्रतीति-पथमवतरितुमलमिति बलात् द्वयोरपि प्राधान्यमविशिष्टमेवेत्यर्थः ।

"स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः ।
स्मरामि मथनात् पुरतः अमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥"

कुतस्तदभिव्यङ्ग्यत्वमित्यत उक्तम्—**मन्त्रितायामुपादेयमिति** ॥ **प्रत्युतेति** ॥ अप्राधान्य-वैपरीत्येन । उद्धुरकन्धरीभावः प्राधान्यम्, तत्र हेतुः—**तन्निमित्तानुप्राणितत्वेनेति** ॥ अस्यार्थः—इह तावन्नैमित्तिकप्रतीतिबलान्निमित्तस्य प्रधानतयैव प्रतीतिः ; तत्र निमित्तप्रतीतेः प्राक् नैमित्तिकप्रतीतिः स्वरूपमात्रविश्रान्तिनिमज्जितस्वरूपैव आविर्भूता सती पश्चादवगत-निमित्तोज्जीवितोन्मज्जितरूपैवाविर्भवतीति सकलसहृदयस्वसंवेदनासिद्धमेतदिति वाच्यव्यङ्ग्ययोः समतुलारूढमिव प्राधान्यमवभासत इति ॥ **तन्मुखप्रेक्षमिति** ॥ वाच्यं प्रत्युपसर्जनी-भूतमित्यर्थः । धूःशब्दोऽग्रवाचकः, "अपांसुलानां धुरि" इत्यादिवत् । वेतालकीला

१. घ. ङ. च. 'भूत'
२. क. ख. 'उपादेयभूतायां'
३. क. ख. 'प्राणकत्वेन'
४. क. ख. 'किं चायं'
५. घ. 'लक्षणे'
६. क. ख. 'प्रेक्ष्यम्'
७. घ. ङ. 'सपर्या पुरः'
च. 'सपर्याः पुरः'
८. क. ख. 'प्राणाप-'

## लोचनम्

अत्र यद्यपि [1]सारूप्यवशेन कृतघ्नः कश्चि[2]दन्यः प्रस्तुत आक्षिप्यते, तथाप्यप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम् । न ह्य[3]चेतनो[4]पालम्भवदसंभाव्यमानोऽयमर्थो न[5] च न हृद्य इति वाच्यस्यात्र[6] प्रधानता । यदि पुनरचेतना[7]दिनात्यन्तासंभाव्यमानतदर्थविशेषणेन अप्रस्तुतेन [8]वर्णितेन प्रस्तुतमाक्षिप्यमाणं चमत्कारकारि तदा वस्तुध्वनिरसौ । यथा ममैव—

"भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य [9]संक्रीडसे ।

## कौमुदी

वेतालवृत्तान्तः ॥ **सारूप्यवशेनेति** ॥ प्राणसमर्पणाद्युपकर्तर्यु[तर्य]पकर्तृत्वरूपसादृश्यबलात् ॥ **अप्रस्तुतस्यैवेति** ॥ वाच्यभूतस्येति शेषः । कुतो वाच्यस्यैव प्राधान्यमित्याशङ्क्य किमसंभावितत्वादप्राधान्यमहृद्यत्वाद्वा ? नाद्य इत्याह—**न हीति** ॥ यथा ममैव—

"सत्यं सा[सं]हतिशालिशीतलपलाशालीकरालीकृतः
स्निग्धोदारफलावनम्रितमहाशाखोपशाखाञ्चितः ।
चूतद्रो न न भासि भासि न पुनश्चेतश्चमत्कारिणी
रीतिस्ते गिरिदुर्गसंकटदुरारोहस्थलीतस्थुषः॥"

अत्र ह्यचेतनं प्रत्येवंविधोक्तिरेवासंभावनीयेत्यप्रस्तुतस्यैवार्थिजनोपयोगहानिविभवसमृद्धपुरुषवृत्तान्तरूपस्यार्थस्याक्षिप्यमाणस्य चमत्कारदायित्वम् । तर्हि तथाविधेऽप्रस्तुतप्रशंसाविषये वाच्यस्याप्राधान्यं व्यङ्ग्यस्य च प्राधान्यमिति तत्र ध्वनेरन्तर्भावोऽस्त्वित्याशङ्क्य, अप्रस्तुतप्रशंसालंकार एवायं न भवति; वस्तुध्वनिरेवायं तृतीयो भेद इत्याह—**यदि पुनरिति** ॥ अत्यन्तमसंभाव्यमानोऽचेतनत्वादेव तथाविधो वर्ण्यमानोऽर्थविशेषो जनहृदयाक्रमणादिरूपो यत्र तथाभूतेनेति ॥ **भावव्रातेत्यादि** ॥ हे चन्दनादिपदार्थसमूह ! त्वमात्मनो हृदयं सारं

१. ग. 'सारूप्यवशेन' नास्ति ।
घ. 'कृतघ्नः सारूप्यवशेन'
२. ग. 'अन्यः प्रस्तुतः' नास्ति ।
३. घ. 'अपि' अधिकः ।
४. क. ख. 'नालम्बद-'
५. क. ख. 'न च' नास्ति ।
ग. 'न हृद्यं'
६. घ. 'वाच्यस्याद्य प्रधानतां'
७. ङ. 'इत्यादि' अधिकः ।
८. घ. 'वर्जितेन'
९. क. ख. ग. च. 'यत्क्रीडसे'

लोचनम्

सत्वांमाह जडं ततः सहृदयंमन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसंभावनात् ॥''

कश्चिन्महापुरुषः ''वीतरागोऽपि सरागवत्'' इति न्यायेन गाढविवेकालोकतिरस्कृततिमिरप्रतानोऽपि लोकमध्ये स्वात्मानं प्रच्छादयन् लोकं च वाचालयन् आत्मन्यप्रतिभासमेवाङ्गीकुर्वन् तेनैव लोकेन मूर्खोऽयमिति यदावज्ञायते, तदा तदीयं लोकोत्तरं चरितं प्रस्तुतं व्यङ्ग्यतया प्राधान्येन प्रकाश्यते । जडोऽयमिति उद्यानेन्दूदयादिर्भावो लोकेनावज्ञायते । स च प्रत्युत कस्यचिद्विरहिण औत्सुक्यचिन्तादूयमानमानसतामन्यस्य प्रहर्षपरवशतां

कौमुदी

प्रच्छाद्य विविधाभिः भङ्गीभिः जनस्य हृदयमाक्रम्य नर्तयन् संक्रडिसे यत् ततो हेतोः, सहृदयंमन्यत्वदुःशिक्षितः स जनस्त्वामाह[माह जडं], एवं वदतोऽस्य जनस्य या जडात्मतासा सा त्वत्साम्यसंभावनात्तस्य जनस्य स्तुतिरेवेति मन्ये इति पदानां संगतिः । अस्य काव्योदाहरणानुकूलमर्थं दर्शयन्नप्रस्तुतं व्यङ्ग्यमर्थमाह—**''कश्चित्''** इत्यादिना **''प्रकाश्यते''** इत्यन्तेन ॥ **वीतरागोऽपीति** ॥ यदाह—

''ज्ञाततत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् ।
ज्ञाततत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥''

इति वाचालयन् आत्मावमानगर्भिता बंहीयसीर्जनानां वाचः प्रवर्तयन्, आत्मविषये जनैरारोपितम् अप्रतिभासम् अनवबोधमनुमन्यमानः, स्वकीयस्य लोकोत्तरस्य तत्त्वावबोधस्याच्छादनात् । प्रतीयमानं प्रदर्श्य वाच्यमर्थमाविष्करोति—**जडोऽयमिति** ॥ हिः प्रसिद्धौ ॥ **प्रत्युतेति** ॥ न जाड्याभाव एव, किं तु तद्विपरीतविदग्धस्वभावेत्यर्थः । अन्यस्य

१. ग. च. 'यस्त्वां'
२. क. ख. 'जडात्मना'
ग. 'जडात्मनः'
३. ङ 'सँल्लोक'
४. घ. 'प्राधान्येन यत्र आत्मन्यप्रतिभासमेवाङ्गीकुर्वन् स्तेयादिभावो लोकेनाव-'

लोचनम्

करोतीति हठादेव लोकं यथेष्टं[1] विकारकारणाभिर्नर्तयति । न च तस्य हृदयं केनापि विज्ञायते[2] कीदृगयमिति[3] । प्रत्युत महागम्भीरोऽतिविदग्धः सुष्ठुगर्वहीनोऽतिशयेन क्रीडाचतुरः ; स यदि[4] लोकेन जड इति तत एव कारणात् प्रत्युत वैदग्ध्य[5]संभावनानिमित्तात् संभावितः ; आत्मा च[6] यत एव कारणात् प्रत्युत[7] जाड्येन संभाव्यस्ततः[8] एव सहृदयः

कौमुदी

प्रियतमासमन्वितस्य । हठादेवाक्रम्येत्यस्य व्याख्या—**यथेष्टं विकारकारणाभिरिति** ॥ विकाराणामौत्सुक्यप्रहर्षादीनां कारणाभिः प्रवर्तनाभिः । आत्महृदयं प्रच्छाद्येति व्याचष्टे—**न चेति** ॥ हृदयं सारं प्रकृतिः ॥ **प्रत्युतेति** ॥ यादृगयं लोकेन ज्ञायते, तादृगयं न भवतीत्येव न, किं तु अलोकसाधारणगुणशालीत्यर्थः । तदाह—**महागम्भीर इति** ॥ गाम्भीर्यस्य लोकातीतत्वान्महत्त्वम् । एवमतिविदग्ध इत्यादिष्वपि गमयितव्यम् । एवं पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे—**स यदीति** ॥ "संभावितः" इत्यन्तं यदिवाक्यम् ॥ **स इति** ॥ प्रागुक्तगुणविशिष्टः भावव्रातः, लोकेन जड इति संभावित इति संबन्धः । अनेन "स त्वामाह जडम्" इत्यंशः परामृष्टः । तत इत्यस्य कारणार्थत्वमाह—**तत एवेति** ॥ उक्तप्रकारात् संक्रीडनरूपात् कारणात् । 'एव' इत्यस्याशयं स्वयमेवाह—**प्रत्युतेति** ॥ तद्धि कारणं वस्तुगत्या न जाड्यहेतुः; तद्विरुद्धरूपवैदग्धीहेतुरेव हि तदित्यर्थः । "सहृदयंमन्यत्वदुःशिक्षितः" इत्यमुमंशं परामृशति—**आत्मेति** ॥ लोकापेक्ष आत्मशब्दः ॥ **यत एवेति** ॥ विदग्धस्य सतो जडत्वेन संभावनारूपात् ॥ **प्रत्युतेति** ॥ सहृदयत्वसंभावनापेक्षम् । जडत्वेन संभावयितुं योग्योऽसहृदय इत्यर्थः । सहृदयः संभावितः सहृदयत्वेन संभावितः । यदीति एतदन्तम् अनु-

१. क. ख. 'यथेच्छं विकारकारणादिभिः'
ग. ङ. च. 'यथेष्टं विकारकारणादिभिः'
घ. 'यथेष्टं विकारणाभिः'
२. क. ख. ग. घ. 'ज्ञायते'
३. घ. 'कीदृशो'
४. क. ख. ग. 'सपादि'
घ. 'यदि स लोको जानाति तत एव'
५. ङ. 'वैदग्ध्य...प्रत्युत' नास्ति
६. घ. 'च' नास्ति ।
७. ग. 'प्रत्युत' नास्ति ।
८. ग. 'अतः'

ध्वन्यालोकः

यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः संबन्धः तदाप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः । इतरथा

लोचनम्

संभावितः; तदस्य लोकस्य जडोऽसीति यद्युच्यते तदा जाड्यमेवंविधस्य भावव्रातस्याति-विदग्धस्य प्रसिद्धमिति सा प्रत्युत स्तुतिरिति जडादपि पापीयानयं लोक इति ध्वन्यते । तदाह—**यदा त्वित्यादिना** ॥ **इतरथा त्विति** ॥ इतरथैव पुनरलंकारान्तरत्वमलंकार-विशेषत्वम्, न व्यङ्ग्यप्राधान्येन कथंचिदपीति भावः । उद्देशे यदादिग्रहणं कृतम्

कौमुदी

कृष्टस्य अस्य संशये संशयार्थत्वम् ॥ **तदिति** ॥ तर्हीत्यर्थः । अस्य लोकस्य स्तुतिरित्यन्वयः । कीदृशी स्तुतिरित्यत उक्तम्—**जडोऽसीति** ॥ हे जड एवं वदंस्त्वम् 'जडोऽसि' इति यद्वचनं केनचिदुच्यते, सा स्तुतिरेवेत्यर्थः । कुत इत्यत उक्तम्—**तदेति** ॥ वचनकाले अजडस्य सतो जडत्वप्रसिद्ध्युपजीविनी हि जनसंबन्धिनी जडत्वोक्तिः, तथा सति तत्तुल्ययोगक्षेमतया जनस्याप्यजडत्वसंभावनाद्वास्तवी स्तुतिरेवेति पर्यवस्येदित्यर्थः । अनेन "मन्येऽमुष्य" इत्यादे-र्र्थो निरूपितः । एवमप्रस्तुतार्थविषयां वचनव्यक्तिं निरूप्य तस्याः पार्यन्तिकमर्थं प्रकाशयति —**जडादपीति** ॥ एवमुदाहरणश्लोकार्थं परामृश्य तादृशि विषये ध्वनित्वमेव ; अतादृश्येव अप्रस्तुतप्रशंसालंकारत्वमित्येतस्मिन्नर्थे ग्रन्थमवतारयति—**तदाहेति** ॥ एवकारो भिन्न इतरथे-त्यनेन संबध्यत इत्याह—**इतरथैवेति** ॥ तुशब्दार्थः पुनःशब्देनोक्तः । अलंकारस्याविधेयत्वा-देवं योजनेत्यर्थः । अलंकारान्तरत्वमित्यप्रस्तुतप्रशंसाया अन्योऽलंकार उक्त इति भ्रमो मा भूत्, अन्तरशब्दस्य विशेषार्थत्वेन सैवोच्यत इत्याशयेनाह—**अलंकारविशेषत्वमिति** ॥ एवकारव्यवच्छेद्यमाह—**न व्यङ्ग्यप्राधान्येनेति** ॥ उपलक्षणार्था तृतीया । यदि वा व्यङ्ग्यप्राधान्य इति सप्तम्यन्तं पदम् । एको नकारः प्रमादलिखितः । पूर्वं वितत्योक्तस्यार्थस्य

१. क. ख. 'वशेनान्यस्य'
२. क. ख. 'प्राधान्यस्य'
३. ग. 'लोकस्य' नास्ति ।
४. घ. 'यदुच्यते'
५. क. ख. ग. 'व्रातस्याविदग्धस्य'
६. च. 'सा' अधिकः ।
७. क. ख. ग. 'इति'
च. 'इत्यादि'
८. क. ख. 'अलङ्कारान्तरत्वविशेषणत्वम्'
ग. 'अलङ्कारत्व'
९. क. ख. ग. 'व्यङ्ग्यस्य कथंचिदपि प्राधान्यमिति'
घ. 'विशेषणव्यङ्ग्य'

ध्वन्यालोकः

**त्वलंकारान्तरत्वमेव । तदयमत्र संक्षेपः—**

लोचनम्

"समासोक्ति" इत्यत्र द्वन्द्वे तेन व्याजस्तुतिप्रभृतिरलंकारवर्गोऽपि संभाव्यमानव्यङ्ग्यानुप्रवेशः संभावितः । तत्र सर्वत्र साधारणमुत्तरं दातुमुपक्रमते—**तदयमत्रेति** ॥ कियद्वा प्रतिपदं लिख्यतामिति भावः । तत्र व्याजस्तुतिर्यथा—

"किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥"

अत्र व्यङ्ग्यं यत् स्तुत्यात्मकं तेन वाच्यमेवोपस्क्रियते । यत्तूदाहृतं केनचित्—

"आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं
जाता संप्रति साम्बुराशिरशना जाया कुलोद्भूतये ।

कौमुदी

संक्षिप्य प्रदर्शनं क्रियत इति प्रतिज्ञाय तदधिकार्थान्तरप्रदर्शनपरश्लोकोपन्यासस्य तात्पर्यमाह—**उद्देश इति** ॥ अपिशब्दोऽप्रस्तुतप्रशंसासमुच्चयार्थः । अत्र विषय-संकोचं करोति—**संभाव्यमानेति** ॥ संभावितः प्रदर्शितः । किमिति साधारण्येनोत्तर-दानमित्यत उक्तम्—**कियद्वेति** ॥ प्रतिपदं कण्ठोक्त्येत्यर्थः । व्याजेन व्याजरूपा वा स्तुति-रिति नाम्नैव लक्षणसिद्धेरुदाहरणमेवाह—**तत्रेति** ॥ अत्र वाच्यभूतया निन्दया भवतः कीर्तिरप्रतिबन्धमेव विश्वं व्याप्नोतीत्युत्तमश्लोकत्वगुणकीर्तनरूपां स्तुतिमवगमयति । अत्र व्यङ्ग्यानुगतवाच्यस्यैव प्राधान्यं न ध्वनित्वमित्याह—**अत्रेति** ॥ प्रसङ्गादुदाहरणान्तर-मनूद्य दूषयति—**यत्त्विति** ॥ केनचिदित्यत्रमानगर्भो निर्देशः ॥ **अस्माकमिति** ॥

१. क. ख. ग. 'न्तरमेव'
२. घ. '-त्यनेन'
३. ग. 'अलङ्कारः सर्वोऽपि'
४. घ. 'संभाव्यमानोऽपि'
५. क. ख. व्यङ्ग्यानुवेशः'
ग. 'व्यङ्ग्योऽनु'
६. क. ख. 'तदयमिति' अधिकः ।
७. ग. 'अत्र'
८. क. ख. ग. 'यत्' नास्ति ।
९. क. ख. ग. 'यत्तेन'
१०. क. ख. ग. 'आसीनाथ'
११. क. ख. 'जाता'
१२. क. ख. 'माता'

## लोचनम्

पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥"

इति—[1]एतदस्माकं [2]ग्राम्यं प्रतिभाति, अत्यन्ता[3]सभ्यस्मृतिहेतुत्वात् । का चा[4]नेन [5]स्तुतिः कृता ; 'त्वं वंशक्रमेण राजा' इति हि[6] कियदिदमिति । एवंप्राया व्याजस्तुतिः सहृदयगोष्ठी[7]षु निन्दितेत्युपेक्ष्यैव ॥

"यस्य विकारः प्रभवन्न[8]प्रतिबद्धेन हेतुना येन ।
गमयति तदभिप्रायं तत्प्रतिब[9]न्धं च भावोऽसौ ॥"

## कौमुदी

काष्ठाधिष्ठितसहृदयभावानाम् ॥ **प्रतिभातीति** ॥ स्वयमेवेत्थं प्रतिभानोत्पत्तौ किं कुर्म इत्यर्थः । कुतो ग्राम्यत्वप्रतिभेत्यत उक्तम्—**अत्यन्तेति** ॥ पितामह्या मातृत्वोक्तावेव कन्दलिता तावदसभ्यस्मृतिः ; तस्या जायात्वस्नुषात्ववर्णने तु सा सुतरामभिव्यक्ताभूदित्याशयेनोक्तम्—"अत्यन्त" इति । इत्थं वाच्यार्थविषये दोषमभिधाय व्यङ्ग्यार्थेऽपि तमाह—**का चेति** ॥ **कियदिदमिति** ॥ इतरराजापेक्षयोत्कर्षविशेषाप्रतीतेरिति भावः ॥

"व्याजस्तुतिप्रभृतिः" इति प्रभृतिशब्दगृहीतं भावालंकारमुदाहरिष्यन् तल्लक्षणं रुद्रटगदितमनुद्रवति—**यस्य विकार इति** ॥ अत्रापि द्वैधम्—वाच्यं प्रधानं व्यङ्ग्यं तु

## उपलोचनम्

"यस्य विकारः" इत्यादिकं रुद्रटकाव्यालङ्कारादुद्धृतं भावालङ्कारलक्षणम् । तत्र रुद्रटेन अस्य लक्षणस्य प्रथमं निदर्शनम् "ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥" इत्येतत् उपात्तम् ; ततः "अभिधेयमभिदधानं तदेव तदसदृशसकलगुणदोषम् । अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः ॥" इत्येवमादिकं द्वितीयं प्रकारं प्रदर्श्य "एकाकिनी यदबला" इत्यादिकं निदर्शनमुदाहारि ।

१. क. ख. ग. 'तद'
२. ग. 'काव्यं'
३. ग. 'असह्य'
४. क. ख. 'वानेन'
५. ग. 'विस्मृतिः'
६. ग. 'राजेति किय'
घ. 'राजयति किय'
७. क. ख. 'गोष्ठीनि'
८. ग. 'अप्रतिबन्धस्तु'
९. ग. 'बन्धं'

## लोचनम्

इत्यत्रापि वाच्यप्राधान्ये भावालंकारता । यस्य चित्तवृत्तिविशेषस्य संबन्धी वाग्व्यापारादिर्विकारोऽप्रतिबद्धोऽनियतः प्रभवंस्तं चित्तवृत्तिविशेषरूपमभिप्रायं येन हेतुना गमयति स हेतुर्यथेष्टोपभोग्यत्वादिलक्षणोऽर्थो भावालंकारः । यथा—

" एकाकिनी यदबला तरुणी तथाहमस्मिन् गृहे गृहपतिश्च गतो विदेशम् ।

## कौमुदी

तदुपस्कारकारि, व्यङ्ग्यं वा प्रधानं वाच्यं तद्गुणभूतमिति । आद्ये न ध्वनित्वमित्याह— **अत्रापीति** ॥ कथमत्र वाच्यप्राधान्यमित्याशङ्क्य तदुदाहरणं दर्शयिष्यँल्लक्षणवाक्यं योजयति —**यस्येति** ॥ चित्तवृत्तिविशेषः रत्यादिलक्षणः । वाग्व्यापारादेर्बहुचित्तवृत्तिसाधारणत्वे तद्धेतोरगमकत्वात्तन्निवृत्त्यर्थमुक्तम्—**नियत इति** ॥ येन हेतुना प्रतिपाद्यमानेनेति शेषः । अस्मिन्नुदाहरणे वाच्यप्राधान्यमुपपादयति—**अत्रेति** ॥ निर्यन्त्रणं यथेच्छोपभोगयोग्यत्वलक्षणं वस्तु । तथा हि—अबलत्वादेव[अबलात्वादेव] स्वतःप्राप्तमुपभोग्यत्वम् ; इदानीं तु विशेषतः मदनदहनदाहविगलितसारत्वात् ; तत्रापि संपूर्णतारुण्यतरङ्गिततनुलतिकत्वाद्विशृङ्खलविसरदनङ्गविकारकिंकरीकृतत्वम् ; एकाकिनीत्वादसहायतया निर्मक्षिकत्वम् ॥ **अहमिति** ॥ ममेदृशी-

## उपलोचनम्

लोचने तु "यस्य विकारः" इत्यादिलक्षणमेव एकाकिनीत्याद्युदाहरणे योजितं दृश्यते । लोचने चात्र मुद्रिते "अप्रतिबद्धः अनियतः प्रभवन्" इति पाठ एव समीचीन इति समादृतः । कौमुद्यां तु "नियतः प्रभवन्" इति पाठः समादृतो व्याख्यातश्च । अत्र कौमुदीसमादृतरीतिः व्यञ्जनापथात् दवीयसीति स्पष्टं सहृदयानाम् ; वाग्व्यापारादेः नियतत्वसंपादनप्रयासः व्यञ्जनामेव हि निरुन्ध्यात्, अनुमानं च समुद्वलयेत् ; तस्य अनैकान्तिकता खलु व्यञ्जनायामनुगुणा । अत्र अस्माभिः समादृतस्य पाठस्य अनुग्राहकं लोचनकारासन्नवर्तिनः (१०६९. क्रिस्तसंवत्सरे) रुद्रटग्रन्थं व्याख्यातवतः विवरणम् "यस्य विकारः" इत्यादिलक्षणस्य किञ्चिदिव परिशील्यताम्—"यस्येति । यस्य विकारवतो येनाप्रतिबद्धेनानैकान्तिकेन हेतुना विकारः कार्यं प्रभवन्नुत्पाद्यमानस्तस्य विकारवतः संबन्धिनमभिप्रायं प्रतिपत्तुर्गमयति, तथा स एव विकारस्तयोर्विकारहेतुविकारयोः प्रतिबन्धं च कार्यकारणभावं गमयति, असावेवंरूपो भावनामालङ्कारो भण्यते । भवत्यस्मादभिप्रायनिश्चय इति कृत्वा । ननु विरुद्धमिदम् । अप्रतिबद्धश्चेत् कथं हेतुः ? अथ हेतुः, कथमप्रतिबद्धो नाम ? अपि च योऽप्रतिबद्धेन हेतुना जन्यते स कुतस्तत्प्रतिबन्धं गमयति ? विद्यते चेत्प्रतिबन्धः न तर्ह्यप्रतिबद्धो हेतुः इति । सत्यमेतत् । किं तु महाकविलक्ष्यमेवंविधं दृश्यतेऽनुभूयते च । न च दृष्टे किंचिदनुपपन्नं नाम" इति ॥

१. ग. 'अप्रतिबद्धः' नास्ति ।
२. ग. 'प्रतिबद्धस्तम्' घ. 'प्रभवस्तच्चित्त'
३. घ. ङ. च. 'विशेषम्'
४. क. ख. ग. 'येनाप्रतिबद्धेन'
५. ङ. 'यथोपभोग्य'
६. क. 'उपेयाक्तृत्वादि' ख. 'उपयोग्यत्वादि'
७. क. ख. 'लक्षणार्थो' च. 'लक्षणो' घ. 'लक्षणोत्थो'
८. क. ख. यथाहमस्मद्गृहे

लोचनम्

कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥"

अत्र व्यङ्ग्यमेकैकत्र[1] पदार्थ उपस्कारकारीति वाच्यं प्रधानम्[2] । व्यङ्ग्यप्राधान्ये[3] तु न कांचिदलंकारतेति[4] निरूपितम् इत्यलं बहुना ॥

कौमुदी

मवस्थामनुभवता भवतैव तावदिदमनुक्तसिद्धमवगन्तुं शक्यम् ॥ **अस्मिन्निति** ॥ जनराहित्यस्य प्रत्यक्षगम्यत्वम्, अतिसन्निहितत्वादचिरकाललभ्यत्वम् ॥ **गृह इति** ॥ परकीयत्वप्रसिद्धपारतन्त्र्यहीनत्वम् ॥ **गृहपतिश्चेति** ॥ गृहत्वप्रयुक्तगृहपतिनित्यसान्निध्यशङ्कापरित्यागः । यतो विदेशं गतः अद्यागमिष्यत्यपि कदाचिदिति शङ्कानुदयं प्रति किं वक्तव्यं यतो गमनमपि संप्रत्येव निर्वर्तितवान्; विदेशं च बहुदिवसप्राप्यं बहुतरकार्यान्तरानुबन्धितया चिरतराध्युषितव्यं देशं गतः, तादृशात्ततः प्रत्यापत्तिशङ्कापि न कार्येति । तत् तस्माद्धेतोरिह कं वासं याचसे स्वयमेव स्वेच्छयैव सुखवासं विधेहि । इयं भवतैवैषा दृश्यतामीदृशीयमिति । वराकी च निसर्गत एव न भवत इयं परीक्षास्पदीभावसमुचिता । संप्रति चान्ध्यबाधिर्यदूरपर्युदासितास्मदीयरहस्यवृत्तान्तावधारणकथा । एवं स्थितेऽपि यद्रहस्यविस्रावविचिकित्साविसंष्ठुलहृदयत्वम्, तदपारमौढ्यविजृम्भितमेवेति । तदाह—**एकैकत्र पदार्थ उपस्कारकारीति** ॥

नन्विह वाच्यस्य व्यङ्ग्यानपेक्षयैव विश्रान्तत्वात् तदुपसर्जनभावाच्चास्मिन् विषये व्यङ्ग्यप्राधान्यानवखण्डनात् ध्वनित्वमेवास्त्वित्याशङ्क्य तर्हि भावालंकारत्वमेवात्र न, किं तु वस्तुध्वनित्वमेवेति प्रागुक्तमावर्तत इत्याह—**व्यङ्ग्यप्राधान्ये त्विति** ॥ **अलं बहुनेति** ॥ उपमेयोपमानन्वयादावपि वाच्यप्राधान्याविशेषात् ध्वन्यन्तर्भावशङ्कावगमः [विगमः] स्वयमवसेय इति दर्शयति । तत्रोपमेयोपमा यथा ममैव—

" मुखमिदमलसाक्ष्या मुक्तलक्ष्मोपरोधव्यतिकरमिव बिम्बं भाति पीयूषभानोः ।
इदमपि विधुबिम्बं कम्रघर्माम्बुलेशस्फुरितमिव रतान्ते वक्त्रबिम्बं प्रियायाः ॥ "

अत्र मुखशशिबिम्बयोरुपमानान्तरराहित्यलक्षणं वस्तु प्रतीयमानं वाच्यभूतमन्योन्यौपम्यलक्षणमर्थमुपस्कुर्वाणमप्रधानतयैव प्रतीयते । अनन्वयेऽपि—

" वाणी वाणीव परं वेणी वेणीव केवलं तस्याः ।
एणीदृशः समिन्धे श्रोणी श्रोणीव चैव सखे ॥ "

इत्यादौ मदीय एव नोपमानान्तरराहित्यम्, किन्तु निरुपमानत्वमेव; तच्च प्रतीयमानमपि वाच्योपस्कारकत्वादप्रधानम् । एवं तुल्ययोगितादावपि योजनीयमिति ॥

१. क. ख. 'पदार्थोऽपि' ग. 'पदार्थे उपस्कारी' अधिकम् ।
२. क. ख. 'प्रधानम्' नास्ति ।
३. क. ख. 'प्राधान्ये हि भावालङ्कारता'
४. क. ख. 'प्राधान्येन तु कदाचित्'
५. घ. 'कदाचित्'

ध्वन्यालोकः

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥

लोचनम्

**यत्रेति** ॥ काव्ये ॥ **अलंकृतय इति** ॥ अलंकृतित्वादेव च वा[1]च्यार्थोपस्कारक[2]त्वम् ॥

**प्रतिभामात्र इति** ॥ यत्रोपमादौ श्लिष्टा[3]र्थप्रतीतिः ॥ **वाच्यार्थानुगम इति** ॥ वाच्येनार्थेनानुगमः समं प्राधान्यम् अप्रस्तुतप्रशंसायामिवेत्यर्थः । स्फुटतया प्राधान्यं न चकास्ति, अपि तु बलात् कल्प्यते, तथापि[4] हृदये नानुप्रविशति ।

कौमुदी

प्रकृतत्वाद्ध्वनेः यत्रेति परामर्शो मा भूदित्याह—**यत्रेति काव्य इति** ॥ अप्राधान्ये हेतुर्वाच्यमात्रानुयायित्वम् ; तत्र तु अलंकृतिशब्देन वाच्यार्थोपस्कारकत्वं हेतुरुक्त इत्याह—**अलंकृतित्वादेवेति** ॥

प्रतिभामात्र इत्यनेन अविस्पष्टावभासत्वमुक्तमित्याह—**श्लिष्टेति** ॥ श्लिष्टा अस्पष्टा । व्यङ्ग्यात्मनः अर्थस्य । क्वेति चेत्तत्राह—**उपमादाविति** ॥ "वाच्यमात्रानुयायिनः" इत्यनेन पौनरुक्त्यं परिहरन् व्याचष्टे—**वाच्येनेति** ॥ अनुगमः एकतुलाधिरोहः । तस्य क्षेत्रमाह—**अप्रस्तुतप्रशंसायामिवेति** ॥ "न प्रतीयते" इति न सर्वथा प्रतीत्यभाव उच्यते । एवं सति हि प्राधान्यमेव नास्तीत्येव किं नोच्यते । किन्तु प्रतीतेः स्फुटत्वाभाव एव ; स च प्रयत्नेनोन्नेयत्वाभिप्राय इत्याह—**स्फुटतयेति** ॥ बलात् कल्पनं युक्तिपर्यालोचनया परीक्षादशायामाहरणम् । ननु बलाद्वा अन्यथा वास्तु, प्राधान्यस्य प्रतीतिश्चेदियतैव चरितार्थाः स्म इत्यत आह—**तथापीति** ॥ युक्त्यनुसन्धानाभावे प्रविलयादित्यर्थः । अस्यापि क्षेत्रमाह—

१. क. ख. 'वाच्योप' घ. 'श्लिष्टार्थप्र-'
२. ङ. 'कारत्वम्' ४. क. ख. 'च' अधिकम् ।
३. क. ख. 'श्लिष्टा प्रतीतिः'

ध्वन्यालोकः

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः संकरोज्झितः ॥

तस्मान्न ध्वनेरन्यत्रान्तर्भावः ॥

लोचनम्

यथा[1]—"दे आ[2] पसिअ णिवत्तसु[3]" इत्यत्रान्यकृतासु व्याख्यासु । तेन चतुर्षु प्रकारेषु न[4] ध्वनिव्यवहारैः[5] सद्भावेऽपि[6] व्यङ्ग्यस्य[7]—अप्राधान्ये, श्लिष्ट[8]प्रतीतौ, वाच्येन समप्राधान्ये, अस्फुटे[9] प्राधान्ये च[10] । क्व तर्ह्यसावित्याह—तत्परावेवेति ॥ संकरेणालंकारानुप्रवेशसंभावनया उज्झित[11] इत्यर्थः । संकरालंकारेणेति त्वसत् । अन्यालंकारोपलक्षणत्वे हि क्लिष्टं[12] स्यात् ॥

कौमुदी

यथेति ॥ तत्रापि संकोचं करोति—अन्यकृतास्विति ॥ तेन "अयमत्र भावः" इत्यतः प्राक् प्रदर्शितास्वित्यर्थः । "न ध्वनिः" इति ध्वनिव्यवहारस्यैव निषेध इत्याह—तेनेति ॥ सद्भावेऽपि ध्वनेरिति शेषः । तानेव प्रकारान् विशदयति—व्यङ्ग्यस्येति ॥ संकरशब्दः सांकर्यवाचकः ; तच्च ध्वनेः समासोक्त्याद्यलंकारानुप्रवेशरूपमित्याह—अलंकारेति ॥ अनुप्रवेशाननुप्रवेशयोः तदुज्झितत्वोक्तिरयुक्तेति मत्वा संभावनयेत्युक्तम् । अलंकारानुप्रवेशो हि प्रागाशङ्कि ; ततः शङ्कानवसरोऽत्रोच्यत इत्यर्थः । संकरालंकारवाचकोऽयं संकरशब्दः किं न स्यादिति, नेत्याह—संकरेति ॥ किमयं संकरालंकारमात्रविषयः, आहोस्विदुपलक्षणमुखेन समासोक्त्यादेरपि संग्रहार्थः ? नाद्यः, इतरालंकारेषु ध्वन्यन्तर्भावानुमतिप्रसङ्गात् । न द्वितीय इत्याह—अन्यालंकारेति ॥ प्रधानेन

१. ग. 'यथा' नास्ति ।
२. ग. 'देआइ पसिअणु अन्तसु'
घ. 'देआ... मुकुलित' नास्ति ।
३. क. ख. 'आतासु'
४. ङ. 'न' नास्ति ।
५. क. ख. 'व्यवहारस-'
६. च. 'न' अधिकः ।
७. क. ख. ग. घ. 'प्राधान्यम्' अधिकः ।
८. क. ख. 'क्लिष्ट'
९. ग. 'स्फुटप्रा'
१०. च. 'च' नास्ति ।
११. ग. 'उत्थितः'
१२. क. ख. 'श्लिष्टम्'

ध्वन्यालोकः

इतश्च नान्तर्भावः यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः ; तस्य पुनरङ्गानि—[1]अलंकारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते । न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः । अपृथग्भावे तु तदङ्गत्वं तस्य ।

लोचनम्

इतश्चेति ॥ न [2]केवलमन्योन्यविरुद्धवाच्यवाचकभावव्यङ्ग्यव्यञ्जकभावसमाश्रयत्वात् न तादात्म्यमलंकाराणां ध्वनेश्च यावत् स्वामिभृत्यवदङ्गिरूपाङ्गरूपयोर्विरोधादित्यर्थः ॥ अवयव इति ॥ एकैक [3]इत्यर्थः । [4]तदाह—पृथग्भूत इति ॥ [5]पृथग्भूतस्तथा मा भूत्, समुदाय[6]मध्यपतितस्तर्ह्यस्तु तथेत्याशङ्क्याह—[7]अपृथग्भावे त्विति ॥ तदापि न स एक एव समुदायः,

कौमुदी

ह्युपलक्षणं न्याय्यम् ; संकरालंकारस्य चेतरालंकारसमुदायात्मकस्य तदपेक्षया प्राधान्यासंभवादुपलक्षणनीत्या तत्संग्रहस्तावत् क्लिष्ट एव ; यथाश्रुत्यर्थस्थितिसंभवे सति तदतिक्रमेणाश्रुतार्थपरिकल्पनापि क्लेशाय कल्पत इति सर्वथा नेत्थंकारं व्याख्यानं समुचितमित्यर्थः । "इतश्च" इत्यत्र चशब्दस्य समुच्चयार्थस्यार्थमाह—न केवलमिति ॥ यथान्योन्यविरुद्धात्मनोः दहनतुहिनयोर्न तादात्म्यं तथा विरुद्धाश्रययोरपि । अन्योन्यविरोधश्च वाच्यवाचकव्यङ्ग्यव्यञ्जकभावः[भावयोः] प्रसिद्धः भिन्नसामग्रीत्वादितः ; तस्मान्न तदाश्रय[तदाश्रयालङ्कार]ध्वन्योरपि तादात्म्यसंभव इत्यर्थः । अङ्गाङ्गिभावस्य गुणप्रधानभावगर्भत्वात्, तस्य च स्वातन्त्र्यपारतन्त्र्यविरोधात्, एकस्मिन् वस्तुनि विनिवेशासम्भवान्न तादात्म्यमित्यर्थः । नन्वन्वयव्यतिरेकेण कस्यचिदवयविनोऽनुपलम्भादवयवस्यैवावयविरूपत्वं प्रसिद्धमिति कथं तन्निषेध इत्याशङ्क्यावयव इत्येकवचनार्थस्य विवक्षितत्वं दर्शयन् परिहरति—एकैक इति ॥ पृथग्भूतत्वमवयवावयव्यपेक्षमिति शङ्का मा भूत्, समुदायापेक्षं प्रत्येकमवयववर्त्यैवेति दर्शयन्नेकवचनार्थविवरणार्थतां दर्शयति—तदाहेति ॥ अत्र वक्तव्यम्—किमेकैक एवावयवः प्रत्येकं स्वरूपेणैवावयवित्वेनेष्यते, किं वा समुदितरूप इति । तत्र आद्यमपोह्य द्वितीयं शङ्कते—पृथग्भूत इति ॥ समुदायमध्यपतित इति ॥ समुदायोपहितस्वरूप इत्यर्थः ॥ तथेति ॥ अवयवित्वेन ॥ तदापीति ॥

१. क. ख. 'अलङ्कारो'
२. क. ख. 'केवलमनेन'
३. क. ख. 'इत्याह'
४. क. ख. 'तदाह' नास्ति ।
५. क. ख. घ. ङ. च. 'अथ' अधिकः ।
६. क. ख. 'मध्य' नास्ति ।
ग. घ. 'मध्यनिपतितः'
७. क. ख. 'पृथग्भावेति'

ध्वन्यालोकः

**न तु तत्त्वमेव । यत्रापि वा तत्त्वं तत्रापि ध्वनेः महाविषयत्वात् न[1]**

लोचनम्

अ[2]न्येषामपि समुदायिनां तत्र भा[3]वात् ; तत्स[4]मुदायिमध्ये च प्रतीयमानमप्यस्ति ; न च तदलंकारस्व[5]रूपम्, प्रधानत्वादेव ; य[6]त्त्वलंकाररूपं तदप्रधानत्वान्न ध्वनिः ; तदाह—**न तु तत्त्वमेवेति** ॥ नन्वलंकार एव कश्चित्त्वया[7] प्रधानताभिषेकं दत्त्वा ध्वनिरित्यात्मेति चोक्त इत्याशङ्क्याह—**यत्रापि वेति**[8] ॥

कौमुदी

समुदायमध्यपतितत्वेऽपि एकस्यैव खलु समुदायिनः समुदायरूपत्वमशक्याध्यवसानम्, अन्येषामपि समुदायिनां तत्र भावात् ; तेषामसमुदायित्वापातात् प्रत्येकमेव समुदायिषु समुदायस्याप्रतीतेरनुपपत्तेश्च । न च समुदितेष्ववयवेषु समुदायः, समुदायान्तराभावात् ; भावे वानवस्थापातात् ; न च समुदायो नाम नामान्तरमेव, न वस्तु किञ्चिदिति वक्तुं शक्यम्, तत्प्रत्ययव्यवहारयोरबाधितासन्दिग्धलोकप्रसिद्धिसमासादितसद्भावयोरनपह्नवनीयत्वात् ; अतो यदर्थ एवायमवयवसंघातः स एव समुदाय आत्मा प्रधानमवयवीत्यादि व्यपदेशान्तरगोचरोऽर्थः ; तदङ्गभूता एवान्ये समुदायिनः पृथक्पृथक् विभिन्नरूपोपकारसमर्पणमुखेन तत्प्रतीतिव्यवहारनिर्वाहकाः सन्तस्तद्गुणभावमेवावलम्बन्ते, न तु जातु तदात्मकत्वं स्वप्नेऽपि प्राप्नुवन्ति । तत्र शब्दार्थतदलङ्कारादीनां यन्मुखप्रेक्षितया समूहीभवनं स एव प्रतीयमानोऽर्थोऽवयवी, आत्मा च ; इतरेषां तादात्म्येन तदङ्गत्वमेव । ध्वनेस्तु न कथञ्चिदङ्गत्वम्, प्रधानत्वादिति ; प्राधान्याप्राधान्ये च वक्तृविवक्षाविशेषतदभावनिबन्धने एव, न वास्तवे ; तेन प्रतीयमानत्वमेव अङ्गित्वे न प्रयोजकम् ; किन्तु प्राधान्येन विवक्षाविषयत्वमेव इति ; एतदाह—**तन्मध्ये चेति** ॥ न चैतावता अस्योपमादिसाम्यापातः, प्रधानतया विवक्षितत्वात् । न चैतावता प्रतीयमानस्यात्मत्वमेवेति नियन्तुं शक्यम्, समासोक्त्यादिष्वलङ्काररूपत्वादेव ध्वनित्वानभ्युपगमादित्यर्थः । "यत्रापि वा" इत्यनुवादस्य ध्वनित्वसम्भावनायोग्यं विषयविशेषं प्रागुक्तसमासोक्त्याद्यन्यतमं दर्शयति—**नन्वलङ्कार एवेति** ॥ पर्यायोक्तालङ्कारस्य तावत् "भम धम्मिअ" इत्युदाहरणाङ्गीकारेण व्यङ्ग्यप्राधान्यविवक्षायां ध्वनित्वं प्रागुक्तम् ; सङ्करे च "होइ ण गुणाणुराओ"

१. क. ख. 'न' नास्ति ।
२. ङ. 'योऽन्येषाम्'
३. ग. 'तद्भावात्'
४. क. ख. 'समुदाय'
५. क. ख. ग. 'रूपम्'
६. ग. 'यदलङ्कार'
७. क. ख. 'त्वया' नास्ति ।
८. ङ. च. 'चेति'

ध्वन्यालोकः

**तन्निष्ठत्वमेव । "सूरिभिः कथितः" इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथंचित्प्रवृत्तेति**

लोचनम्

न हि समासोक्त्यादीनामन्यतम एवासौ तथास्माभिः कृतः, तद्विविक्तत्वेऽपि तस्य भावात् । समासोक्त्याद्यलंकारस्वरूपस्य समस्तस्याभावेऽपि तस्य दर्शितत्वात् "अत्ता एत्थ" इति "कस्स वा ण" इति[1] । तदाह—**न तन्निष्ठत्वमेवेति** ॥ [2]विद्वद्भ्य उपज्ञा[3] प्रथमतः[4] उपक्रमो यस्या[5] उक्तेरिति बहुव्रीहिः । तेन "**उपज्ञोपक्रमम्**"

कौमुदी

इत्यत्र अप्रस्तुतप्रशंसायां च कुत्रचित् ; अतो ध्वनिवादिभिः कश्चिदलंकार एव प्राधान्याख्यं विशेषान्तरम् उपनमय्य ध्वन्यादिव्यपदेशगोचरीकृत इत्यायातमिति नामान्तरकरणनिबन्धनं कियदिदमतिशयारोपणं भवतामित्यर्थः। ध्वनेरलङ्कारमात्रनिष्ठत्वाभावं वृत्तावुक्तमुपपादयति—**न हीति** ॥ असावलंकारः ॥ **तथेति** ॥ ध्वनित्वेनात्मत्वेन च ॥ **तद्विविक्तत्वेऽपीति** ॥ समासोक्त्यादिसमस्तालंकारजातीयस्वरूपस्पर्शराहित्येऽपीत्यर्थः । तस्य ध्वनेः । तदेव स्फोरयति—**समासोक्त्यादीति** ॥ उदाहरणमाह—**अत्ता एत्थेति** ॥ समासोक्तिग्रन्थे "समारोपितनायिकानायकयोः" इत्यत्र यथा शाब्दप्रक्रियाविरोधः कश्चिदाशङ्क्य व्याख्यान-विशेषप्रदर्शनेन परिहृतः, तद्वदिह विद्वदुपज्ञेत्यत्रापि तद्विरोधाशङ्कां परिहर्तुं विवक्षितं विग्रहविशेषं दर्शयति—**विद्वद्भ्य इति** ॥ उपक्रमः प्रवृत्तिः ; बहुव्रीहि-समासाङ्गीकारे फलमाह—**तेनेति** ॥ "तत्पुरुषोऽनञ्कर्मधारयः" इति तत्पुरुषस्य नपुंसकलिङ्गत्वविध्यधिकारे खलु "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति सूत्रेणोपक्रान्तस्य तत्पुरुषस्य नपुंसकत्वं स्मृतम् । अतस्तत्पुरुषसमासाङ्गीकार एव नपुंसकलिङ्गत्वप्रसङ्गः । इह तु बहुव्रीहिसमासस्यैवाभ्युपगमान्न तत्प्रसङ्ग इत्यर्थः । अथ व्यङ्ग्यार्थशब्दतदर्थतद्व्यापारात्मना चतुष्टयस्य ध्वनिशब्दवाच्यत्वं विद्वत्प्रसिद्धिबलात् साधयितुं प्रचिक्रंसुः, प्रथमं व्यङ्ग्यस्य ध्वनिशब्दवाच्यत्व-सिद्ध्यनुगुणतया श्रूयमाणशब्दं वैयाकरणैरेव प्रक्रियान्तरानुसारेणोक्तां दिशमनुसृत्य

१. क. ख. ग. 'इत्यादि'

२. क. ख. 'तस्मिन्निष्ठा यस्येति तन्न भवति । महाविषयत्वात् व्यापकत्वादित्यर्थः । घटो घट एव न भवति किं तु तत्कर्मपरोऽपि, तत्रापि न भवति किं तु घटेऽपीत्यनेन व्यापकोऽय-मित्युक्तं भवति महाविषयत्वात् । विद्वदुपज्ञेति' अधिकः ।

३. ग. घ. ङ. च. 'विद्वदुपज्ञा'

४. क. ख. ग. 'प्रथमः'

५. क. ख. 'अस्याः'

ध्वन्यालोकः

प्रतिपाद्यते[1] । प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम् । ते च तेषु[2] श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति[3] । तथैवान्यैस्तन्मतानुसारिभिः

लोचनम्

इति तत्पुरुषाश्रयं[4] नपुंसकत्वं निरवकाशम् ॥ श्रूयमाणेष्विति ॥ श्रोत्रशष्कुलीं संतानेनागता अन्त्याः[5] शब्दाः श्रूयन्त इति प्रक्रियायां शब्दजाः[6] शब्दाः श्रूयमाणा[7]

कौमुदी

व्याचष्टे—श्रोत्रशष्कुलीमिति ॥ श्रोत्रशष्कुली श्रोत्रेन्द्रियगोलका, सा च मण्डलाकारः तद्देशविशेषः, यदवच्छिन्न आकाशभागः श्रोत्रेन्द्रियमुच्यते ; तां सन्तानेन वीचीसन्तानन्यायेन प्राप्ता अन्त्या स्फोटापेक्षया चरमभावात् शब्दात् स्फोटाख्याज्जाताः सर्वेषां श्रोत्रेन्द्रियगोचरतां प्रतिपद्यन्ते । उक्तं हि—"स्थानकरणसंयोगविभागजाताच्छब्दाद्दशदिग्व्यापिनः कदम्बकाः, तद्वत् , वीचीसन्तानवच्च शब्दा जायमानाः श्रोत्रदेशं दशदिगवस्थितानाम् उपगच्छन्ति" इति । शब्दजत्वसाम्यात् घण्टानुरणनत्वं प्रसिद्धमेव । तेषां ध्वनिशब्दवाच्यत्वे भर्तृहरिवाक्यं प्रमाणयति—यथेति ॥ उत्पत्तिपक्षे स्फोटध्वनिभेदप्रकटनपरोऽयं श्लोकः । संयोगविभागाभ्यां करणभूताभ्याम् ; करणैः कर्तृभूतैः ; स्थानोपलक्षणार्थं च करणैरिति वचनम् ; स्थानकरणसंयोगविभागजाताच्छब्दाज्जाताः शब्दजाः घण्टानुरणनरूपाः शब्दा अभिव्यक्तिवादिभ्योऽन्यैरुत्पत्तिवादिभिरुक्ता इत्यर्थः । यदाह वृत्तिकारः "अनित्यपक्षे स्थानकरणप्राप्तिविभागपूर्वकः प्रथमाभिनिर्वृत्तो यः शब्दः स स्फोट इत्युच्यते । तज्जास्तु [तज्जातास्तु] सर्वदिक्कास्तद्रूपप्रतिबिम्बोपग्राहिणः सर्वद्रव्याणां

उपलोचनम्

"ते च तेषु श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति" इति वृत्तिग्रन्थस्य त्रिधा योजनेन ध्वनिव्यवहारस्य वैयाकरणव्यवहारोपज्ञतां व्यङ्ग्यार्थे व्यञ्जकशब्दार्थयोः व्यञ्जनावृत्तौ चतुष्केऽपि च समर्थयन्ति लोचनकाराः । तत्रैषा प्रथमा योजना—'येषामन्त्यशब्दानां शब्दजानामनुरणनरूपत्वमस्ति तेषु श्रूयमाणेषु' इति । एषा व्यङ्ग्ये ध्वनिव्यवहारानुगुणा । द्वितीययोजना लोचने स्फुटं प्रदर्शिता व्यञ्जकशब्दार्थयोर्ध्वनिव्यवहारानुगुणा । तृतीया योजना व्यञ्जनायां ध्वनिव्यवहारानुगुणा यथा—'वर्णेषु तावन्मात्रेषु सत्सु, तावत्स्वेव श्रूयमाणेषु सत्स्वपि, प्रसिद्धादधिको व्यापारः ध्वनिरिति व्यवहरन्ति' ॥

१. ग. 'प्रकाश्यते'
२. ग. 'तेषु' नास्ति ।
३. ख. 'व्याहरन्ति'
४. ग. '-श्रयत्वम्'
५. ङ. च. 'शब्दाः श्रूयन्ते अन्त्याः'
६. ग. 'शब्दजाः' नास्ति ।
७. क. ख. 'श्रूयमाणाः' नास्ति ।

## लोचनम्

इत्युक्तम् । तेषां[1] घण्टानुरणनरूपत्वं तावदस्ति, ते च ध्वनिशब्देनोक्ताः । यथाह[2] तत्रभवान्[3] भर्तृहरिः—

"यः संयोगवियोगाभ्यां करणैरुपजन्यते ।
स स्फोटः शब्दजाः[4] शब्दा ध्वनयोऽन्यैरुदाहृताः ॥"

एवं घण्टानिर्ह्रादस्थानीयो[5]ऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः[6] । तथा[7] श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः[8] स्फोटाभिव्यञ्जकाः ते

## कौमुदी

स्वेनात्मना निरवयवत्वादाकाशकल्पत्वेऽपि [आकाशस्यापि] मुख्यसमवायिदेशवत् संयोगिद्रव्यान्तरदेशप्रविभागोपचारे सति देशनैरन्तर्यप्रत्यासत्त्या कार्यकारणसन्तानाविच्छेदेन यथोत्तरमु[म]पचीयमानपूर्वप्रतिबिम्बोपग्राहक[पग्रह]शक्तयो मन्दप्रदीपप्रकाशिताऽरूप[तरूप]-कल्पाः क्रमेण प्रध्वंसमाना ये वर्णश्रुतिं [वर्णाः श्रुतिं] विभजन्ति, ते ध्वनय इत्युच्यन्ते" इति । व्यङ्ग्यस्यार्थस्य ध्वनिव्यवहार्यत्वे हेतुः घण्टानिर्ह्रादस्थानीयत्वम् । एवमपि व्यङ्ग्यविशेषस्यैव ध्वनिव्यवहार्यत्वसिद्धिः, रसादिव्यङ्ग्यस्यानुरणनरूपत्वविरहादध्वनित्वादित्याशङ्क्योपलक्षणन्यायेन कृत्स्नव्यङ्ग्यजातस्यापि तत्सिद्धेरदोष इत्याह—**अनुरणनेति** ॥ अथ वाच्यवाचकयोः ध्वनिव्यपदेशभाक्त्वं प्रदर्शयितुमाह—**ये इति** ॥ इह ध्वनिशब्देन न शब्दजाः शब्दा गृहीताः, किन्तु वर्णातिरिक्तस्फोटाभिव्यञ्जका वर्णा एव गकारादयः, तेषामपि वैयाकरणैर्ध्वनिशब्देन व्यवहारात्; नादशब्देनापि ते वर्णास्तैर्व्यवह्रियन्ते; "**नादैराहितबीजायाम्**" इत्यादौ बहूनां वर्णानामन्त्यो यो वर्णस्तद्विषयबुद्ध्या स स्फोटो नितरां व्यक्ततरेण रूपेण गृह्यत इति हि तेषां स्थितिः । वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णानर्थक्यात्, समुदितानां वाचकत्वे क्षणिकानां क्रमिकाणां च समुदायस्यैवासंभवात्, एकस्मृतिस्थानां वाचकत्वे सरो रस इत्यादावविशेषात् पूर्वपूर्वानुभवसंस्कारसहितान्त्यवर्णबुद्धिव्यञ्जनीय एकमिदं पदं वाक्यमित्यादिप्रत्यक्षप्रमाणक एव

१. च. 'तेषां च'
२. क. ख. 'तत्राह'
३. क. ख. 'भगवान्'
४. क. ख. 'शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः'
५. क. ख. 'घण्टादि'
ग. 'घण्टानाद'
६. क. ख. 'इत्येष प्रकारोऽव्यक्तशब्दानामेव वर्तते । व्यक्तशब्दानाम्' अधिकः ।
७. क. ख. च. 'यथा'
८. ङ. च. 'ग्राह्यस्फोट'

लोचनम्

ध्वनिशब्देनोक्ताः । यथाह स[1] एव तत्रभवान्—

"प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥"

इति[2] । तेन व्यञ्जकौ शब्दार्थावपीह[3] ध्वनिशब्देनोक्तौ । किंच[4] वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु, यथोक्तम्—

कौमुदी

शब्दः ; स एवार्थवाचक इति तैरभ्युपगमात् । अत्र वर्णानां ध्वनिशब्दवाच्यत्वे भर्तृहरिभाषितं प्रमाणयति—**यथाहेति** ॥ अयं तु श्लोकः

"यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ॥"

इति दृष्टान्तसमर्पकेण पूर्वश्लोकेन संमील्य योज्यः । एवमाशङ्क्य चायं श्लोकः यद्येको ध्वनिः स्फोटाभिव्यञ्जनसमर्थः स्यात्, द्वितीयध्वन्यानर्थक्यम् ; अथ सर्वेषां तत्सामर्थ्यम्, अविशेषादेकोच्चारणमेव स्यात्, न च समुदायोऽमीषां सम्भवतीति कथं ध्वनिभिः स्फोटाभिव्यक्तिरित्यत्राह "यथानुवाकः" इत्यादि । यथा लोकेऽनुवाकादिरावृत्त्या उच्चारणपौनःपुन्येन सोढत्वमेकस्यां बुद्धौ विषयीभावलक्षणं प्राप्नोति, न त्वेकैकस्यामावृत्तौ तथा निरूप्यते, न चैतावता तासामानर्थक्यम्, अन्त्यायामावृत्तौ विस्पष्टग्रहणानुगुणविशेषसंपादकतया पूर्वासामपि तद्धेतुत्वस्यानवखण्डनात् । एवं स्फोटाभिव्यक्तिरूपग्रहणानुगुणैः इदमित्थमिति बुद्ध्यारूढतयोपाख्यातुमशक्यैर्ध्वनिभिः प्रकाशिते शब्दे समुत्पन्नैरन्तरालवर्तिभिः प्रत्ययैस्तत्परिच्छेदहेतुभिः शब्दस्वरूपं व्यक्तरूपतया

"नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥"

इत्युक्तदिशावधार्यते । तदुक्तं भाष्यकृता—

"व्यक्तरूपग्रहणानुगुणा ह्यनुपाख्येयाकारा बहव उपायभूताः प्रत्यया ध्वनिभिः प्रकाश्यमाने शब्दे उत्पद्यमानाः शब्दस्वरूपावग्रहहेतवो भवन्ति" इति ॥ **तेनेति** ॥ व्यञ्जकानां ध्वनिशब्देन तैः व्यवहृतत्वात् । संप्रति व्यञ्जनव्यापारस्य ध्वनिशब्दवाच्यत्वं दर्शयितुमाह—**किञ्च वर्णेष्विति** ॥ **तावन्मात्रपरिमाणेष्विति** ॥ यादृशोऽयं श्रोत्रेन्द्रियेण

१. क. ख. 'भगवान् स एव'
२. ग. 'इति तेन' नास्ति।
३. ग. 'अपि' नास्ति।
४. ग. 'किं च' नास्ति।

लोचनम्

"अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥"

इति—तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारण[1]व्यापारादभ्यधिकः स व्यापारो[2] ध्वनिरुक्तः । स एव यदाह[3]—

"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु[4] वैकृताः ।
ध्वनयः समुपोहन्ते[5] स्फोटात्मा तैर्न भिद्यते ॥"

कौमुदी

गृह्यते तादृशपरिमाणविशिष्टेष्वित्यर्थः । अपिशब्दः समुच्चये "सत्सु" इत्यनेन सह "श्रूयमाणेषु" इत्यस्योपरि योजनीयः । तावत्स्वेव श्रूयमाणेष्वपि सत्स्वपीति स्वस्वरूपतो वर्णेषु परिमाणविशेषवत्तया स्थितेषु तथाविधेष्वेवाखण्डतया श्रोत्रेन्द्रियगोचरतां गतेषु च सत्स्वित्यर्थः । अस्य संवादश्लोकगर्भितस्य "वक्तुर्योऽन्यः" इत्यादिग्रन्थेन संबन्धः । वर्णेष्वेकदेशेन ग्रहणाग्रहणे न सम्भवत इत्यमुमर्थं संवादोक्त्या साधयति—**अल्पीयसेति** ॥ अल्पतरेण यत्नेनाप्युच्चारितं शब्दं मतिः कर्त्री, नैव गृह्णाति वा, सकलं वर्णं स्फुटं गृह्णाति वा ; न तु किञ्चिन्न गृह्णाति, किञ्चिद्गृह्णाति च निरवयवत्वात् सावयवेषु वस्तुष्वेवैकदेशेन ग्रहणाग्रहणयोर्दर्शनादित्यर्थः ; स्फुटम्—इति 'उक्तनीत्या' इत्युपस्कारः ; यथोक्तव्यापारस्य ध्वनित्वे[ध्वनित्वम्,] वर्णबुद्धिव्यञ्जनीय एकमिदं पदं वाक्यमित्यादिप्रत्यक्षप्रमाणक एव शब्दः, स एवार्थवाचकः इति तैरभ्युपगमात् । अत्रापि भर्तृहरिभणितं प्रमाणयति—**स एव यदाहेति** ॥ द्विविधो हि ध्वनिः, प्राकृतो वैकृतश्च ; तदाहुः—

"शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदनिमित्तत्वं वैकृतः प्रतिपद्यते ॥" इति ।

स्फोटस्वभावव्यञ्जको हि प्राकृतो ध्वनिः । उपलब्धस्योत्तरकालभाविप्रबन्धप्रवृत्तिरुपलब्धिप्रबन्धनिमित्तं वैकृतः । तत्र वैकृतध्वनिप्रतिपादकोऽयं श्लोकः । शब्दाभिव्यक्तिप्रकारमुत्तरश्लोकवक्ष्यमाणं सिद्धवत्कृत्याभिव्यक्तेरूर्ध्वमित्युक्तम् । शब्दस्य वृत्तिभेदमिति सम्बन्धः । वृत्तिभेदो द्रुतादिभेदः, तं वैकृता ध्वनयः अभिव्यक्त्युत्तरकालभाविनो ध्वनयः । समुपोहन्ते समुत्पादयन्ति । यथोत्पन्नमात्रं प्रदीपादि घटादीनामभिव्यक्तिहेतुः, अनुवर्तमानं

१. क. ख. 'उच्चाराणादि'
२. क. ख. ग. 'व्यापारः' नास्ति।
३. क. ख. ग. घ. 'यदाह स एव'
४. घ. ङ. 'व्यक्तिभेदास्तु' ग. 'वृत्तिभेदास्तु' च. 'व्यक्तिभेदं तु'
५. क. ख. 'समपोहन्ते'

ध्वन्यालोकः

सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमितिव्यपदेश्यो

लोचनम्

इति । अस्माभिरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिरुक्तः[1] । एवं चतुष्कमपि ध्वनिः । तद्योगाच्च समस्तमपि काव्यं ध्वनिः । तेन व्यतिरेकाव्यतिरेकव्यपदेशोऽपि न न युक्तः ॥ **वाच्यवाचकसंमिश्र इति** ॥ वाच्यवाचक-

कौमुदी

तु प्रबन्धाभिव्यक्तिं करोति, न घटादौ किञ्चिदादधाति, तद्विषयबुद्ध्यनुवृत्तिहेतुः ; एवं स्फोटविषयबुद्ध्यनुवृत्तिहेतवो वैकृताः । तैः द्रुतादिभिः । ग्रन्थे "द्रुतविलम्बितादि-वृत्तिभेदात्मा" इति तदुत्पादकत्वात्तदात्मकत्वोक्तिरौपचारिकी द्रष्टव्या ॥ **अस्माभिरपीति** ॥ प्रसिद्धव्यापाराभ्यधिकव्यापारविषयं ध्वनिशब्दनमुभयेषां तावत् समानमेव यतः, तेन व्यापारस्यापि ध्वनिशब्दव्यवहार्यत्वं समीचीनमेव ॥ **अतिरिक्त इति** ॥ व्यङ्ग्यार्थ-गोचरो व्यञ्जनलक्षणः ; ध्वननमिति भावव्युत्पत्त्या च ध्वनित्वम् । एवं व्यङ्ग्यवाच्य-वाचकव्यापाराणां क्रमेण ध्वनिशब्दवाच्यत्वं प्रसाधितमुपसंहरति—**एवमिति** ॥ ननु चतुष्कव्यतिरेकेण काव्यस्यापि तत्समुदायात्मकस्य ध्वनिव्यपदेशः प्रतीयते ; स किंनिबन्धन इत्याशङ्क्य समुदायिव्यतिरेकेण समुदायस्य परमार्थनिरूपणानर्हत्वात् समुदायिभूतव्यङ्ग्यादिध्वनिव्यपदेशहेतुरेव तद्धेतुरिति न हेत्वन्तरचिन्तनेन मनः खेदनीय-मित्याह—**तद्योगादिति** ॥ **तेनेति** ॥ ध्वनिशब्दवाच्यसमुदायात्मकत्वेनैव काव्यस्य ध्वनित्वलाभेनैव हेतुनेत्यर्थः । व्यतिरेको भेदः ; अव्यतिरेकस्त्वभेदः ; भेदव्यपदेश-स्तावत् 'काव्यस्यात्मा' इति ; अभेदव्यपदेशः 'काव्यविशेषः स ध्वनिः' इति ; समुदाय-समुदायिनोर्मिथो भेदाभेदयोर्वास्तवयोरवयव[रेव]सद्भावात्तदुज्जीवनेन भेदाभेदव्यपदेशोपपत्ति-रित्यर्थः ॥ **न न युक्त इति** ॥ अयुक्तत्वस्य भेदाभेदयोरेकत्र मिथो विरुद्धस्वभावतया प्रसक्तत्वादिह प्रतिषेधः ।

"सर्वत्र वस्तुसन्देहे निर्णेत्री केवला मतिः ।
सात्यन्तभेदवैधर्म्यादभेदमपि कर्षति ॥"

इत्युक्तन्यायबलाद्विरोधसमाधिरनुसन्धेयः । "वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदिश्यते[व्यपदेश्यः]" इति ग्रन्थस्य यावदुक्तार्थग्रहणे न विवक्षितार्थसिद्धिरिति

१. क. ख. ध. ङ. च. 'ध्वनिरित्युक्तः'

## लोचनम्

सहितः संमिश्र इति मध्यमपदलोपी समासः । "गामश्वं पुरुषं पशुम्[1]" इतिवत् समुच्चयोऽत्र चकारेण विनापि । तेन वाच्योऽपि ध्वनिः ; वाचकोऽपि शब्दो ध्वनिः ; द्वयोरपि व्यञ्जकत्वम्[2], ध्वनतीति कृत्वा[3] । संमिश्र्यते[4] विभावानुभावसंवलनयेति[5] व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा । शब्दनं शब्दः शब्दव्यापारः ; न[6] चासावभिधादिरूपः[7],

## कौमुदी

तदनुगुणं समासविशेषमाह—**मध्यमपदलोपीति** ॥ अतश्च वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमितिव्यपदेश्यश्चेत्यर्थो ग्राह्य इत्यर्थः । वाच्यादिसमुदायरूपस्य काव्यस्यैवात्र ध्वनित्वसंकीर्तनमिति भावात् [भायात्], तद्व्यावृत्त्यर्थमुक्तम्—**समुच्चयोऽत्रेति** ॥ अस्मिन् ग्रन्थे वाच्यादीनां प्रत्येकं समुदिताकारेण च यतो ध्वनित्वं व्यवस्थापितम् अतस्तेषां सर्वेषां ध्वनित्वमत्र समुच्चितमवगन्तव्यमित्यर्थः । चकारेण विनापि समुच्चयावगमे दृष्टान्तमाह—**गामिति** ॥ एतदेव स्पष्टीकुर्वन्नाह—**तेनेति** ॥ कथं वाच्यवाचकयोर्द्वयोरपि ध्वनित्वमित्यत आह—**द्वयोरिति** ॥ ध्वनतीति ध्वनिशब्दव्युत्पत्त्यनुरोधेन व्यञ्जकत्वमेव ध्वनित्वम्, नान्यत् किञ्चिदित्यर्थः । अस्त्वेवम् ; संमिश्रशब्देन तु कस्य अभिधानम् ? न हि अध्वनेस्तदभिधानं न्याय्यमित्याशङ्क्य तद्व्युत्पत्तिप्रदर्शनेन व्यङ्ग्याभिधायकत्वमाह—**संमिश्र्यत इति** ॥ संमिश्रणं संमेलनम् । कथं व्यङ्ग्यार्थस्य रसादेः संमेलनमित्यत उक्तम्—**विभावानुभावसंवलनयेति** ॥ विभावैरनुभावैश्च या संवलना संयोगोऽभिव्यङ्ग्याभिव्यञ्जकभावात्मकः तदात्मकं संमिश्रणमित्यर्थः । व्यङ्ग्यः संमिश्रशब्दवाच्यो भवति, स च ध्वन्यत इति कृत्वा ध्वनिशब्दवाच्यो भवतीति योजना । शब्दशब्दस्य वाचकार्थत्वात् पुनरुक्तिशङ्काशमनार्थमाह—**शब्दनमिति** ॥ एतद्विवृणोति—**शब्दव्यापार इति** ॥ आत्मशब्दवैयर्थ्यं परिहरन् शब्दश्चासावात्मा चेति विग्रहमभिप्रेत्य शब्दविशेषणत्वेनाभिधाव्यापारव्यवच्छेदकतामाह—

१. ङ. च. 'पशुम्' नास्ति ।
२. ग. 'व्यञ्जकत्वात्'
३. क. ख. 'ध्वनित्वभावात्'
४. क. ख. ग. 'मिश्रिते'
५. ग. 'संवलनच्छाययेति'
६. क. ख. 'न च . . योऽर्थः' नास्ति ।
७. च. 'अभिधारूपः'

ध्वन्यालोकः

**व्यञ्जकत्वसाम्याद्ध्वनिरित्युक्तः । न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्भेदसंकलनया**

लोचनम्

अपि त्वात्मभूतः; सोऽपि ध्वननं[1] ध्वनिः । काव्यमितिव्यपदेश्यश्च योऽर्थः सो[2]ऽपि ध्वनिः, उक्तप्रकारध्वनिचतुष्टयत्वात्[3] । अत एव साधारणं[4] हेतुमाह—**व्यञ्[5]जकत्वसाम्यादिति** ॥ व्यञ्[6]जकत्वं व्यङ्ग्य[7]व्यञ्जकभावः सर्वेषु पक्षेषु सामान्यरूपः साधारण इत्यर्थः । यत् पुनरेतदुक्तम् "वाग्विकल्पानामानन्त्यात्" इ[8]त्यादि, तत् परिहरति—**न चैवंविधस्येति** ॥ वक्ष्यमाणः प्रभेदो यथा—मुख्ये द्वे रूपे ;

कौमुदी

**न चेति** ॥ तस्यापि भावव्युत्पत्त्या ध्वनिशब्दवाच्यतामाह—**सोऽपीति** ॥ ध्वननमिति व्युत्पत्त्या सोऽपि ध्वनिरित्यर्थः । "काव्यमितिव्यपदेश्यः" इति ध्वनेरेव विशेषणमिति शब्दच्छायानुरोधादर्थसामर्थ्याच्चावभाति ; ततश्च न विवक्षितार्थलाभ इत्यतो विशेष्यान्तरं यच्चतुष्टयसमुदायरूपं काव्यं तद्विषयतया व्याचष्टे—**काव्यमिति** ॥ **योऽर्थः** ॥ समुदायरूप इति शेषः । तस्यापि ध्वनिशब्दवाच्यत्वे हेतुमाह—**उक्तेति** ॥ ननु उक्तप्रकारेण पञ्चानां ध्वनित्वे को हेतुः ग्रन्थे निर्दिष्टः, व्यञ्जकत्वसामान्यधर्मस्य व्यङ्ग्यादिष्वसम्भवात् ? तेनोक्तार्थपरत्वं वाच्यवाचकेत्यादिग्रन्थस्य न सुप्रतिपादमित्याशङ्क्याह—**अत एवेति** ॥ अत्र हेतोः साधारण्याभिधानम्, तस्य समनन्तरग्रन्थस्य यथोक्तार्थपरत्वे गमकत्वं चोभयमपि विधेयम् । यस्मात् पञ्चानामपि ध्वनित्वमत्र ग्रन्थेऽभिधित्सितम्, तत एव हेतोः साधारणस्य हेतोरभिधानमिति साधारणहेतुकथनलिङ्गादेव अस्मदुक्तार्थपरत्वमवसेयमित्यर्थः । हेतोः साधारण्यमेव व्याख्यानतो विशदयति—**व्यञ्जकत्वमिति** ॥ सामान्यशब्दोऽपि साधारणवचनः, न जातिवचन इत्याह—**साधारण इति** ॥ "न चैवंविधस्य" इत्यादेरनेकग्रन्थान्तरिताभाववाद्युक्तदूषणोद्धारपरतया—**यत्पुनरिति** ॥ कथं पुनर्वक्ष्यमाणप्रभेदस्तद्भेदो वेत्यतो विवृणोति—**यथेति** ॥ मुख्ये मुखे भवे ; अत

१. ग. 'ध्वननात्'
२. क. ख. 'स चापि'
३. ङ. च. 'चतुष्टयमयत्वात्'
४. क. ख. ग. 'साधारणहेतुम्'
५. ङ. च. 'व्यञ्जकत्वसाम्यादिति' नास्ति ।
६. ग. 'व्यङ्ग्यस्य' ङ. 'व्यञ्जकत्वमिति'
७. क. ख. 'व्यञ्जनभावः' ग. 'व्यञ्जकभावः'
८. ङ. 'इति'

ध्वन्यालोकः

**महाविषयस्य यत् प्रकाशनं तदत्र प्रसिद्धालंकारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः। न च तेषु कथञ्चिदीर्ष्यया कलुषितशेमुषीक-**

लोचनम्

तद्भेदा यथा—अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इत्यविवक्षितवाच्यस्य, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्य इति विवक्षितान्यपरवाच्यस्येति; तत्राप्यवान्तरभेदाः॥ **महाविषयस्येति**॥ अशेषलक्ष्यव्यापिन इत्यर्थः। विशेषग्रहणेनाव्यापकत्वमाह; मात्रशब्देनाङ्गित्वाभावम्।[1] तत्र[2] ध्वनिस्वरूपे भावितं प्रणिहितं चेतो येषाम्; तेन[3] वा[4] चमत्कारस्वरूपेण[5]

कौमुदी

एव च प्रधानभूते च। अनेन प्राथमिकः प्रधानभूतो वा भेदः प्रभेद इति प्रोपसर्गार्थो निरूपितः; भिद्यते व्यवच्छिद्यते रूप्यतेऽनेनेति भेदो रूपम् इति रूपशब्देन भेदशब्दार्थोऽपि। मुख्यभेदाप्रदर्शनं च समनन्तरमेव प्रदर्शयिष्यमाणत्वात्। तद्भेद इत्यत्र तच्छब्देन प्रभेदपरामर्श इत्याह—**तद्भेदा इति**॥ तद्भेदग्रहणं च तदवान्तरभेदानामप्युपलक्षणार्थं महाविषयत्वाभिधानसामर्थ्यादवगन्तव्यमित्याशयेनाह—**तत्रापीति**॥ तद्भेदविषयेऽपि। भवन्तीति शेषः। ते च द्वितीयोद्द्योते वक्ष्यन्त इति भावः। महच्छब्दोऽत्र कृत्स्नार्थवृत्तिः, विषयशब्दस्तु लक्ष्यविषय इत्याह—**अशेषेति**॥ प्रसिद्धालंकारप्रतिपादनेनेत्येव वक्तव्ये किमर्थं विशेषग्रहणं मात्रग्रहणं चेत्याशङ्क्य यथोक्तध्वनिस्वरूपवैलक्षण्यप्रकटनहेतुविवक्षया तदर्थवत्त्वमाह—**विशेषेति**॥ विशिष्यते व्यावर्तत इति विशेषः, तेन अलंकारस्य व्यावृत्तस्वरूपत्वान्न व्यापकतया अनुवृत्तध्वनितुल्यत्वमित्यर्थः। मात्रशब्दो लेशवाचकः, तेन च अङ्गित्वाभावसूचनमुखेन अङ्गिभूतध्वनिव्यतिरेको दर्शित इत्याह—**मात्रशब्देनेति**॥ आहेत्यनुषङ्गः। तद्भावितचेतसामित्यनेन काष्ठाप्राप्तसहृदयभावानां ग्रहणमित्याह—**तत्रेति**॥ भावितमिति भूधातोर्णिजन्तान्निष्ठायां रूपम्। अत एव व्याचष्टे—**प्रणिहितमिति**॥ प्रकर्षेण विषयान्तरेभ्यः प्रत्याहृत्य निहितं निवेशितम्; वाशब्दः समुच्चये, न विकल्पे॥ **तेनेति**॥ ध्वनिना।

१. क. ख. 'अङ्गित्वभावं'
२. क. ख. 'न चैवं भवतीत्यन्वयः' अधिकः।
३. क. ख. ग. 'न'
४. ग. 'वा' नास्ति।
५. क. ख. ग. 'रूपेण'

ध्वन्यालोकः

**त्वमाविष्करणीयम्[1] । तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः । अस्ति ध्वनिः ॥**

**स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन ।**

लोचनम्

भावितमधिवासितम्[2], अत एव मुकुलितलोचनत्वादिविकारकारणं चेतो येषाम्[3] । **अभाववादिन इति** ॥ अवान्तरप्रकारत्रयभिन्ना[4] अपीत्यर्थः । तेषां प्रत्युक्तौ फलमाह—**अस्तीति** ॥

उदाहरणपृष्ठे भाक्तत्वं सुशङ्कं सुपरिहरं च भवतीत्यभिप्रायेणोदाहरणदानावकाशार्थं भाक्तत्वालक्षणीयत्वे[5] प्रथमं परिहरणयोग्ये अप्यप्रतिसमाधाय भविष्यदुद्द्योतगतानुवादानुसारेण[6] वृत्तिकृदेव प्रभेदनिरूपणं करोति—**स चेति** ॥ पञ्चधापि

कौमुदी

**चमत्कारस्वरूपेणेति** भावनोत्पत्तौ हेतुः ; चमत्कार एव स्वमसाधारणं रूपम्, चमत्कारसारेणेत्यर्थः । भावना च संस्कारापरपर्यायमधिवासनम् ; तदवधारणे हेतुं विवक्षन्नाह—**अत एवेति** ॥ सहृदयहृदयसागरसमुच्चलनशरद्राकारोहिणीसहचरसब्रह्मचारिधुरंधरेषु सुकविनिबन्धनेषु खलु श्रूयमाणेषु तदर्थासारसुधारसास्वादमुकुलितलोचनः स्वपरसंवेदनपराङ्मुखहृदयो भवति सहृदयवर्ग इति तावदवगतमेवैतत् ; तेन तदीयविकारपरम्पराविलोकनैकप्रमाणावसेयो ध्वनिचमत्काराधिवासलाभ इत्यर्थः । प्रतिवचनस्य पूर्वं प्रकारत्रयेऽपि कृतत्वात् तत्सर्वसंग्राहकोऽत्राभाववादिशब्दो ग्राह्य इत्याह—**अवान्तरेति** ॥ अभाववादनिरासात् अस्तित्वे सिद्धे किमर्थं तत्प्रतिज्ञा ? प्रतिज्ञातोपपादनं चावश्यकम्, तदभावाच्च न तत्प्रतिज्ञोपपत्तिरित्याशङ्क्य परमतनिरासस्य तत्त्वनिर्णयफलत्वकथनद्वारेण शास्त्ररूपत्वमस्य ग्रन्थस्य दर्शयितुं फलकथनमिदमित्याह—**तेषामिति** ॥

ननु क्रमप्राप्तं भाक्तवादनिराकरणमलक्षणीयत्वपक्षप्रतिक्षेपं च समुल्लङ्घ्य ध्वनिप्रभेदतदुदाहरणप्रदर्शनं वृत्तिकृतोऽसंगतमिव प्रतिभातीत्याशङ्क्य तच्छङ्कानुवादेन तदुल्लङ्घने कारणमाह—**उदाहरणपृष्ठ इति** ॥ प्रदर्शिते उदाहरणे तत्र ध्वननव्यापारसहकारि-

१. क. ख. 'तथैवान्यैः..आविष्करणीयम्' नास्ति ।
२. क. ख. 'चेतो येषां' अधिकः ।
३. क. ख. ग. 'इति' अधिकः ।
४. क. ख. 'भिन्नः'
५. क. ख. ग. 'भाक्तत्वाल्लक्षणीयत्वे'
६. क. ख. 'उद्द्योतानु' ग. 'उद्द्योते गतानु'

## लोचनम्

ध्वनिशब्दार्थे[1] येन यत्र[2] यतो यस्मै यस्य चेति बहुव्रीह्यर्थाश्रयेण यथोचितं सामानाधिकरण्यं

## कौमुदी

भूताया ध्वननव्यापाराविनाभूताया लक्षणायाः समुन्मेषात् भक्तिरेव ध्वनिरिति शङ्का सुसंपादा, इतरथा ध्वनिसान्निध्याप्रतिपत्तेस्तदेकरूपत्वाशङ्काया अनवसरदुःस्थत्वात्; तत्परिहारश्च परस्परभेदापादकस्वरूपभेदादेः स्पष्टावभासत्वात् तदनन्तरं सुकर इति प्रथमप्राप्तभाक्तवादादिपरिहारावधीरणया प्रभेदनिरूपणप्रस्तावोऽयं युक्त इत्यर्थः। इत्यभिप्रायेण अप्रतिसमाधाय प्रभेदनिरूपणं करोतीत्यन्वयो वक्तव्यः। तर्हि उदाहरणमेव दीयताम्, किमिति प्रभेदनिरूपणं कृतमित्यत उक्तम्—**उदाहरणावकाशदानार्थमिति** ॥ ननु कारिकाकृतानुक्तत्वात् वृत्तिकृतस्तन्निरूपणमयुक्तम्। न चानुक्तत्वेऽप्यभिसंहितत्वात् तदुक्तिर्युक्ता, तदभिसन्धिसद्भावे प्रमाणाभावादित्याशङ्क्योक्तम्—**भविष्यदिति** ॥ "अविवक्षितवाच्यो यः" इति द्वितीयोद्द्योतप्रमुखे यच्छब्देन प्रभेदानुवाददर्शनादनुक्तस्य अनभिसंहितस्य वा अनुवादायोगात् इहैवोक्तप्रायत्वं गम्यते; न च तदापाततोऽवभाति; ततश्च प्रत्युत अनुवादोऽप्यनुपपन्न इति केषांचित् प्रतीतिर्भवति; तन्निरासार्थमिहैव कारिकाकारस्थाने स्थित्वा स्वयमेव तन्निरूपणं करोतीत्यर्थः। एवं यत्नकरणे हेतुतयोक्तम्—**वृत्तिकृदिति** ॥ ननु ध्वनेर्विशेषणमेतत् अविवक्षितवाच्यो ध्वनिः, विवक्षितान्यपरवाच्यो ध्वनिरिति च; ध्वनिशब्दश्च पञ्चस्वर्थेषु पूर्वं योजितः। तत्र पञ्चस्वर्थेषु ध्वनिशब्देन अविवक्षितवाच्यविवक्षितान्यपरवाच्यशब्दयोः केन प्रकारेण सामानाधिकरण्यं योजनीयमित्यपेक्षायामाह—**पञ्चधापीति** ॥ पञ्चधा व्यवस्थितेऽपि ध्वनिशब्दार्थे वाचकादीनां पञ्चसंख्यानामर्थानामन्यपदार्थत्वमङ्गीकृत्य तत्तदौचित्यानुसारेण सामानाधिकरण्यं ध्वनिशब्देन अविवक्षितवाच्यविवक्षितान्यपरवाच्यशब्दयोर्गमयितव्यम्। तथा हि—यदा वाचकशब्दो ध्वनिः तदा अविवक्षितोऽप्रधानीकृतो वाच्यो येन शब्देन, यत्र यस्मिन् शब्दे, यतः यस्माच्छब्दात्, यस्मै यदर्थत्वेन, यस्य यत्संबन्धित्वेन वा स तथोक्त इति बहुव्रीहिः; तत्र शब्द एव अन्यपदार्थः; एवं व्यङ्ग्यव्यापारकाव्यानामप्यन्यपदार्थत्वं नेयम्। तथा विवक्षितोऽन्यपरश्च वाच्यो

१. ग. 'शब्दार्थौ'

२. क. ख. ग. 'यत्र यतो यस्य यस्मै इति' घ. 'यस्मै यतो यत्र यस्य चेति'

लोचनम्

सुयोजम् । वाच्येऽर्थे[1] तु ध्वनौ[2] वाच्यशब्देन स्वात्मा[3] । तेनाविवक्षितोऽप्रधानीकृतः[4] स्वात्मा येनेत्यविवक्षितवाच्यो व्यञ्जकोऽर्थः ; एवं विवक्षितान्यपरवाच्येऽपि । यदि वा कर्मधारयेणार्थपक्षे[5] अविवक्षितश्चासौ वाच्यश्चेति, विवक्षितोऽन्यपरश्चासौ[6] वाच्यश्चेति । तत्रार्थः कदाचिदनुपपद्यमानत्वादिना[7] निमित्तेनाविवक्षितो भवति ; कदाचिदुपपद्यमान[8] इति कृत्वा विवक्षित एव ; व्यङ्ग्यपर्यन्तां तु[9] प्रतीतिं स्वसौ-

कौमुदी

येन यत्र यतः यस्मै यस्य वा स तथोक्त इत्यादि पूर्ववत् । तत्किमविशेषेण सर्वत्र इयमेव सामानाधिकरण्यगमनिका ? हन्त ! वाच्यार्थो ध्वनिरिति पक्षे अविवक्षितो वाच्यो येन वाच्येनेति न संगच्छेत, वाच्यान्तरानिरूपणादित्याशङ्क्याह—**वाच्येऽर्थे त्विति** ॥ **स्वात्मेति** ॥ उच्यत इति शेषः । अस्मिन् पक्षे योजनामाह—**तेनेति** ॥ तथा सतीति यावत् । वाच्यस्य विवक्षाप्रसक्त्यभावात् कथमविवक्षितत्वोक्तिरित्यतो व्याचष्टे—**अप्रधानीकृत इति** ॥ **स्वात्मेति**—वाच्यरूपः ॥ **येनेति**—वाच्यार्थेन ॥ **अर्थ इति**—वाच्यः ॥ **एवमिति**—विवक्षिता[तोऽ]न्यपरश्च वाच्यः स्वात्मा यस्येति व्यञ्जको वाच्यार्थ उक्त इत्यर्थः । नन्वविवक्षितत्वस्य अप्राधान्यत्वाभ्युपगमे सति विवक्षितत्वस्य प्राधान्यात्मकत्वमर्थसिद्धं स्यात् विवक्षितान्यपरवाच्ये, तच्च विरुद्धम् ; एकस्यैव शब्दस्य अर्थद्वयपरत्वाङ्गीकारो वा स्यादित्यपरितोषात् प्रकारान्तरेण व्याचष्टे—**यदि वेति** ॥ वाच्यार्थो ध्वनिरिति पक्षे कर्मधारयसमासाङ्गीकारेण वा योजनेति योजना । अयमेव च निःसङ्कटतया स्थितः पक्षः । कथं पुनर्वाच्यस्य कुत्रचिदविवक्षितत्वम् ? न हि स्वरूपभेदप्रयुक्त एवायं विशेषः शक्योपपादः, तस्य अनुपलम्भपराहतत्वादित्यत्राह—**तत्रार्थ इति** ॥ वाच्यः । आदिशब्दादनुपयोगित्वम् । ननु विवक्षितान्यपरवाच्यप्रभेदे वाच्यस्य विवक्षितत्वादेव तत्प्रतीतेः स्वस्मिन्नेव विश्रान्तिलाभात् कथं व्यङ्ग्यप्रतीतिपर्यवसायितया अन्यपरत्वमुपपद्यतामित्यत आह—**व्यङ्ग्यपर्यन्तामिति** ॥ प्रतीतिं स्वगोचरां व्यङ्ग्यपर्यन्तां व्यङ्ग्यार्थप्रतीति-

१. क. ख. 'अर्थे' नास्ति
२. घ. 'उत्पन्नेन'
३. ग. 'वक्ष्यते' अधिकः ।
४. क. ख. 'भूतः'
ग. 'कृतः......णार्थपक्षे अविवक्षितश्चासावर्थश्चेति । विवक्षितान्यपरश्चासौ वाच्यश्चेति । तत्रार्थः'
५. क. ख. 'धारयः । अत्र पक्षे'
६. क. ख. 'विवक्षितश्चासौ वाच्यश्चेति । तत्रार्थः'
७. क. ख. 'अनुपपाद्य'
८. क. ख. 'उपपाद्य इति'
९. क. ख. 'तु' नास्ति ।

लोचनम्

भाग्यमहिम्ना करोति । अत एवार्थोऽत्र प्राधान्येन व्यञ्जकः ; पूर्वत्र शब्दः । ननु च[1] विवक्षितं[2]श्चान्यपरश्चेति विरुद्धम् । अन्यपरत्वेनैव विव[3]क्षणात् को विरोधः ? सामान्येनेति ॥ वस्त्वलंकाररसात्मना हि[4] त्रिभेदोऽपि ध्वनिरुभाभ्यामेवाभ्यां

कौमुदी

विश्रान्तामेव करोतीति यावत् । स्वस्य यत् सौभाग्यं गुणाद्युपस्कारकृतं सौन्दर्यं तद्बलात् । उक्तमेव वाच्यार्थगतमविवक्षितत्वम्, विवक्षितत्वे सत्यन्यपरत्वं च विशेष-मुपजीव्य प्रभेदयोरुभयोर्व्यञ्जकत्वे शब्दार्थयोर्गुणप्रधानभावलक्षणं विशेषं वदन् प्रागुक्तं विशेषं द्रढयति—**अत एवेति** ॥ अत्र प्रकृते विवक्षितान्यपरवाच्ये ; पूर्वत्र विवक्षितान्य-परवाच्यापेक्षया पूर्वमुक्तेऽविवक्षितवाच्ये ॥ **शब्द इति** ॥ प्राधान्येन व्यञ्जक इत्यनुषङ्गः । उभयत्रोभयोः सहकारित्वं च पूर्वं द्विवचनव्याख्यानोक्तं न प्रस्मर्तव्यमिति भावः । ननु विवक्षा नाम वक्तुमिच्छा । सा च स्वव्याप्यस्य प्राधान्यं स्वव्याप्त्यविनाभूतं गमयन्ती स्वरूपमात्रविश्रान्ततामिष्यमाणस्य वस्तुनो नियमेन संपादयति । "इच्छाकर्मतयैव (व स्यात्) प्राधान्यं सर्ववस्तुगतम् (गम्") इत्यभियुक्तवचनात् ; अन्यपरत्वं च नाम नियमेनान्यमुखप्रेक्षितया वस्तुनोऽप्रधानभूतत्वेन अन्यशेषतयावस्थायित्वलक्षणम् ; तत् कथमेकोपाधावेककालमेकस्मिन्नेवानयोर्विरुद्धयोः समावेश इति चोदयति—**ननु चेति** ॥ उत्तरमाह—**अन्यपरत्वेनैवेति** ॥ न खलु विवक्षितत्वमात्रमन्यपरत्वोपमदर्कम्, किं तु प्रधानतया विवक्षितत्वम् ; इच्छाविषयत्वेन(त्वं न) तन्मात्ररूपतया प्राधान्यापादकम् ; किन्तु स्वोद्देशप्रवृत्तेच्छाविषयत्वमेव, साध्येच्छाविषयत्वेऽपि साधनस्य गुणभावोपलम्भात् । न च प्रधानतया विवक्षितत्वं वाच्यस्यात्र संभावनागोचरः, व्यङ्ग्यार्थप्रतीत्यर्थत्वेनैव वाच्यार्थस्यात्र वक्तुरिच्छया व्याप्यमानत्वादिति विवक्षितत्वान्यपरत्वयोर्विरोधः शक्याप-नोदन इत्यर्थः । सामान्यस्य क्रोडीकृतसकलविशेषरूपत्वादिह कतरविशेषोप-संग्रहाभिप्रायेण सामान्येनेति निर्देश इत्यपेक्षायामाह—**वस्त्वलंकारेति** ॥ हिः प्रसिद्धौ ।

१. घ. 'च' नास्ति ।
२. क. ख. ग. 'विवक्षा चान्य-परत्वं चेति'
३. ग. 'विवक्षितात्'
४. ग. 'हि' नास्ति ।

लोचनम्

संगृहीत इति भावः । ननु तन्नामपृष्ठे[1] एतन्नामनिवेशनस्य किं फलम् । उच्यते— अनेन हि नामद्वयेन ध्वननात्मनि व्यापारे पूर्वप्रसिद्धाभिधातात्पर्यलक्षणात्मकव्यापारत्रितयावगतार्थप्रतीतेः प्रतिपत्तृगतायाः प्रयोक्त्रभिप्रायरूपायाश्च विवक्षायाः सहकारित्व-

कौमुदी

वस्त्वादिभेदे त्रिविधो ध्वनिरिति प्रसिद्धिः । तादृशत्रिभेदोऽपि ध्वनिराभ्यामेव संगृहीत इति दर्शयितुं सामान्येनेति निर्देश इत्यर्थः । इह वृत्तौ प्रथमं ध्वनिरिति सामान्यं नाम विहितम् ; अनन्तरम् अविवक्षितवाच्य इति विवक्षितान्यपरवाच्य इति विशेषनामनी विहिते ; तत्रानन्तर्यकरणाभिप्रायं प्रकटयितुं प्रश्नमुद्घाटयति—**नन्विति** ॥ **तन्नामपृष्ठ इति** ॥ तस्य ध्वनिरिति नाम्नोऽनन्तरम् ॥ **एतन्नामेति** ॥ एतयोरविवक्षितवाच्यविवक्षितान्यपरवाच्यनाम्नोः । अस्यार्थः—यद्युदाहरणावकशादानार्थतया प्रभेदमात्रमिह प्रतिपिपादयिषितं तदा तत्प्रदर्शनमात्रं वृत्तिकृता कर्तव्यम् ; न तु तदभ्यधिकं किञ्चित् । इह तु सामान्येन तस्य ध्वनिरिति नाम प्रथमं विधाय "स च" इति विशेषनामद्वयं प्रभेदाश्रयतया तदनन्तरं प्रदर्शितम् ; तदत्राधिकयत्नावलम्बने कोऽभिप्राय इति । अत्रोत्तरमभिप्रायप्रदर्शनमुखेनाह— **उच्यत इति** ॥ ध्वननव्यापारसम्बन्धो हि पञ्चानां ध्वनिशब्दवाच्यत्वे निबन्धनमित्युक्तम् । तादृशि च ध्वननव्यापारे शब्दार्थोभयकर्तृके प्रतिपत्तृगतार्थप्रतिपत्तिः प्रयोक्तृगता च विवक्षा सहकारिपदवीमधिशयाते तावत् अन्तरेण ते द्वे अपि व्यञ्जनव्यापारस्य अनुत्थानादित्येतदप्युक्तमेव । अतश्च ध्वनिस्वरूपाविर्भावपरिपन्थिधुरंधराभाववादापवादेन यत् ध्वनिस्वरूपं सत्तामुपनीतम् 'अस्ति ध्वनिः' इति, तद्यावत्तत्सहकारिकारणसाकल्यसंपत्तिर्न प्रदर्श्यते तावत् असदेव वा किं न स्यात्, अकिञ्चित्करत्वादिति तत्प्रतिपिपादयिषया एष ध्वनिनामविधानानन्तरमेव नामद्वयविनिवेशनयत्न आस्थितो वृत्तिकृता, न प्रभेदप्रदर्शनमात्रपरतयैव तत्प्रवृत्तिः ; तत्राप्यविवक्षितवाच्यनामसामर्थ्यात् प्राक्तनव्यापारत्रयजन्यार्थप्रतीतिः व्यञ्जनव्यापारार्थकतया तत्सहकारिणीति प्रदर्शितं भवति ; वाच्याविवक्षितत्वेन अस्य लक्षणामूलत्वप्रतीतेस्तत एव ततः प्राक्तनव्यापारद्वयमूलत्वस्य अर्थलब्धत्वात् । विवक्षितान्यपरवाच्यनाम्ना प्रयोक्तृगताया विवक्षायाः सहकारित्वं दर्शितम् ; अन्यपरत्वेन विवक्षा व्यञ्जकत्वनिबन्धनं यतः । अतो ध्वनिनामसिद्धये यत् [मेव यत्]ध्वनिस्वरूपं तस्य सहकारिकारणकलापप्रदर्शनेन तत्स्वरूपस्फुटप्रतिपत्तिर्नामद्वयविनिवेशनप्रयोजनमित्यर्थः । किं सुवर्णे पुष्पत्वरूपणम्, आहोस्वित् सुवर्णस्य पुष्पसारूप्यमिति

१. ग. 'किन्नाम'

ध्वन्यालोकः

तत्राद्यस्योदाहरणम्—

"सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥"

लोचनम्

मुक्तमिति ध्वनिस्वरूपमेव नामभ्यामेव प्रोज्जीवितम्[1] ॥ **सुवर्णपुष्पामिति** ॥ सुवर्णानि पुष्यतीति सुवर्णपुष्पा । एतच्च वाक्यमेवासंभवत्स्वार्थमिति[2] कृत्वाविवक्षितवाच्यम्[3] । तत[4] एव पदार्थमभिधायान्वयं[5] च तात्पर्यशक्त्यावगमय्यैव बाधकवशेन तमपहस्त्य[6] सादृश्यात् सुलभसमृद्धिसंभारभाजनतां लक्षयति । तल्लक्षणाप्रयोजनं[7] शूरकृतविद्यसेवकानां प्राशस्त्यमशब्दवाच्यत्वेन गोप्यमानं सन्नायिकाकुचकलशयुगलमिव महार्घतामुपर्यद्ध्वन्यत[8] इति

कौमुदी

संशयापनुत्त्यर्थमाह—**सुवर्णानीति** ॥ इहोदाहरणे लक्षणं योजयति—**एतच्चेति** ॥ वाच्यस्य अविवक्षितत्वे हेतुः—**वाक्यमेवेति** ॥ न पदमात्रमित्येवकारार्थः । अविवक्षितत्वमिहार्थस्यानुपपद्यमानत्वनिमित्तमित्युक्तम्—**असम्भवत्स्वार्थमिति** ॥ यदुक्तं प्रतिपत्तृगता प्राक्प्रवृत्तव्यापारत्रयावगतार्थप्रतीतिर्ध्वननव्यापारे सहकारिणी अविवक्षितवाच्ये ध्वनाविति तदस्मिन्नुदाहरणे घटयति—**तत एवेति** ॥ अर्थस्य अनुपपन्नत्वादेवेत्यर्थः । क्रमेण अभिधातात्पर्यशक्त्योः पदार्थान्वयावगमं प्रति हेतुत्वं द्रष्टव्यम् ॥ **अवगमय्यैवेति** ॥ अवगमनसमनन्तरमेवेत्यर्थः । तमित्यन्वयः । अपहस्तनं बाधनम् ॥ **सादृश्यादिति** ॥ लक्षणानिमित्तमुक्तम् । इत्थं प्राक्तनव्यापारत्रयजन्यार्थप्रतीतिं सहकारिभूतामुद्भाव्य तदुत्थापितं न्यग्भावितार्वाचीनव्यापारतश्चोद्धुरकन्धरीभूतं व्यञ्जनव्यापारमाह—**तल्लक्षणेति** ॥ व्यापारस्य प्राधान्यं विषयप्राधान्यकृतमित्यतस्तदाह—**महार्घतामुपनय[पय]दिति** ॥ महार्घतावाप्तौ हेतुः गोप्यमानत्वम् ; तत्र हेतुः अशब्दवाच्यत्वम् ; अत्र सर्वलोकस्वसंविदितं

उपलोचनम्

सुवर्णपुष्पामित्यादि—महाभारते उद्योगपर्वान्तर्गतविदुरप्रजागरपर्वणि, ३५ अध्याये, ७४, पद्यमेतत् । "सुवर्णानि पुष्यतीति सुवर्णपुष्पा" इति लोचनम् । अत्र " चिन्वन्ति प्रत्यहं

१. क. ख. 'प्रोज्झितम्'
२. ग. 'वाक्यक्रमेऽसंभवत्'
३. ग. 'वाच्यात्'
४. ङ. 'अत एव'
५. ग. 'धेयान्वयं'
६. क. ख. 'वशेनोपहृत्य' ग. घ. च. 'तमपहृत्य'
७. क. ख. 'प्रयोजकं'
८. क. ख. ङ. 'उपनयद्ध्वन्यत'

ध्वन्यालोकः

द्वितीयस्यापि—

"शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥"

लोचनम्

शब्दोऽत्र प्रधानतया व्यञ्जकः, अर्थस्तु[1] तत्सहकारितयेति चत्वारोऽत्र[2] व्यापाराः ॥ **शिखरिणीति** ॥ न हि निर्विघ्नोत्तम[3]सिद्धयोऽपि श्रीपर्वतप्रभृतय[4] ईमां[5] सिद्धिं विदध्युः । दिव्यकल्पसहस्रादिश्चात्र परिमितः काल[6]ः । न चैवंविधोत्तमफ[7]लत्वेन पञ्चाग्निप्रभृत्यपि तपः श्रुतम् । त[8]वेति भिन्नं पदम्—समासेन विगलिततया सा न प्रतीयताम्[9]—तव

कौमुदी

दृष्टान्तमाह—**नायिकेति** ॥ यदुक्तं प्रागविवक्षितवाच्ये शब्दः प्राधान्येन व्यञ्जकः, अर्थस्तु तत्सहकारीति तदुदाहरणेऽस्मिन्नेव योजयति—**इति शब्द इति** ॥ **चत्वारोऽत्रेति** ॥ अविवक्षितवाच्ये प्रभेदे । न एवमन्यत्रेत्यर्थः । द्वितीयप्रभेदोदाहरणे ध्वनिं दर्शयति—**न हीत्यादिना** ॥ **इमामिति** ॥ तरुण्यधरपाटलिमलाभसुभगम्भावुकबिम्बफलदशनात्मिकाम् ॥ **अत्रेति** । ईदृश्याः सिद्धेः प्राप्तौ । एवंविधं यथोक्तबिम्बफलदशनात्मकं यदुत्तमं फलं तत्साधनत्वेन । ननु तवेति युष्मदर्थस्याधरविशेषणतया विवक्षितत्वात् तवाधरपाटलमिति व्यस्तपदनिर्देशोऽनुपपन्नः 'नोपसर्जनं पदं पदान्तरेण संबध्यते' इति न्यायात्; 'ऋद्धस्य राजपुरुषः' इत्यादाविव विशेषणविशेष्यभावसंबन्धासंभवप्रसङ्गादिति शक्तितिरस्कृतमपि कवेरव्युत्पत्तिदोषमापाततोऽवभासमानमपाकुर्वन् विपक्षे दोषप्रदर्शनपूर्वकं विवक्षितार्थव्यञ्जनानुकूलमभिप्रायं दर्शयति—**तवेति भिन्नमिति** ॥ यदि हि 'त्वदधरारुणमम्बुरुहाक्षि यत्' इति वा अन्यथा वा वृत्त्या निर्देशः क्रियते, तदा समाससामर्थ्यात्

उपलोचनम्

गृहीतसारां कुर्वते" इति अर्थं वर्णयन्ति काव्यानुशासनकाराः । वयं तु ब्रूमः—चिनोतिर्द्विकर्मकः; सुवर्णपुष्पामिति प्रधानकर्म ; पृथिवीमिति गुणकर्म ; सुवर्णपुष्पेति औत्प्रेक्षिकीं काञ्चनलतां व्यपदिशति ; अयं चौत्प्रेक्षिको व्यपदेशः "पगोडा ट्री" (pagoda tree) इत्यादिपाश्चात्यभाषाव्यपदेशतुल्यः । न च "पाककर्णपर्णपुष्पफलमूल-" इत्याद्यनुशासने जाग्रति, कुतोऽत्र लतापरत्वे न ङीषिति शङ्क्यम् ; अप्रसिद्धगगनकुसुमायमानलतापरत्वे जातिवाचित्वाभावादिति । एवमेव "सुवर्णानि पुष्प्यतीति सुवर्णपुष्पा" इति वदतां लोचनकाराणामाशयः ॥

१. क ख. 'तु' नास्ति ।
२. क. ख. ग. 'अत्र' नास्ति ।
३. ग. 'निर्विघ्नक्रम'
४. क. ख. 'पर्वतादयः'
५. ग. 'इत्थं'
६. क. ख. ग. 'किमभिधानमिति' अधिकः ।
७. ग. 'फलजनकत्वेन'
८. च. 'न वेति'
९. क. ख. 'प्रतीयते'
घ. 'सा न प्रतीयताम्' नास्ति ।
ङ. 'मानं न प्रतीयेत'
च. 'सा मा न प्रतीयताम्'

## लोचनम्

दशतीत्यभिप्रायेण । तेन यदाहुः[1]—'वृत्तानुरोधात्त्वदधरपाटलमिति न कृतम्' इति, तदसदेव ॥ दशतीति[2] ॥ आस्वादयति अविच्छिन्नप्रबन्धतया[3], न त्वौदरिकवत्परं भुङ्क्ते ; अपि तु रसज्ञोऽत्रेति तत्प्राप्तिवदेव[4] रसज्ञताप्यस्य तपःप्रभावादेवेति ॥ शुकशावक इति ॥ तारुण्यादुचितकालेलाभोऽपि[5][6] तपसैवेति[7] । अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापन-

## कौमुदी

युष्मदर्थो विगलिततया अप्रधानतया प्रतीयेत, दशनक्रियाकर्मकारकविशेषणतयोप-सर्जनीभावात् ; ततश्च प्रतिपिपादयिषितार्थविशेषप्रतिपत्तिरखण्डितैव नोत्पद्येत ; किं तर्हि ? एतदधरपाटलिमलाभसुभगंभावुकबिम्बफलं तव दशति, त्वत्संबन्धितया दशति । त्वामेव प्रधानतयोद्दिश्य दशतीति दशनक्रियया प्रधानतया संबन्धितां युष्मदर्थ-स्याभिप्रेत्य तवेति व्यस्ततया निर्दिष्टमित्यर्थः । उक्तोपजीवनेनापातप्रतीयमानार्थ-शय्याग्राहिणः कस्यचिद्व्याख्यातुः समाधानमनूद्य दूषयति—तेन यदिति ॥ अविच्छिन्नेति ॥ आस्वादनाधिकतया धर्मिणो द्रव्यरूपस्यानवशेषेणोपयोगे सति हि प्रबन्धविच्छेदो भवेत् ; इह तु नैवम् ; यथापूर्वमेव द्रव्यस्वरूपोपादाने सति तदीयरसास्वादमेव सान्तत्येनासौ करोति ॥ औदरिकवदिति ॥ स खलु रसास्वाद-वार्तानभिज्ञः केवलमुदरपरिपूरणपरतया निरवशेषमेव भोज्यद्रव्यं यथाकथञ्चित् भुङ्क्ते ॥ अत्रेति ॥ रसास्वादकर्मणि ॥ तत्प्राप्तिः ॥ तत्तादृशमहार्घबिम्बफलप्राप्तिः । बिम्बफलं दशति इत्युभयमपि तपःफलत्वाद्येनेत्यनेन संबध्यत इति भावः । उचिते काले बिम्बफलतदा-स्वादलाभः ; उचितकालस्य वा लाभः उचितकाललाभः ॥ अनुरागिण इति ॥ प्रच्छन्नो यः स्वाभिप्रायोऽधरास्वादलिप्सात्मकः, तस्य ख्यापनार्थं यद्वैदग्ध्येनौचित्यापरित्यागेन चाटु-विरचनम्, स्वाभिप्रायं ख्यापयतीति स्वाभिप्रायख्यापनं वा यद्वैदग्ध्येन चाटुविरचनं तदात्मकं विभावस्य निजरत्यालम्बनभूतस्य तरुणीलक्षणस्योद्दीपनं स्वाभिप्रायानुगुणतया स्वस्मिन्नेव रत्युत्साहभजनरूपं यद्वस्तु तदिह श्लोके व्यङ्ग्यमित्यर्थः । अथ पूर्वोदाहरणादस्य

१. क. ख. 'यत्केचिदाहुः'
२. ग. 'दशतीति' नास्ति ।
३. क. ख. ग. 'अनवच्छिन्न'
४. घ. 'प्राप्तिवदरस' च. 'प्राप्तिरेव रस'
५. ग. 'लोभोऽपि'
६. क. ख. 'फलम्' अधिकः ।
७. क. ख. घ. च. 'तपस एवेति'

## लोचनम्

वैदग्ध्यचाटुविरचनात्मकविभावोद्दीपनं व्यङ्ग्यम् । अत्र च त्रय एव व्यापाराः—अभिधा तात्पर्यं ध्वननं चेति ; मुख्यार्थबाधादिविरहे मध्यमकक्ष्याया लक्षणायास्तृतीयस्या अभावात् । यदि वाकस्मिकविशिष्टप्रश्नार्थानुपपत्तेर्मुख्यार्थबाधायां सादृश्याल्लक्षणा भवतु मध्ये ; तस्यास्तु तत् प्रयोजनं ध्वन्यमानमेव ; तत्तुर्यकक्ष्यानिवेशि । केवलं

## कौमुदी

विशेषमाह—**अत्र चेति** ॥ चशब्दः तुशब्दार्थे । लक्षणाया अभावे हेतुमाह—**मुख्यार्थेति** ॥ आदिशब्दान्निमित्तप्रयोजने । मुख्यार्थबाधादिविरहे सति, तद्विरहाद्धेतोरिति यावत् । मध्यमकक्ष्यायाः तात्पर्यशक्तिविषयभूतान्वयरूपार्थकक्ष्यायाम् ॥ **अभावादिति** ॥ अनुत्थानादित्यर्थः । इत्थमापाततो निरूपणे व्यापारत्रयमात्रवत्तया विशेषमुक्त्वा निष्कर्षदशायामपि विशेषमाह—**यदि वेति** ॥ शुकशावकतपश्चरणदेशादिविशिष्टो यः प्रश्नरूपोऽर्थः तदनुपपत्तावाकस्मिकत्वं हेतुः ; अनुपपत्तिश्च मुख्यार्थबाधायाम् ॥ **सादृश्यादिति** ॥ शुककर्तृकबिम्बफलदशनेनाधरास्वादस्य साम्यं लक्षणानिमित्तमित्यर्थः । नन्वेवं सति व्यङ्ग्याभिमतस्य प्रयोजनस्य लक्षणाकक्ष्यायामेवान्तर्भावान्न तदतिरिक्तव्यञ्जनव्यापारसिद्धिरित्याशङ्क्य प्रयोजनविषये व्यञ्जनव्यापारस्यावश्याभ्युपेयत्वान्नैवमित्याह—**तस्यास्त्विति** ॥ **तदिति** ॥ प्रच्छन्नेत्यादिना प्रागुक्तम् । लक्षणायां खलु तदेव प्रयोजनम् ; तच्च ध्वननव्यापारगम्यमेव तथात्वेनावस्थितमेव सत् बलात् कक्ष्यान्तरावगाह्येवेत्यनिच्छताप्यभ्युपेयम् ; तत्रापि लक्षणाव्यापारान्तराभ्युपगमेऽनवस्थातादवस्थ्यस्य दर्शितत्वादिति व्यञ्जनव्यापारगोचरः तुरीयकक्ष्यानिवेश्यर्थोऽभ्युपेय इत्यर्थः । तत् किमविशेष एव पूर्वोत्तरोदाहरणयोः सर्वथैवेति नेति किञ्चिद्विशेषमाह—**केवलमिति** ॥ प्रधानमित्यनेनाभिधातात्पर्यशक्त्योरपि लेशतः सहकारित्वं न विघटत इति दर्शितम् । यद्यपि लक्षणाव्यापारस्य ध्वननव्यापारोत्थापने सहकारिधुरीणत्वम्, अत एव ह्यविवक्षितवाच्यस्य लक्षणामूलत्वं तत्र तत्रोद्घुष्यते, तथाप्यभिधातात्पर्यशक्त्युपजीवित्वाल्लक्षणाप्रवृत्तेस्तयोरपि लक्षणाद्वारा सहकारि-

१. क. ख. ग. 'वैदग्ध्य' नास्ति ।
२. क. ख. ग. 'उन्मीलनम्'
३. क. ख. 'मुख्यार्थबाधाद्यभावे'
ग. 'मुख्याद्बाधाविरहे'
४. ग. 'भावात्'
५. ग. च. 'मुख्यबाधायाम्'
६. क. ख. 'तु' नास्ति ।
७. क. ख. ग. 'तत्' नास्ति ।
८. क. ख. 'न केवलम्'

लोचनम्

पूर्वत्र लक्षणैव प्रधानं ध्वननव्यापारे सहकारि ; इह त्वभिधातात्पर्यशक्ती, वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तेः ; केवलं लेशेन लक्षणाव्यापारोपयोगोऽप्यस्तीत्युक्तम् , असंलक्ष्यक्रमव्यङ्ग्ये तु लक्षणासमुन्मेषमात्रमपि नास्ति , असंलक्ष्यत्वादेव क्रमस्येति वक्ष्यामः ; तेन द्वितीयेऽपि भेदे चत्वार एव व्यापाराः ।

कौमुदी

पदवीनिवेशो न दण्डवारितः । न हि यद्भावमन्तरेण यद्भावासंभवः तत्र तस्य हेतुत्वं लेशतोऽपि नेति वक्तुं शक्यम् । प्राधान्याप्राधान्यकृतस्तु विशेषो वस्तुगत्योपनीयमानो न [न न] शक्यावबोध इति भावः ॥ **अभिधातात्पर्यशक्ती इति** ॥ प्रधानं सहकारीत्यनुषज्यते, तत्र कारणमाह—**वाक्यार्थेति** ॥ उक्तं हि पुरस्तात् "व्यङ्ग्यपर्यन्तां तु प्रतीतिं स्वसौभाग्यमहिम्ना करोति" इति । नन्वेवमकिञ्चित्करत्वाल्लक्षणायास्त्रय एव व्यापारा इत्यायातम् ; विद्यमानाया अप्यस्या अकिञ्चित्करत्वादविद्यमानकल्पत्वादित्याशङ्क्य अकिञ्चित्करत्वमसिद्धयति—**केवलमिति** ॥ **उक्तमिति** ॥ समनन्तरमेव "तस्यास्तु तत्प्रयोजनम्" इत्यादिना लक्षणायाः स्वसामग्र्यन्तःपातिप्रयोजनविषयव्यापारान्तरोत्थापकत्वस्य दर्शितत्वादित्यर्थः । तत्किमिदानीं सर्वत्रैव विवक्षितान्यपरवाच्यप्रभेदे लक्षणा अस्त्येव इति नेत्याह—**असंलक्ष्यक्रमव्यङ्ग्ये त्विति** ॥ तत्र हि विद्यमानोऽपि क्रमो न संलक्ष्यते । अत एव ह्यसंलक्ष्यक्रमव्यङ्ग्यनामधेयत्वमस्य ; तदसंलक्षणे च मुख्यार्थबाधादिस्फुरणशरणाया लक्षणायाः समुन्मेषोऽपि दूरनिरस्तावसर इत्यर्थः ॥ **वक्ष्याम इति** ॥ समनन्तरमेव भाक्तवादभञ्जनपर्वणीत्यर्थः । "यदि वा" इति प्रस्तुतपक्षान्तरमुपसंहरति—**तेनेति** ॥ एवशब्दोऽप्यर्थे । यदुक्तम् "उदाहरणपृष्ठ एव भाक्तत्वं सुशङ्कं सुपरिहरं च भवति" इति तदिदानीं प्रतिसन्दधान उदाहरणद्वयानन्तरमेव यद्भाक्तवादस्यानुभाषणपूर्वकमपाकरणं तस्यैव द्वितीयोदाहरणेऽपि पूर्वत्रेव व्यापारचतुष्टयवत्त्वेनाविशिष्टत्वमे[त्वादे]कत्वं दर्शयन् लाघविकतयैकयैव वचनव्यक्त्या भाक्तवादनिराकरणप्रकरणमवतारयति—**अत एवेति** ॥ यस्मात् द्वितीयेऽपि प्रभेदे चत्वारो व्यापारास्तत एव हेतोरित्यर्थः ॥

१. क. ख. 'व्यापार'
२. ग. 'व्यापारयोगो'
३. घ. 'लक्षणोन्मेषे'
४. ग. 'अस्तु लक्ष्यत्वादेव'

लोचनम्

अत एवोभयोदाहरणपृष्ठ एव "भाक्तमाहुः" इत्यनुभाष्य[1] दूषयति । अयं भावः—भक्तिर्ध्वनिश्चेति किं पर्यायवत्ताद्रूप्यम्, अथ पृथिवीत्वमिव पृथिव्या अन्यतो व्यावर्तकधर्मरूपतया लक्षणम्, उत काक इव देवदत्तगृहस्य

कौमुदी

तत्र हि भक्तेरभावे तदानन्तर्यनियमो भक्तेर्ध्वनित्वशङ्कातत्परिहारयोरश्लिष्ट एव स्यादित्यर्थः । इह कारिकावृत्त्योर्ध्वनेर्भक्त्यैकत्वपक्षं भक्तेर्ध्वनिलक्षणत्वपक्षं च प्रतिक्षिप्य भक्तेर्ध्वनिं प्रत्युपलक्षणत्वपक्षः क्वचिद्विषयेऽनुज्ञातः । तत्रामीषां पक्षाणां भाक्तवादपक्षोपक्षेपावसरेऽनुपन्यस्तत्वात् कथमिहैव तन्निरास इत्याशङ्क्य ध्वनेर्भाक्तत्वमुपयद्भिः प्रकारत्रयान्यतर[तम]प्रकारावश्याभ्युपगन्तव्यत्वापादनाभिप्रायेणायं प्रस्ताव इति दर्शयितुमाह—**अयं भाव इति ॥ पर्यायवदिति ॥** हस्तः कर इत्यादिपर्यायशब्दवाच्यार्थवदित्यर्थः । पर्यायशब्दो हि क्रमाभिधायकत्वार्थतया हस्तः पाणिरित्यादिशब्दमात्रे प्रसिद्धः । तदाहुः—

'पर्यायेणैव ते यस्माद्वदन्त्यर्थं न संहताः ।
पर्यायत्वमतः सर्वपर्यायाणां प्रतिष्ठितम् ॥' इति ।

तत्र तावत् स्वरूपमात्रं लक्षणं वेति द्वैधम् । लक्षणत्वेऽपि स्वरूपान्तर्भूतमेव स [वा] यदाकदाचित् सम्बन्धमात्रेण वा अन्यव्यावृत्तिप्रत्ययजनकमिति द्वैधम् । तदनुरोधेनात्र क्रमेण त्रयो विकल्पाः । ताद्रूप्यं तादात्म्यमेकस्वलक्षणमिति यावत् । अन्येभ्यः सजातीयेभ्यो

१. क. 'अनुभाष्य दूषयति—**भक्त्या बिभर्तीति ॥** अत्रोक्तप्रकार इति पञ्चस्वर्थेषु योज्यम्—शब्दे, अर्थे, व्यापारे, व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—**वाच्येति ॥** तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः । भक्तिश्च ध्वनिश्चेति ताद्रूप्यं लक्षणमुपलक्षणमिति त्रिविधमपि मतं दूषयति—किं पर्यायवत्ताद्रूप्यं पृथिवीत्वमिव पृथिव्या अन्यव्यावर्तकधर्मरूपतया लक्षणम्, उत काक इव देवदत्तगृहस्य संभवमात्रादुपलक्षणम् । तत्र प्रथमं पक्षं निराकरोति—**उपचारमात्रमिति ॥**'

ख. 'अनुभाष्य भक्त्येत्यादिना दूषयति—अत्रोक्त...[यथा कमातृकम्]... इव देवदत्तस्य ...निराकरोति—**भक्त्या बिभर्तीति ॥** तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः ॥ **उपचारमात्रमिति ॥**'

ग. 'अनुभाष्य दूषयति । अयं भावः—भक्ती......ति किं पर्यायात्ताद्रूप्यमथ पृथवात्वमिव पृथि......अन्यतो व्यावर्तकधर्मरूपतया लक्षणम्—उत काक इव देवदत्तगृहस्य संभवमात्र-........भेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—**वाच्येति ॥** तात्पर्येण विश्रान्तिधामतया प्रयोजनत्वेने... ... ...रमात्रमिति । उपचा... ... ...'

ध्वन्यालोकः

यदप्युक्तं भक्तिर्ध्वनिरिति तत् प्रतिसमाधीयते—

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ।**

अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं[1] बिभर्ति, भिन्नरूपत्वात् । वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं[2] यत्र व्यङ्ग्यप्राधान्ये[3] स ध्वनिः । उपचारमात्रं तु[4] भक्तिः ॥

लोचनम्

संभवमात्रादुपलक्षणम ? तत्र प्रथमं पक्षं निराकरोति—**भक्त्या बिभर्तीति** ॥ उक्तप्रकार इति पञ्चस्वर्थेषु योज्यम्—शब्दे, अर्थे, व्यापारे[5], व्यङ्ग्ये समुदाये च । रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह—**वाच्येति** ॥ तात्पर्येण विश्रान्तिधामतया । प्रयोजनत्वेनेति यावत् । प्रकाशनं द्योतनमित्यर्थः ॥ **उपचारमात्रमिति** ॥

कौमुदी

विजातीयेभ्यश्च व्यावर्तको यो धर्मः तद्रूपत्वेन भक्तिर्ध्वनेर्लक्षणं भवति । तथा सत्यपि हि वक्तुं शक्येत भाक्ताद्व्यतिरिक्तो नास्ति ध्वनिरिति ॥ **संभवमात्रादिति** ॥ कदाचित् सत्त्वमात्रेणेत्यर्थः । उपशब्दः सामीप्यार्थः ; समीप एव वर्तमानः सन् न तु स्वरूपेऽन्तर्भावमनुभूय स्थितः सन् लक्षयतीत्युपलक्षणम् ॥ **पञ्चस्विति** ॥ शब्दार्थयोर्ध्वनतीति, व्यापारे ध्वननमिति, व्यङ्ग्ये ध्वन्यत इतीत्यादि । ध्वनिस्वरूपप्रदर्शनस्य प्रयोजनं कारिकोक्तरूपभेदात्मकहेतुसिद्धिरित्याह—**रूपभेदं दर्शयितुमिति** ॥ तात्पर्यशब्देन नात्र द्वितीयकक्ष्यानिवेशिनो व्यापारस्य ग्रहणमित्याशयेनाह—**विश्रान्तिधामतयेति** ॥ ननु प्रयोजनविषयो ध्वननव्यापार उक्तः, इह तु विश्रान्तिधामभूतस्यार्थस्य प्रकाशनमुच्यते । तत्र कोऽसौ विश्रान्तिधामभूतोऽर्थ इत्याकाङ्क्षायां प्रतीतेः प्रयोजनपर्यन्तानुधावित्वनैयत्यात्तदेव विश्रान्तिस्थानं नान्यदित्याह—**प्रयोजनत्वेनेति** ॥ प्रकाशनशब्दस्य सामान्यवचनत्वात् विवक्षितविशेषपर्यवसायितामाह—**द्योतनमिति** ॥ उपचारशब्दोऽयं साधारण्येन गौणलक्षणावृत्त्योर्ग्राहक इत्याह

१. ग. 'नैकताम्'
२. क. ख. ग. 'अर्थप्र'
३. क. ख. 'व्यङ्ग्यप्राधान्ये' नास्ति ।
४. क. ख. 'तु' नास्ति ।
५. ङ. 'व्यङ्ग्ये व्यापारे'

ध्वन्यालोकः

मा[1] चैतत् ; स्याद्भक्तिर्लक्षणं ध्वनेरिति । आह—

**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥ १७ ॥**

न[2] च भक्त्या ध्वनिर्लक्ष्यते । कथम् ? अतिव्याप्तेरव्याप्तेश्च । तत्रातिव्याप्तिः

लोचनम्

उपचारो गुणवृत्तिर्लक्षणा[3] उपचरणमतिशयितो व्यवहार इत्यर्थः । मात्रशब्देनेदमाह—यत्र लक्षणाव्यापारात्तृतीया[4]दन्यश्चतुर्थः प्रयोजनद्योतनात्मा व्यापारो वस्तुस्थित्या संभवन्नप्यनुपयुज्यमानत्वेनानाद्रियमा[5]णत्वादसत्कल्पः "यमर्थमधिकृत्य" इति हि[6] प्रयोजनलक्षणम्—तत्रापि

कौमुदी

—**गुणवृत्तिर्लक्षणेति** ॥ कथमनयोस्तच्छब्दप्रवृत्तिरिति तदाह—**उपचरणमिति** ॥ यस्मिन्नर्थे येन शब्देन व्यवहारः प्रसिद्धतमः तमतिलङ्घ्यान्यस्मिन् समीपस्थे कथंचित्तच्छब्दप्रवृत्तिद्वारको यो व्यवहारः स उपचारः गौणलाक्षणिकयोरर्थयोरपि अविशिष्ट एवेति उपचारशब्देन तदुभयसंग्रहो युक्त इत्यर्थः । मात्रग्रहणं तर्हि किमर्थमित्यतस्तत्प्रयोजनमाह—**मात्रशब्देनेति** ॥

**यत्रेति** ॥ "वदति बिसिनीपत्र-" इत्यादौ । वदतीत्यत्र तावत् मुख्यार्थानुपपत्तेः सादृश्यनिमित्ता गमकत्वविषया लक्षणा स्थितैव । तत्र यत्परिस्फुटतया सन्तापग्रहणलक्षणं प्रयोजनं तत्रास्ति तावद्ध्वननव्यापारः यतो वस्तुस्थित्या मुख्यवृत्तिपरित्यागान्यथानुपपत्तिलक्षणयासौ निश्चितसद्भावः ; न चासावुपयोगी चारुत्वविशेषाभावादिति सचेतसामसावुपेक्षणीयत्वात् सन्नप्यसत्कल्प एव भवति, न च प्रयोजनविषयत्वादेवाद्रियमाणत्वमवश्यंभावीति कथमसत्कल्पत्वमिति वाच्यम् ; यतो न मुख्यं प्रयोजनत्वमस्य तल्लक्षणाभावात् ; किन्तु फलत्वमात्ररूपममुख्यमेव । तच्च नोपयोगाय पर्याप्तमित्यनाद्रियमाणत्वादसत्कल्पत्वमेवेत्यर्थः ॥ **तत्रापि** ॥ तादृश्युदाहरणेऽपि ॥ **लक्षणमिति** ॥ लक्षणाव्यापार इत्यर्थः ॥ अयं भावः—यदि भक्तिः ध्वनिश्चेत्येकं तत्त्वं स्यात्, तर्ह्युदाहृते विषये ध्वनिसद्भावो वा लक्षणाया अभावो वा स्यात् ; न चैतदुभयमपि । तेन लक्षणात्मिकाया भक्तेः ध्वनिविवर्तस्वरूपत्वनिश्चया-

१. क. ख. घ. ङ. 'तत्रैतत्'
२. ग. 'नैव'
३. घ. 'लक्षणम्'
४. घ. ङ. च. 'तृतीयस्मादन्यः'
५. क. ख 'माणत्वात् संकल्पो' ग. 'माणत्वादस्मत्कल्पो' घ. 'माणत्वादस्मत्कल्पे'
६. क. ख. ग. 'प्रवर्तते तद्धि' घ. 'इति प्रयो'

ध्वन्यालोकः

**ध्वनिव्यतिरिक्तेऽपि[1] विषये भक्तेः संभवात् । यत्र हि व्यञ्जकत्वकृतं महत् सौष्ठवं**

लोचनम्

लक्षणास्तीति कथं ध्वननं लक्षणं चेत्येकं तत्त्वं स्यात् । द्वितीयं पक्षं दूषयति—**अतिव्याप्तेरिति** ॥ असाविति ध्वनिः । तयेति भक्त्या । ननु ध्वननमवश्यंभावीति कथं तद्यतिरिक्तोऽस्ति विषय इत्याह—**महत् सौष्ठवमिति** ॥ अत एव प्रयोजनस्यानादरणीयत्वाद्यञ्जकत्वे न किंचित् कृत्यमिति भावः । महद्ग्रहणेन गुणमात्रं तद्भवति, यथोक्तम्—"समाधिरन्यधर्मस्य

कौमुदी

नैकत्वशङ्कावकाश इतीममर्थं दर्शयितुं मात्रग्रहणमिति । द्वितीयः पक्षो भक्तिर्ध्वनेर्लक्षणमित्येवंरूपः ॥ **अवश्यंभावीति** ॥ लक्षणायामिति शेषः । अन्यथा त्रयसान्निध्याभावाल्लक्षणाप्रवृत्त्यसंभवापातात् इत्यर्थः । ननु तथापि व्यञ्जनव्यापारस्तावदस्ति प्रयोजनगोचरः ; तावतैव चरितार्थत्वं स्यादित्याशङ्क्य न सद्भावमात्रं ध्वनिव्यवहारप्रयोजकम् किं तु चारुत्वातिशयशालित्वमेव, तच्चात्र नास्तीति न ध्वनिव्यवहारविषयत्वमित्याह—**अत एवेति** ॥ महतः सौष्ठवस्याभावादेवेति । महद्ग्रहणेन किञ्चित् सौष्ठवं व्यङ्ग्यकृतमनुज्ञातमेव ; ध्वनिव्यवहारपर्याप्तता तु तस्य वार्यत इत्याह—**गुणमात्रमिति** ॥ **तदिति** ॥ तादृशं व्यञ्जकत्वम् ईदृशस्य व्यवहारस्य गुणमात्ररूपत्वे संवादमाह—**यथोक्तमिति** ॥ क्वाप्यन्यस्मिन् वस्तुनीति शेषः । उदाहरणं यथा ममैव—

कन्दर्पोपनिषद्रहस्यनिगदव्याख्याननैरन्तरी-
निष्णाते दरहृष्टनीलकमलस्पर्धालुनी लोचने ।
निस्तन्द्रोदयमानशारदशशाङ्काभं मुखाम्भोरुहं
मुग्धाक्ष्या बहुवर्णितैरलमहो विश्वैकरम्यं वपुः ॥

अत्र हि निगदव्याख्याननिष्णातत्वादिको धर्मोऽन्यधर्मिनिष्ठोऽपि सन् अन्यधर्मत्वेनारोप्य व्यवहृत इति समाधिर्नामायं कश्चित् गुणः । किमर्थमुपचरितव्यवहार-

१. ग. 'क्ते च'
२. ग. 'व्यङ्ग्यकृतम्'
३. क. ख. ग. 'लक्षणा'
ङ. 'लक्षणाम्'
४. क. ख. 'तत्रैतदिति'
५. क. ख. 'प्रयोजनस्य प्रयोजनानादरणात्'
घ. ङ. च. 'प्रयोजनस्यानादरणात्'
६. क. ख. ग. 'न कृत्यं किञ्चिदिति'
७. क. ख. 'न तद्भवति'
८. घ. 'समानाधिकरणधर्मस्य'

ध्वन्यालोकः

**नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते । यथा—**

लोचनम्

काप्यारोपो[1] विवक्षितः" इति दर्शयति । ननु प्रयोजनाभावे कथं तथा[2] व्यवहार इत्याह—**प्रसिद्ध्यनुरोधेति** ॥ परम्परया तथैव प्रयोगात् । वयं तु ब्रूमः—प्रसिद्धिर्या प्रनोजनस्या-

कौमुदी

प्रवृत्तेः प्रसिद्ध्यनुरोधनिबन्धनत्वं ग्रन्थे प्रतिपादितमित्याशङ्क्य कविव्यवहारसामर्थ्यादेव मुख्यप्रयोजनसत्त्वाङ्गीकार्यत्वशङ्कां तदन्यथोपपत्तिप्रदर्शनेन परिहर्तुमित्याशयेनावतारयति—**ननु प्रयोजनाभाव इति** ॥ तद्व्यवहारः उपचरितशब्दवृत्त्या व्यवहारः । प्रकृष्टा सिद्धिः प्रसिद्धिः ; सिद्धिश्च व्यवहारस्य प्रयोगमार्गाधिरोहः ; प्रकर्षस्तु तस्याविच्छिन्न-पारम्पर्यागतत्वमित्याह—**परम्परयेति** ॥ **तथैवेति** ॥ उपचरितशब्दवृत्त्या ॥ ननु परम्पराप्रयोगस्यापि प्रयोजनविशेषमूलत्वस्यावश्याभ्युपेयत्वादितरथान्धपरम्परात्वेना-प्रामाण्यापत्तेरुक्तहेतुः प्रत्युत ध्वनित्वापादक एवेत्यपरितुष्यन् प्रकारान्तरेण व्याचष्टे—**वयं तु ब्रूम इति** ॥ अस्मिन् पक्षे प्रयोजनस्यैव प्रसिद्धिरुच्यते ; तस्य च प्रकर्षेण प्रकटतया सिद्धिः प्रतीतिः प्रसिद्धिः ध्वन्यतिरिक्तस्फुटशब्दार्थव्यापारविषयत्वयोग्यतया स्फुटतरावभासमानत्वलक्षणा ; तदनुरोधेनैव, तद्विपरीतध्वननव्यापारविषयत्वानर्हतया तदनु-रोधेनैव, अयमेवंविधो व्यवहारः प्रवृत्त इत्यर्थमभिप्रेत्य व्याचष्टे—**प्रसिद्धिर्येति** ॥

उपलोचनम्

"उपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते" इति मूलस्य अन्धपरम्पराभ्युपगमभिया प्रकारान्तरेण "वयं तु ब्रूमः" इत्यादिना विवरणं लोचनकारै-राद्दतम् । तत्र लोचनकाराणामयमाशयः—ध्वनिस्थले यादृशी निगूढतावश्यापेक्षणीया तादृशी न प्रकृतोदाहरणेषु लक्षणापृष्ठभाविनि प्रयोजनांशे; तादृशं च प्रयोजनं वाच्यमपि न परिम्लान-मित्यादिकाव्यस्य चारुतां विहन्ति; अतः 'वदति बिसिनीपत्रशयनम्' इति शब्द उपचरितवृत्तिः गौणः इत्येव, न ध्वनिरिति, कवयः कविसहृदयाः, व्यवहरन्ति । 'उपचरितशब्दवृत्त्या' इत्यत्राभेदे तृतीया व्यवहारेऽन्वेति ।

वस्तुतस्तु तृतीयोद्द्योते "प्रसिद्ध्यनुरोधाभ्यामपि गौणानां शब्दानां प्रयोगदर्श-नात्—यथोक्तं प्राक्" इति प्रकृतम् उपचरितशब्दवृत्त्येत्यादिकं परामृशतां मूलकाराणा-मभिसन्धिर्नानुगृह्णातीदं लोचनकाराणां क्लिष्टं विवरणमिति सुधीभिर्विभावनीयम् ।

१. घ. ङ. च. 'आरोपे' २. च. 'तद्व्यवहारः'

## लोचनम्

निगूढतेत्यर्थः[1] ; उत्तानेनापि रूपेण तत्प्रयोजनं[2] चकासन्निगूढतां[3] निधानवदपेक्षत इति भावः । वदतीत्युपचारेण[4][5] हि स्फुटीकरणप्रतिपत्तिः प्रयोजनं यद्यगूढं[6] स्वशब्देनोच्यते[7] किमचारुत्वं स्यात् ? गूढतया वर्णने[8] वा किं चारुत्वमधिकं जातम्[9] ? अनेनैवा-

## कौमुदी

इह या प्रसिद्धिरुक्ता सा प्रयोजनसंबन्धिन्येव, न तु प्रयोगसम्बन्धिनी ; सा च नानादि-पारम्पर्यलक्षणा किंत्वनिगूढतेति प्रयोजनस्य यत्प्रकटरूपत्वं तत्प्रसिद्धिशब्दस्यार्थ इति योजना ॥

ननु ध्वनावपि प्रयोजनस्य स्फुटावसेयत्वादनिगूढत्वं समानमिति तत्राप्युपचार-मात्रत्वं तत्कृतं च गुणमात्ररूपत्वं स्यादित्याशङ्क्याह—**उत्तानेनेति** ॥ उत्तानशब्देन स्फुटत्वं लक्ष्यते । तत् ध्वनौ प्रयोजनमुत्तानेन स्फुटावभासेन स्वरूपेण प्रकाशमानमपि निगूढतां नितरां गूढतां स्फुटव्यवहारदशानाविर्भाविचारुत्वसंपादनीमपेक्षते । वदती-त्यादौ तु नैवमित्यर्थः । कथं वदतीत्यादौ तदभावो गूढतया वर्णनादेव ध्वनाविव चम-त्कारान्तरकारितया ध्वनिव्यवहारविषयत्वसंभवादित्याशङ्क्याह—**वदतीति** ॥ स्फुटीकरणं बिसिनीपत्रशयनकर्तृकं तस्य प्रतिपत्तिः प्रतीतिः, न गूढतया वर्णनमात्रं तत्प्रयोजनम्, किं तु स्वशब्दवाच्यावस्थानुद्भिन्नचारुत्वान्तरकारि गूढतया वर्णनमेव ; वदतीत्यादौ तु गूढतया वा अगूढतया वा वर्णने क्रियमाणे चारुत्वोपपत्तिं प्रति विशेषस्य कस्यचिदस्फुर-णात् न ध्वनिव्यवहारः । सुवर्णपुष्पामित्यादौ तद्वैपरीत्यं व्यक्तमेवेति तत्रैव ध्वनिव्यवहारो विधातुमुचितः नान्यत्रेत्यर्थः । उक्तमेवार्थं वक्ष्यमाणकारिकया संवादयति—**अनेनेति** ॥ निगूढतां न ध्वनिवदपेक्षत इति वा पाठः । तत् प्रयोजनं वदतीत्यादौ स्वषये निगूढतां नापेक्षते ; यत उत्तानेन रूपेणापि चकासत् चमत्कारकारि भवति । एतदेवान्वय-

१. क. ख. 'निगूढतेत्यर्थः'
ग. 'अनिरूढतेत्यर्थः'
घ. 'प्रयोजनं यद्यगूढं स्वशब्देनोच्येत किं चारुगूढतेत्यर्थः'
२. घ. 'प्रयोजनं ... किमचारुत्वम्' नास्ति ।
३. ग. 'च तां निरूढाम्'
४. क. ख. 'यथेति' अधिकम् ।
५. क. 'उपचारे हि'
च. 'उपचारेऽपि'
६. ग. 'यद्यरूढम्'
७. च. 'च्येत'
८. क. ख. ग. 'वर्णनेन'
९. ङ. 'ज्ञातम्'

ध्वन्यालोकः

"परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परि[1]मिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथ[2]भुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥"

तथा[3]—

"चुम्बि[4]ज्जइ सअहुत्तं[5] अवरुन्धिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ पिएँ[6] जणे णत्थि पुनरुत्तमँ[7] ॥"

तथा[8]—

"कुविआओ पसन्नाओ ओरण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ॥"

तथा[9]—

"अंजाए[10] पहारो णवलआए[11] दिण्णो[12] पिएण थणवट्टे[13] ।
मिउओ[14] वि दूसहो[15] व्विअ जाओ हिअए सवतीणमँ[16] ॥"

लोचनम्

शयेन वक्ष्यति—"यतः[17]—उक्त्यन्तरेणाशक्यं यत्[18]" इति । [19]अवरुन्धिज्जइ[20] आलिङ्ग्यते ।

१. ग. घ. 'परिमिलन'
२. ग. च. 'प्रशिथिलभुजाक्षेपवलनैः'
३. ग. 'यथा'
घ. ङ. 'तथा' नास्ति ।
४. ङ 'मुम्बिज्जइ'
५. घ. 'शअहुज्जं अयरुज्जिज्जइ'
ङ. 'स अमुत्तं अवरुम्मज्जइ सहं सहंत'
६. क. ख. ग. 'पिओ जणो'
७. घ. 'श अहुत्तं शतकृत्वः' अधिकम् ।
ङ. 'सअहुत्तं शतकृत्वः' अधिकम् ।
८. ग. 'यथा'
९. ग. 'यथा'
१०. घ. 'अज्जाइ येवहारो'
११. क. ख. ग. 'णवलदाए'
१२. घ. 'दिणा'
१३. घ. 'पट्ठे'
१४. ङ. 'मउओ'
घ. 'मयोविदूतहं चिअजाभोहिओसपत्तिणः'
१५. च. 'दूसहच्चिनु'
१६. च. 'सवत्तोण'
१७. ङ. 'यतः' नास्ति ।
१८. क. ख. ग. 'किम्' अधिकम् ।
१९. घ. ङ. च. 'परिम्लानम्' इति श्लोकः समग्रः 'चुम्बिज्जइ' इति गाथा च समग्रा पठ्यते ।
२०. घ. 'ज्जिज्जइ'

## लोचनम्

पुनरुक्तमित्यनुपादेयता लक्ष्यते, उक्तार्थस्यासंभवात् । "कुपिताः प्रसन्ना अव[1]रुदितवदना विह[2]सन्त्यः । यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥" अत्र ग्रहणेनोपादेयता लक्ष्यते । हरणेन त[3]त्परतन्त्रतापत्तिः ॥ तथा अज्ञेति[4] ॥ कनिष्ठभार्यायाः स्तनपृष्ठे

## कौमुदी

व्यतिरेकाभ्यामुपपादयति वदतीत्यादाविति ; अगूढतया स्वशब्देनाभिधाने सत्यचारुत्वाभावात्, गूढतया वर्णने च स्वशब्दवाच्यतावस्थाभ्यधिकचारुत्वानवभासनाच्च तत्र निगूढतया वर्णनानपेक्षित्वं स्थितमेवेत्यर्थः । रत्नावल्यां केलीगृहगतस्य सुसंगतासंगतसागरिकानिगूढनिर्वर्ण्यमानतत्तादृशवृत्तान्तविशेषस्य चित्रफलकावलोकनसमनन्तरं वसन्तकसन्दर्शितसरसतरशतदल[दल]कलितशयनीयविषयैषा वत्सराजस्योक्तिः परिम्लानमिति । तत्पक्षपरिदृश्यमानभागद्वयवर्तिपरिम्लानतारूपकार्यदर्शनसामर्थ्यात् पीनस्तनजघनसंगात्मको हेतुः तदुचितहेतुकः कश्चिदिहोट्टङ्कितः ; सङ्गः संघट्टनं पीनत्वेन ; म्लान्यतिशयभागद्वयवर्तितया स्तनजघनसङ्गः ; तद्बलादेव सन्तापासहनताहेतुकविवर्तनपौनःपुन्यम् ; भागद्वयमध्यदेशगामिपौर्विकहरितवर्णत्वावस्थानहेतुतया मध्यमपरिमि[म]लनाभावः ; तनोः कृशस्य मध्यस्य ; अन्तः मध्ये ; परिमि[म]लनं संश्लेषणम् ; परिमि[म]लनाप्राप्तौ मध्यस्य तनुत्वं हेतुः ; अन्तरालदेशहरितत्वोक्त्या च परभागद्वयपरिम्लान्याः स्तनजघनसंमर्दमात्रप्रयुक्तत्वं द्रढिमानमानीतम् । न मयैतत् प्रयत्नेन प्रतिबोधनीयम्, स्वयमेवानन्यव्यपेक्षया विस्पष्टालक्ष्यमित्यनेन यत्प्रत्यायितं तदेव प्रोज्जीवितम् । व्यस्तः वैविध्येन क्षिप्तो न्यासो विन्यासः सन्निवेशोऽस्येति पूर्वस्माद्विस्पष्टो विशेषो निर्दिष्टः । तत एव तथाविधो हेतुः—श्लथभुजलताक्षेपवलनैरिति । श्लथयोरवश्ययोः स्वाभाविकसौकुमार्यातिशयादधुनातनेन च पापल्या[वावल्या]तिशयेनातिकोमलनूतनलतासदृशभुजयोः ; श्लथतया वा ये क्षेपाः शय्याप्रान्तेषु निपातनानि वलनानि विवर्तनानि च ; बहुवचनेन परां कोटिमाढौकमानस्य मदनदहनदाहस्य क्षणे क्षणे नवनवतया समधिकदुःसहो विजृम्भाविशेषः । अत एव कृशाङ्ग्या इति

१. क ख. 'उपरुदित'
२. घ. 'पि हसन्त्यः'
३. क. ख. 'तत्' नास्ति ।
४. घ. ङ. च. 'अज्जाए' इति गाथा समग्रा पठ्यते ।

## लोचनम्

नवलतया कान्तेनोचितक्रीडायोगेन मृदुकोऽपि प्रहारो दत्तः सपत्नीनां सौभाग्यसूचकं[1] तत्क्रीडासंविभागमप्राप्तानां[2] हृदये दुःसहो जातः । मृदुकत्वादेव[3] अन्यस्य दत्तो मृदुः

## कौमुदी

तत्तादृशदशाविशेषोपजीविव्यपदेशः । सन्तापं सर्वाङ्गीणमनिर्वचनीयं वहमानमनङ्गदहन-महादाहम् । वदतीत्यचेतनस्य वदनसामर्थ्यविरहात् बाधितमुख्यार्थं सादृश्यात् सूचकत्वं लक्षयति । तत्प्रयोजनं च स्फुटीकरणप्रतिपत्तिः । बिसिनीपत्रैः नलिनपत्रैः शिशिरोप-चारवस्तुषु मूर्धाभिषिक्तैर्विरचितं शयनीयमिति तादृशदशान्तरात्यन्तान्तरङ्गभावसुभगम्भावु-कस्य तस्य वक्तुरश्रद्धेयवादत्वशङ्कानवकाशो दर्शितः ॥ **उक्तार्थस्येति** । चुम्बनादौ वचनात्मकस्य चेतनोचितस्यार्थस्य भवितुमयोग्यत्वात् । अनुपादेयत्वमुपेक्षायोग्यत्वम् । अत्रापि यत्प्रयोजनमधिकफलशालित्वरूपं न तस्य मुख्यं प्रयोजनत्वमित्यादरस्थानं न भवतीति द्रष्टव्यम् । गृहीतहरणशब्दयोरपि मुख्यार्थबाधः स्पष्ट एव, आदानहरणयोरसंभ-वात् । अतो ग्रहणेनोपादेयता उपादानयोग्यत्वं हृदयेनाङ्गीकारपूर्वकोऽभिमानविशेषो लक्ष्यते ; प्रयोजनमत्रात्मसात्करणम् । हरणेन तत्पारतन्त्र्यापत्तिर्लक्ष्यते, स्वीकारात्मनोऽर्थस्यासंभवात् ; प्रयोजनमत्रात्यन्तिकं वैवश्यम् ॥ **उचितक्रीडायोगेनेति** ॥ तस्मिन्नवसरे उचितो यः क्रीडायोगः क्रीडाप्रसङ्ग इति ; उचितायां क्रीडायां वा योगेन संभवेन । सपत्नीहृदयव्यथाजनकत्वे हेतु-स्तत्क्रीडासंविभागाप्राप्तिः । तादृशी क्रीडा तत्क्रीडा ; तदप्राप्तिः कथं परितापहेतुरित्यत उक्तम् —**सौभाग्यसूचकमिति** ॥ तत्रापि मृदुकत्वं हेतुः । अत्र सूचितं विरोधं विशदयति — **मृदुकत्वादेवेति** ॥ मृदुकत्वादेवामृदुः संपद्यते ; अन्यस्य दत्तोऽन्यस्य च संपद्यते ; मृदोश्च सुसहतया प्रसिद्धस्य दुःसहत्वमितीयान् विरोध इहावसीयत इत्यर्थः ॥ **परार्थ इति** ॥ इक्षुर्हि परार्थं पीड्यते तथा प्रस्तुतो महापुरुषः परार्थं पीडामनुभवति । इक्षुश्च भज्यमानोऽपि माधुर्यातिशयवान् ; अन्योऽपि परुषीकरणे सत्यपि स्वयमनुकूलस्वभाव एव । विकारो गुलादिः कोपादिश्च, सर्वेषामभिमतः आदरस्थानमेव । वृद्धिः परिपोषः अभ्युदयश्च । क्षेत्रमुचितं स्थानम् अनूषरभूमिभागश्च । कथमत्रानुभवतिशब्दो न मुख्यार्थः ; वर्णनीयतया प्रस्तुते पुरुषविशेषे तदर्थसंभवस्य स्फुटत्वादित्याशङ्क्य वृत्ताविक्षुपक्ष इति

१. क. ख. घ. 'सूचकः'
२. घ. 'विदानभागम्'
३. ग. 'मृदुलत्वादेव' क. ख. 'मृदुत्वादेव'

ध्वन्यालोकः

तथा[1]—

"परार्थे यः पीडामनुभवति भङ्गेऽपि[2] मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ[3] न पुनरगुणाया मरुभुवः ॥"

लोचनम्

प्रहारोऽन्यस्य च संपद्यते दुःसहश्च मृदुरपीति चित्रम् । दानेनात्र [4]तत्फलवत्त्वं लक्ष्यते ॥ [5]परार्थ इति ॥ यद्यपि[6] प्रस्तुतमहापुरुषापेक्षया अनुभवतिशब्दो मुख्य एव, तथाप्यप्रस्तुते इक्षौ प्रशस्यमाने पीडाया अनुभवेनासंभवता पीडावत्त्वं लक्ष्यते । तच्च [7]पीड्यमानत्वे

कौमुदी

पदसूचितं परिहारमाह—**यद्यपीति** ॥ पीडावत्त्वमपि यदि नाम पीडासमवायित्वमेव ; तथाप्यसंभवत्स्वार्थत्वं तदवस्थमेवेत्याशङ्क्य ततोऽपि निष्कर्षति—**तच्चेति** ॥ पीड्यमानत्वं पीडाकर्मत्वम् ; सम्बन्धस्य कर्मनिष्ठतयापि संभवादचेतनतया तथात्वस्यैवात्रोचितत्वात् तत्पर्यवसायित्वमवसीयत इत्यर्थः ॥

उपलोचनम्

"तत्फलवत्त्वम्" इति लोचने । तस्य प्रहारस्य फलवत्त्वम् संयोगविशेषरूपफलवत्त्वम् । प्रेमबन्धसौभाग्यसूचकत्वात् सादरमभिलषणीयता प्रयोजनं प्रतीयते ।

"परार्थे यः पीडामनुभवति" इत्यत्र लक्षणायाः प्रयोजनं नितरां स्वरूपोपमर्दस्य प्रतीतिः ।

१. ग. 'यथा'
२. ग. 'च'
३. ग. घ. 'अयम्'
४. क. ख. 'तत्' नास्ति । ग. 'तद्बलवत्त्वम्'
५. क. ख. ग. 'तथा' अधिकम् । घ. ङ. च. परार्थ इत्यादि मरुभुव इत्यन्तं दृश्यते ।
६. ङ. 'अत्र' अधिकम् ।
७. क. ख. ग. 'पीड्यमाने'

ध्वन्यालोकः

इत्यत्रेक्षुपक्षेऽनुभू[भव]तिशब्दः[1] । न चैवंविधः कदाचिदपि[2] ध्वनेर्विषयोऽभिमतः । यतः—

**उक्त्यन्तरेणाशक्यं[3] यत्तच्चारुत्वं प्रकाशयन् ।**
**शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयीभवेत् ॥ १८ ॥**

लोचनम्

पर्यवस्यति । नन्वस्त्यत्र[4] प्रयोजनम्; तत्किमिति न[5] ध्वन्यत इत्याशङ्क्याह—**न चैवंविध इति** ॥ **उक्त्यन्तरेणेति**[6] ॥ ध्वन्यतिरिक्तेन[7] स्फुटेन शब्दार्थव्यापारविशेषेणेत्यर्थः[8] । शब्द इति पञ्चस्वर्थेषु योज्यम् ॥ **ध्वन्युक्तेर्विषयीभवेदिति**[9] ॥ ध्वनिशब्देनोच्यत इत्यर्थः ॥

कौमुदी

कथमीदृशेषूदाहरणेषु ध्वनिविषयत्वनिरासः अप्रसक्तत्वादित्याशङ्क्य प्रयोजनसत्ताप्रयुक्ता तत्प्रसक्तिरित्याशयेनाह—**नन्विति** ॥ प्रयोजनाभावे स्वतःप्राप्तमुख्यवृत्तिपरित्यागेन गुणवृत्त्युपादानस्य निर्मूलत्वापातात् प्रयोजनसत्तावश्याभ्युपेयेत्यर्थः ॥ **तत्किमितीति** ॥ तत्र हि ध्वननव्यापारोऽवश्यमेषितव्य एवेति कथं ध्वनिविषयत्वाभाव इत्यर्थः । उक्तिशब्दोऽत्र व्यापारमात्रवचनः नाभिधावचन इत्याह—**ध्वन्यतिरिक्तेनेति** ॥ ध्वन्यपेक्षयायमन्तरशब्दोऽन्यवाचकः प्रयुक्तः । तमेव व्यापारं दर्शयति—**शब्दार्थेति** ॥ शब्दव्यापारोऽभिधातात्पर्यलक्षणात्मकः, अर्थव्यापारो गम्यगमकभावः । न चात्र प्रमाणसद्भाव[सद्भावासद्भाव]चिन्तया मनः खेदनीयम्; तर्हि न हि ध्वनिवदप्रसिद्धोऽयं व्यापार इत्याह—**स्फुटेनेति** ॥ व्यवहारभूमिषु प्रसिद्धेनेत्यर्थः । शब्दो ध्वन्युक्तेर्विषय इत्युक्तेः शब्दध्वनिपक्ष एव कारिकाकृतोऽभिमत इति भायात्; तन्निवृत्त्यर्थमाह—**पञ्चस्विति** ॥ शब्द्यतेऽभिधीयत इति वाच्यम्, शब्द्यतेऽनेनेति वाचकः, शब्द्यते व्यज्यत इति व्यङ्ग्यः, शब्दनमिति व्यापारः, उक्तचतुष्टयमयत्वात् समुदायश्चेत्यर्थः । ध्वन्युक्तिर्ध्वनिरिति शब्दः तस्य विषयो भवेत् । अविवक्षितार्थस्तु च्विरित्याशयेनाह—**ध्वनीति** ॥ अथवा विवक्षितार्थ एव अनेवं-

१. क. ख. 'इत्यादाविक्षुपदेऽनुभूतिशब्दः'
२. क. ख. 'कदाचिद्ध्वनेर्विषयः । यतः'
३. ख. 'अशङ्क्यम्'
४. घ. 'अत्र' नास्ति ।
५. ग. 'न' नास्ति ।
६. क. ख. ग. 'यतः' अधिकम् ।
७. क. ख. ग. 'उक्त्यन्तरेण' अधिकम् ।
८. क. ख. ग. 'शब्दार्थोभयव्यापार'
९. क. ख. 'ध्वन्यर्थे'

ध्वन्यालोकः

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः[1] शब्दः । किं च—

**रूढा[2] ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।**
**लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥ १९ ॥**

लोचनम्

**उदाहृत इति** ॥ वदतीत्यादौ[3] । एवं यत्र प्रयोजनं सदपि नादरास्पदं तत्र को ध्वननव्यापार इत्युक्त्वा यत्र मूलत एव प्रयोजनं नास्ति, भवति चोपचारस्तत्रापि को ध्वननव्यापार इत्याह—**किं चेति** ॥ लावण्याद्या ये शब्दाः स्वविषयात् लवणरसयुक्तत्वादेः स्वार्थादन्यत्र हृद्यत्वादौ रूढाः, रूढत्वादेव च[4] त्रितयसंनिध्य[5]पेक्षणव्यवधानशून्याः, यदाह—

कौमुदी

रूपत्वे विषयत्वाभावाभिप्रायेण, वाचकत्वावस्थायामविषयभूतस्यैवोक्तविधव्यञ्जकत्वावस्थायां विषयत्वापत्तेः । किञ्चेत्यादिग्रन्थस्यानर्थक्यशङ्कां शमयितुं विषयभेदं प्रदर्शयन् अवतरणिकां रचयति—**एवमिति** ॥ वस्तुतोऽनादरस्थानत्वात् प्रयोजनस्य तादृशि विषये ध्वनित्वाभावेऽपि व्यङ्ग्यतया प्रयोजनस्य स्थितत्वादेव ध्वनित्वमत्र न भवतीति तत्समर्थनदुर्दुरूटं प्रति प्रतिपादयितुमशक्यमिति तत्प्रतिबोधनसौकर्याभिप्रायेण प्रयोजन-वार्ताविरहिते विषये ध्वनित्वाभावप्रदर्शनार्थोऽयमारम्भ इत्यर्थः ॥ **मूलत एवेति** ॥ ध्वनौ तावत् प्रयोजनं तस्य चादरास्पदत्वमिति द्वयमपेक्षितम् । तत्र प्रयोजन-स्वरूपत्वमेव तावत् प्रथमं धर्मितया निरूपणार्हम्, इतरत्तु धर्मतया पश्चान्निरूपण-पथानुपाति भवति । तत्र धर्मिण एवाभावे तद्धर्मः तत्सत्तानिमित्तत्वेन च ध्वनिभवनं दूरापास्तं भवतीत्यर्थः । कारिकायां योजयति—**लावण्याद्या इत्यादिना** ॥ स्वविषय-शब्देन स्वस्याभिधेयो मुख्योऽर्थ उक्त इत्याह—**स्वार्थादिति** ॥ रूढत्वोक्तिः प्रयोजना-भावप्रकटनार्थेत्याह—**रूढत्वादिति** ॥ व्यवधानमन्तरेण स्वार्थसमर्पकत्वं रूढत्वम् ; तदिह लक्षणात्वप्रयुक्तत्रयसान्निध्यापेक्षणरूपव्यवधानशून्यत्वं रूढशब्देन दर्शितमिति

१. क. ख. 'नोक्त्यन्तरेणाशक्य'
२. ग. 'निरूढा'
३. ङ. 'अत्र'
४. क. ख. ग. 'च' नास्ति ।
५. घ. ङ. 'सान्निध्यपे'

## लोचनम्

"निरूढा लक्षणाः[1] काश्चित् सामर्थ्यादभिधानवत्" इति, ते तस्मिन् स्वविषयादन्यत्र प्रयुक्ता[2] अपि न ध्वनेः पदं भवन्ति । न तत्र ध्वनिव्यवहारः । उपचरिता शब्दस्य[3] वृत्तिर्गौणी लाक्षणिकी [4]चेत्यर्थः । आदिग्रहणेनानुलोम्यं प्रातिकूल्यं सब्रह्मचारीत्येवमादयः शब्दा लाक्षणिका गृह्यन्ते । [5]लोम्नामनुगतमनुलोमं म[6]र्दनम् ; कूलस्य प्रतिपक्षतया स्थितं स्रोतः प्रातिकूलम् ; तुल्यगुरुः सब्रह्मचारी--इति मुख्यो विषयः । अन्यः पुनरुपचरित एव । न चात्र प्रयोजनं किंचिदुद्दिश्य लक्षणा प्रवृत्तेति न तद्विषयो [7]ध्वननव्यापारः । न[8]नु "देवडिति[9] लुणाहि पलुत्रम्भिगमिज्वालवणुज्वलं गुमरिफोल्लपरण्य"

## कौमुदी

प्रयोजनराहित्यं व्यवतिष्ठत एवेत्यर्थः । त्रितयसान्निध्यनपेक्षतां संवादोक्त्या द्रढयति— **यदाहेति** ॥ काश्चिल्लक्षणाः सामर्थ्यात्तथैव नियमेन प्रयोगसामर्थ्यादभिधानवन्निरूढा भवन्ति ; नेतरलक्षणावन्मुख्यार्थबाधाद्यपेक्षतया स्वार्थसमधिगमहेतवो भवन्तीत्यर्थः । इत्थमनुवादभागं योजयित्वा तद्गतमेव स्वविषयादन्यत्रेति पदद्वयमावृत्त्या विधेयवाक्यभागेऽपि योजयन्नाह—**ते तस्मिन्निति** ॥ अपिशब्दोऽत्र क्रमभङ्गेन प्रयुक्ता इत्यस्यानन्तरं योजनीय इत्याह— **प्रयुक्ता अपीति** ॥ न ध्वनेः पदं भवन्तीत्येतदेव व्याचष्टे—**न तत्रेति** ॥ ध्वनिशब्देन तद्विषयो व्यवहारो लक्ष्यत इति भावः । तेषु लावण्यादिशब्देषूपचरितस्य शब्दस्य वृत्तिरुच्यत इति मतिर्मा भूदिति शब्दस्य योपचरिता वृत्तिः प्रसिद्धा तस्याः सद्भाव इहोक्त इत्याह—**उपचरितेति** ॥ उपचरिता अमुख्या । अत एवाह— **गौणीति** ॥ कारिकागतादिशब्दार्थमाह—**आदीति** ॥ तेषां स्वार्थं तावदाह—**लोम्नामिति** ॥ इह मर्दनं विशेष्यम् । प्रतिकूलस्य स्रोतः ॥ **अन्य इति** ॥ यो लोके प्रसिद्धानुरोधिविरोधिसदृशलक्षणः । अत्रेति लावण्यादिशब्दे । तथाविधे च विषय इत्यस्यार्थं शङ्कापूर्वकमभिधत्ते—**नन्वित्यादिना** ॥ यत्सन्निधौ हि यत्प्रतीतिः सा तत्प्रभवैवेति

१. क. ख. 'लक्षणा काचित्'
२. घ. ङ. 'प्रयुक्तादपि'
३. ग. 'शब्दवृत्तिः'
४. ग. 'च' नास्ति ।
५. ग. 'लोम्नानुगतम्'
६. क. ख. 'सदनम्'
७. ग. 'ध्वनिव्यवहारः'
क. ख. घ. च. 'ध्वननव्यवहारः'
८. घ. 'ननु' नास्ति ।
९. घ. 'यीवधितिल्लणाहिवलदि सिगसिद्धालावज्जलगघरि दौल्लव'
ङ. 'देवडिति...परण्य' नास्ति ।
च. 'भीवयितिल्लुणाहि पल्लुद्दिसि गसिट्ठ! लावण्णुज्जळं गुघरिढोल्लवपद्दा'
त. क. 'दीवड्डुनिलुणाहिपल्ल..दिसिगासिलिंठा लाव०ळु०जळं गुरिडोंलुपइंठ..॥
त. ख. '....लुणाहिपळर....

ध्वन्यालोकः

तेषु चोपचरित[1]शब्दवृत्तिरस्तीति। तथाविधे च विषये क्वचित् संभवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते। न तथाविधशब्दमुखेन।

लोचनम्

इत्यादौ लावण्यादिशब्दसंनिधानेऽस्ति प्रतीयमानाभिव्यक्तिः। सत्यम्; सा तु न लावण्यशब्दात्, अपि तु [2]समग्रवाक्यार्थप्रतीत्यनन्तरं ध्वननव्यापारादेव। अत्र हि [3]प्रियतमामुखस्यैव समस्ताशाप्रकाशकत्वं[4] ध्वन्यत इत्यलं बहुना[5]। तदाह—**प्रकारान्तरेणेति**॥ व्यञ्जकत्वेनैव, न तूपचरितलावण्यादिशब्दप्रयोगादित्यर्थः। एवं यत्र यत्र भक्तिस्तत्र

कौमुदी

प्रामाणिकोऽयं प्रतिनियमः; इह च विषये लावण्यशब्दसन्निधावेव प्रतीयमानार्थप्रतिपत्तिराविरस्ति; तेन लावण्यशब्दव्यापारनिबन्धनैवैषेति व्यञ्जकत्वमेतदादिशब्दनात् [शब्दानां] ध्वनित्वं च दुष्प्रतिषेधमित्यर्थः। व्यङ्ग्यप्रतीतिं तस्यास्तत्सन्निधिभावित्वं चाङ्गीकरोति—**सत्यमिति**॥ चरितार्थास्तर्हि वयमिति चेत् नेत्याह—**सा त्विति**॥ अर्थशक्तिमूलध्वननव्यापारमूलैवेयं प्रतीतिः; न तु यथा भवदभिमतिस्तथा लावण्यशब्दशक्तिमूलेत्यर्थः। कुत इत्यत आह—**अत्र हीति**॥ हेतुहेतुमद्भावस्यान्वयव्यतिरेकावसेयत्वात् कृत्स्नवाक्यार्थप्रतिपत्युत्तरकालनियतभावित्वाच्च यथोक्तव्यङ्ग्यार्थप्रतीतेस्तच्छक्तिमूलत्वमेवास्याः शक्याध्यवसानम् न तु लावण्यशब्दशक्तिमूलत्वम्; तथात्वे हि संप्रतिपन्नोदाहरणेष्विव लावण्यशब्दव्यापारान्वयव्यतिरेकानुविधायितया भवितव्यमिति, न लावण्यादिशब्देषु ध्वनिव्यवहारोपपत्तिरित्यर्थः। ग्रन्थे प्रकारान्तरमिति यथोक्तनीत्या अर्थशक्तिमूलव्यङ्ग्यात्मा प्रभेदो गृहीत इत्याह—**तदाहेति**॥ किं तत्प्रकारान्तरमिति तदाह—**व्यञ्जकत्वेनैवेति**॥ अर्थस्य व्यञ्जनव्यापारबलादित्यर्थः। एवकारव्यवच्छेद्यमाह—**न त्विति**॥**उपचरितेति**॥ उपचारव्यवहारमात्रपात्रत्वमेवैषां न व्यञ्जकत्वनिबन्धनं ध्वनिव्यवहारभाजनत्वमित्यर्थः। अपि चेत्यादिग्रन्थं संगमयितुं

१. ग. 'शब्दप्रवृत्तिः'
२. ङ. 'समस्त'
३. क. ख. 'प्रियतमस्यैव'
४. ङ. 'प्रसाधकत्वम्'
५. क. ख. 'बहुना' नास्ति।

लोचनम्

तत्र [1]ध्वनिरिति तावन्नास्ति । तेन [2]ध्वनेः यदि भक्तिर्लक्षणं तदा भक्तिसंनिधौ सर्वत्र ध्वनिव्यवहारः स्यादित्यतिव्याप्तिः[3] । अभ्युपगम्यापि[4] ब्रूमः—भवतु यत्र यत्र भक्तिस्तत्र तत्र ध्वनिः ; तथापि यद्विषयो लक्षणाव्यापारो न तद्विषयो ध्वननव्यापारः । न च भिन्नविषययोः[5] धर्मधर्मिभावः । धर्म एव च[6] लक्षणमित्युच्यते । तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः । ध्वननं च प्रयोजनविषयम् । न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो

कौमुदी

वृत्तमनुद्रवति—**एवमिति** ॥ **तेनेति** ॥ व्याप्त्यभावाद्धेतोः अतिव्याप्तिः उक्तेति शेषः । वदतीत्यादौ लावण्यादिशब्दे च भक्त्याः संभव इति ध्वन्यभावस्य दर्शितत्वादित्यर्थः । अथातिव्याप्तिग्रन्थेन प्रासङ्गिकीं संगतिमुत्तरग्रन्थस्य वक्तुमाह—**अभ्युपगम्येति** ॥ किमभ्युपगम्यते, किं वोच्यत इत्यपेक्षायाम् अभ्युपगम्यमर्थमाह—**भवत्विति** ॥ वक्तव्यमर्थमाह—**तथापीति** ॥ भवतु भिन्नविषयत्वं लक्ष्यार्थप्रयोजनविषयत्वात् अनयोः ; ततः किमिति तत्राह—**न चेति** ॥ मा भूदसौ; तथापि कुतो लक्षणत्वाभाव इत्यत आह—**धर्म एवेति** ॥ धर्मत्वं ह्युक्तदिशा भक्तेर्व्यावर्त्यमानं तदेकनियतस्थिति लक्षणत्वमपि व्यावर्तयति—असाधारणधर्मस्यैव गवादेः सास्नादिमत्त्वादेरिव सजातीयविजातीयव्यावृत्तिप्रतिपत्तिहेतुतया लक्षणत्वस्थितेरित्यर्थः । अस्ति वा भिन्नविषयत्वमिति चेदस्त्येवैतदित्युपपादयति—**तत्रेति** ॥ एकविषयस्यैव धर्मत्वेन लक्षणत्वे स्थिते सतीत्यर्थः ; यदि वा शब्दव्यवहारमार्गे । तावदिति संप्रतिपत्तौ । अमुख्योऽर्थो गङ्गादिशब्दस्य तीरादिः । ध्वननं चेति चशब्दस्तुशब्दार्थे ॥

ननु यथा अभिधातात्पर्यशक्त्यतिलङ्घिन्यमुख्यार्थे लक्षणाव्यापारस्तथा प्रयोजनेऽपि द्वितीयो लक्षणाव्यापारोऽभ्युपेयतां तस्याः कॢप्तत्वात् ; किमर्थं तत्र ध्वननं नाम व्यापारान्तरं कल्प्यत इति लक्षितलक्षणाभ्युपगन्तुरभ्युपगममाशङ्क्य निषेधति—**न चेति** ॥

१. घ. 'ध्वनिः...भक्तिस्तत्र' नास्ति ।
२. क. ख. 'यदि ध्वनेः'
३. ग. घ. च. 'अतिव्याप्तिम्'
४. क. ख. 'अभ्युपगमस्यापि'
५. क. ख. 'विषयो'
६. क. ख. ग. 'च' नास्ति ।

ध्वन्यालोकः

अपि च—

**मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।**
**यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ २० ॥**

लोचनम्

युक्तः[1], लक्षणासामग्र्यभावात्[2] इत्यभिप्रायेणाह—**अपि चेत्यादि** ॥ मुख्यां वृत्तिमभिधाव्यापारम्[3]; परित्यज्य परिसमाप्य; गुणवृत्त्या लक्षणारूपया[4] अर्थस्यामुख्यस्य तावत्[5] दर्शनं[6] प्रत्यायना ; सा यत्फलं कर्मभूतं प्रयोजनमुद्दिश्य[7] क्रियते तत्र प्रयोजने तावद्द्वितीयो

कौमुदी

तच्छब्देन प्रयोजनम् । सामग्री त्रयसान्निध्यलक्षणा । कारिकां योजयति—**मुख्यां वृत्तिमित्यादिना** ॥ योऽर्थः संकेतगोचरः स मुख्यः मुखमिव हस्तपादादिभ्योऽवयवेभ्यः प्रथमं प्रतीयत इति कृत्वा ; तद्विषयापि वृत्तिर्मुख्येत्युच्यते । वृत्तिषु मुखे भवा वा मुख्या वृत्तिः व्यापार इत्याह—**अभिधाव्यापारमिति** ॥ अभिधाव्यापारमन्तरेण लक्षणाया एव स्वरूपानिष्पत्तेः कथं तत्परित्यागोक्तिरित्याशङ्क्याह—**परिसमाप्येति** ॥ न तदवधीरणमिह तत्परित्यागः ; किन्तु तद्गोचरार्थाङ्गीकारपूर्वकं तदतिलङ्घनरूपमेव तद्द्वारकमर्थान्तरबोधनार्थं धावनमित्यर्थः । सामान्यस्य विशेषपर्यवसायित्वात् तात्पर्यविषयान्वयप्रतीतिपर्यन्तीभावात् सामान्यप्रतीतेरभिधापरिसमाप्तिकथनेनैव तात्पर्यशक्तिपरिसमाप्तिरप्युक्तप्रायैवेति भावः । गुणवृत्तिशब्दोऽत्र लक्षणामात्रवचन इत्याह—**लक्षणारूपयेति** ॥ मुख्यवृत्तिपरित्यागोक्तेरर्थादर्थशब्दोऽयममुख्यवचन इत्याह—**अमुख्यस्येति** ॥ तावच्छब्देन प्रसिद्धवचनेन पूर्वार्धस्यानुवाद्यार्थविषयत्वं दर्शितम् । फलमित्यत्र द्वितीयासमर्पितमर्थमाह—**कर्मभूतमिति** ॥ फलशब्दार्थमाह—**प्रयोजनमिति** ॥ तावदिति संप्रतिपत्तौ ॥ **द्वितीय इति** ॥ अमुख्यार्थविषयाद्व्यापारात् अन्यस्तस्मादुपरि कश्चिद्व्यापारोऽवश्याभ्युपेयः, अन्यथा प्रयोजनप्रतीतेः शब्दान्वयव्यतिरेकाननुविधायित्वप्रसङ्गात् । न च स एव लक्षणाव्यापारोऽसावस्तु, तस्य लक्ष्यार्थमात्रविषयत्वात् ; अस्यापि लक्ष्यत्वे प्रयोजनत्वपरिहाणप्रङ्गात्, मुख्यार्थसम्बन्धाभावादि[न्धबाधादि]सामग्र्यभावाच्च । तेन तद्विषयो

१. क. ख. 'युक्तः' नास्ति ।
२. ङ. 'सामग्र्याभावात्'
३. ग. 'च' अधिकम् ।
४. घ. 'लक्षणाव्यापाराया'
५. क. ख. ग. 'तावत्' नास्ति ।
६. ग. 'अदर्शनम्'
७. क. ख. ग. 'प्रयोजनरूपमुद्दिश्य'

ध्वन्यालोकः

तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि

लोचनम्

व्यापारः । न चासौ लक्षणैव ; यतः स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य शब्दस्य तदीयो व्यापारो लक्षणा । न च प्रयोजनमवगमयतः शब्दस्य बाधकयोगः । तथाभावे तत्रापि निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेनानवस्थानात् । तेनायं लक्षितलक्षणाया न विषय इति भावः । दर्शनमिति ण्यन्तो निर्देशः ॥ **कर्तव्य इति** ॥

कौमुदी

द्वितीयो व्यापारोऽवश्यानुज्ञेय इत्यर्थः । अभ्युपेयतां तर्हि तद्विषयोऽपि कश्चिल्लक्षणाख्योऽपरो व्यापार इत्यत्राह—**न चेति** ॥ अत्र हेतुत्वेन कारिकान्त्यपादं पातयति—**यत इति** ॥ अवबोधनशक्तेर्विधुरीकरणं कुण्ठीकरणम्, तच्च बाधकप्रमाणव्यापारकर्तृकम् । गतिशब्दार्थमाह—**अवबोधनेति** ॥ **तदीय इति** ॥ तादृशः शब्दस्य संबन्धी । यथा लोके क्षिप्रतरं प्रवहतो नद्यादिसलिलप्रवाहस्य प्रबलतरोपगमादुपकूलदृढसंघट्टप्रतिहतस्य झटिति हठादेवान्यतः कश्चित्प्रसारः संपद्यते, तथा शब्दव्यापारोऽपि स्वार्थं साक्षादेवावबोधयितुं प्रवृत्तो मध्ये बलवद्बाधकबोधकबलीकृतप्रवृत्तिकोऽन्यतो बलात् प्रसरति ; यश्चायमस्यान्यतः प्रसरः स लक्षणाव्यापार इत्युच्यत इत्यर्थः । भवत्वेवं ततः किमिति तत्राह—**न चेति** ॥ अवगमयत इति हेतौ शता । अवगमकार्यस्य दर्शनादेव बाधकाभावनिश्चय इत्यर्थः । अवगमकार्योपलब्धिसिद्धमपि बाधकयोगाभावं व्युत्थितं प्रति विपक्षे दण्डपातनेन प्रसाधयति—**तथाभाव इति** ॥ बाधितार्थत्वे सतीत्यर्थः ॥ **तत्रापीति** ॥ प्रयोजनलक्षणाविषयेऽपि । त्रयसन्निधिसामग्रीनैयत्यात् लक्षणाप्रवृत्तेरित्यर्थः ॥

यत्तु मतं लक्षितलक्षणैवंविधे विषये इति तदपाकरोति—**तेनेति** ॥ यद्व्याख्यातं दर्शनं प्रत्यायनेति प्राक्, तदुपपादयन्नाह—**दर्शनमिति ण्यन्त इति** ॥ अन्यथा

१. ग. 'अत्र'
२. ग. 'लक्षणाप्रयोजने'
३. घ. 'व्यापारः...तदीयो' नास्ति ।
४. ङ. 'लक्षणा न च' नास्ति ।
५. ग. 'अपगमयतः'
६. क. ख. ग. 'अन्वेषणेनावस्थानात्'
घ. 'अन्वेषणेनानवस्थानम्'
ङ. 'अन्वेषणेऽनवस्थानम्'
७. क. ख. ग. 'लक्षणलक्षणाया'
८. क. ख. ग. 'एव' अधिकम् ।

ध्वन्यालोकः

शब्दस्य अमुख्यता तदा तस्य प्रयोगे दुष्टतैव स्यात् । न चैवम् ।

लोचनम्

अवगमयितव्य इत्यर्थः ॥ अमुख्यतेति ॥ बाधकेन विधुरीकृतेतेत्यर्थः[१] ॥ तस्येति शब्दस्य ॥ दुष्टतैवेति[२] ॥ प्रयोजनावगमस्य[३] सुखसंपत्तये हि स[४] शब्दः प्रयुज्यते तस्मिन्नमुख्येऽर्थे[५] । यदि च 'सिंहो वटुः' इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य, तत्तर्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः । उपचारेण करिष्यतीति चेत्, तत्रापि प्रयो-

कौमुदी

दर्शनोद्देशनक्रिययोः ल्यप्प्रत्ययसमर्पितैककर्तृकत्वानुपपत्तिप्रसक्तेरिति भावः । कृञ्-धातोः क्रियासामान्यवचनस्यात्र तद्विशेषरूपावगमनपर्यवसायित्वमवसेयमित्याह—**अवगमयितव्य इति** ॥ प्रयोजनस्य ज्ञाप्यत्वाच्छब्दस्य ज्ञापकत्वाच्च । कारिकायां प्रयोजनविषये शब्दस्य स्खलद्गतित्वनिषेधात्, तदनुसारेणामुख्यत्वस्य लक्षकत्वादेवाभ्युपगमाच्च अमुख्यत्वमत्र स्खलद्गतित्वमेव विवक्षितमित्याह—**बाधकेनेति** ॥ अमुख्येऽपि तटादौ बाधितावगमनशक्तित्वमत्रामुख्यत्वमुक्तम् । ननु यथोक्तरूपामुख्यत्वाभ्युपगमः कथं दुष्टत्वापादकः ? तद्धि व्याकरणसंस्कारराहित्यलक्षणं प्रसिद्धम् ; अथान्यदेवात्र दुष्टत्वमापादितं तदपि कथममुख्यत्वप्रयोज्यम् अन्यत्रानुपलम्भादित्याशङ्क्य प्रतिप्रिपादयिषितार्थप्रतिपत्त्यजनकत्वेन वैयर्थ्यरूपं तदित्याह—**प्रयोजनेति** ॥ हिः प्रसिद्धौ । शब्दः लक्षकादिः । प्रयोजनम् पराक्रमातिशयशालित्वादिकम् तदवगमस्य सुखसंपत्तय इति । अनेन "मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् । यदुद्दिश्य फलम्" इत्यंशो योजितः । तस्मिन्नमुख्येऽर्थे वट्वादौ प्रयुज्यत इत्यन्वयः । किमतस्तत्राह—**यदि चेति** ॥ स्खलद्गतित्वं बाधितशौर्याद्यर्थत्वम् । भवेदिति शेषः । तत्प्रतीतिं शौर्यातिशयाद्यवगमयितव्यप्रयोजनगोचरां प्रतीतिम् ॥ **नैवेति** ॥ न खलु यस्यार्थो बाधितः तद्विषयां प्रतीतिं स कर्तुमर्हति—एवमिदं नैवमिदमिति विरोधादित्यर्थः ॥

१. घ. 'कृतेत्यर्थः'
२. घ. 'दुष्टेति'
३. ग. 'नोपगमस्य'
४. क. ख. घ. ङ. च. 'स' नास्ति ।
५. ग. 'तस्मान्न मुख्यार्थे'

## लोचनम्

जनान्तरमन्वेष्यम्[1] ; तत्राप्युपचारेऽनवस्था । अथ[2] न[3] तत्र स्खलद्गतित्वम्, तर्हि प्रयोजनेऽवगमयितव्ये न[4] लक्षणाख्यो[5] व्यापारः तत्सामग्र्यभावात्[6] । न च नास्ति व्यापारः । न च[7] असावभिधा समयस्य तत्राभावात् । यद्व्यापारान्तरमभिधालक्षणातिरिक्तं[8] स ध्वननव्यापारः ॥ न चैवमिति ॥ न च प्रयोगे दुष्टता काचित् । प्रयोजनस्याविघ्नेनैव

## कौमुदी

ननु बाधोऽभिधाव्यापारनिबन्धनायाः प्रतीतेरेवोत्पत्तिं विरुणद्धि न लक्षणानिबन्धनायाः । अतो बाधकवशादभिधया तत्प्रतीतिमयं शब्दो न जनयतु, जनयिष्यत्येव तु लक्षणया ; तेन न प्रयोगवैयर्थ्यमिति शङ्कते—**उपचारेणेति** ॥ दूषयति—**तत्रापीति** ॥ प्रयोजननिमित्तत्वाल्लक्षणायाः प्रयोजनविषयेऽपि लक्षणाङ्गीकारे प्रयोजनमन्यदेव किञ्चिदेषितव्यम् ; तत्राप्युपचारे पूर्ववदङ्गीकार्ये तत्राप्यन्यत् एवं तत्राप्यन्यदित्यनवस्था ; यत्र गत्वा प्रयोजनान्तरं नावगम्यते तत आरभ्य पूर्वपूर्वप्रयोजनोपचारासंभवादाद्यस्याप्युपचारस्य सेद्धुमसमर्थत्वान्मूलक्षयकरी चेति स्खलद्गतित्वाभ्युपगमो न युक्त इत्यर्थः । मा भून्नाम स्खलद्गतित्वम्, तथापि किं लक्षणाभाव इत्यत आह—**अथेति** ॥ तत्सामग्र्यभावात् मुख्यार्थबाधात्मिकाया लक्षणासामग्र्या अभावात् । एवं लक्षणाव्यापारासंभवमभिधाय व्यञ्जनव्यापारमेव परिशेषयितुमाह—**न चेति** ॥ प्रयोजनावगतेः शब्दान्वयव्यतिरेकानुविधायिन्या निर्हेतुकत्वप्रसङ्गादिति भावः । तर्ह्यभिधैव नैसर्गिको व्यापारोऽस्त्वित्यत्राह—**न चेति** ॥ 'समयापेक्षार्थावगमनशक्तिः अभिधा' इति स्थितत्वादिति भावः । प्रसक्तप्रतिषेधे सत्यन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः परिशेष इति न्यायेन ध्वननमेव प्रयोजनविषयो व्यापार इति निगमयति—**यद्व्यापारान्तरमिति** ॥ एवमित्यस्यार्थमाह—**न च प्रयोग इति** ॥ हेतुमाह—**प्रयोजनस्येति** ॥ इदानीं समनन्तरकारिकायाम् अभिधास्यमानं गुणवृत्तेर्वाचकत्वाश्रयेण व्यवस्थानमुपपादयिष्यन्

१. ग. घ. ङ. च. 'अन्विष्यते'
२. ग. 'अथ' नास्ति ।
३. घ. च. 'न' नास्ति । ङ. 'तत्र न'
४. क. ख. घ. 'न' नास्ति ।
५. घ. 'णाव्यापारः'
६. घ. 'सामग्र्याभावात्'
७. घ. 'न च' नास्ति ।
८. घ. 'लक्षणाव्यतिरिक्तम्'

## लोचनम्

प्रतीतेः । तेनेयमभिधैव[1] मुख्येऽर्थे बाधकेन विधुरीकृता[2] प्रविवित्सुः [प्रविवृत्सुः] निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरति[3] ; अत एवामुख्योऽस्यायमर्थ[4] इति व्यवहारः ; तथैव

## कौमुदी

लक्षणाया अभिधाशेषत्वं तावदुपपादयति—तेनेति ॥ यस्मात् स्खलद्गतेः शब्दस्य व्यापारो लक्षणा ततो हेतोः । इयमभिधापुच्छभूतैवेति संगतिः । कथं तदवधारणमित्यपेक्षायाम् इतिशब्दोपात्तैर्वाक्यैरुक्तमेव हेतुं विस्पष्टयति—अभिधैवेति ॥ अभिधैवान्यत्र प्रसरतीत्यन्वयः । अन्यत्र मुख्यार्थात् गङ्गास्रोतःप्रभृतेरन्यत्र तत्तीरादौ विषये । तत्र हेतुः —अचरितार्थत्वादिति ॥ अनुत्पादितविशिष्टार्थप्रतीतिरूपस्वकार्यत्वादित्यर्थः । तत्रापि हेतुः—प्रविवृत्सुर्निरुध्यमानेति ॥ प्रसिद्धं खल्वेतत् प्रवर्तितुमिच्छोरन्यतो निरोधे सत्यचरितार्थत्वं भवेदिति । तदिह स्वार्थविषयां प्रतीतिमुत्पादयितुमुपक्रान्ता सती तपस्विन्यभिधा तदुत्पादनात् प्रागेवान्तराले झटिति दृढतरां प्रतिहतिमासादितवती । तथाविधनिरोधे हेतुः—मुख्येऽर्थे बाधकेन विधुरीकृतेति ॥ स्रोतसो घोषाधिकरणत्वनिषेधकेन प्रत्यक्षप्रमाणेन बाधकेन विधुरीकारो बाध्यमानतैव । अभिधैवोक्तविशेषमात्रशालिनी लक्षणा, न ततोऽत्यन्तविभिन्नस्वरूपेत्यत्र लोकव्यवहारं प्रमाणयति—अत एवेति ॥ गङ्गाशब्दस्य हि स्रोतस्तटादेरर्थत्वे तुल्य एव सति मुख्यजघन्यत्वमात्रनिबन्धन एव विशेषः ; वाच्यवाचकभावसंबन्धप्रतियोगित्वलक्षणं पुनरर्थत्वमविशिष्टमेवेत्यविगीयमानानादिवृद्धव्यवहारबलादवसीयत इत्यर्थः । ननु समयसव्यपेक्षप्रवृत्तिकत्वविरहिण्या लक्षणायास्तत्सापेक्षाभिधाव्यापारव्यतिरेको व्यक्त इति कथं ताद्रूप्योक्तिरित्याशङ्क्य तदनपेक्षत्वमसिद्धयति—तथैवेति ॥ यथा मुख्येऽर्थे मुख्यतया संकेतग्रहणम् तथैवामुख्येऽमुख्यतया संकेतग्रहणमस्त्येव, न हि यस्य कस्यचिच्छब्दस्य यः कश्चिदेवामुख्योऽर्थः ; किन्तु अयमस्यामुख्यः अयं पुनरस्य इति प्रतिनियत एव । स च विशेषः त्रयसान्निध्यतदभावोपाधिविशेषनिबन्धन एवेति मुख्य इवामुख्येऽर्थेऽपि संकेतोऽविशिष्ट एव । मुख्यसङ्केत एव चामुख्यसङ्केतो न तदतिरिक्तः, तस्यैव तत्पर्यन्तधावित्वाभ्युप-

१. क. ख. ङ. च. 'तेनाभिधैव'
घ. 'तेनैवमभिधैव'
ग. 'तेनाभिधेयमुख्यार्थबाधकेन प्रविधुरीकृता प्रि........माना सती'

२. क. ख. च. 'विधुरीकृता' नास्ति ।
ङ. 'विधुरीकृतः'

३. क. ख. ग. 'इति' अधिकम् ।

४. क. ख. ग. च. 'एव मुख्यो'

ध्वन्यालोकः

तस्मात्—

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ २१ ॥

लोचनम्

च¹ामुख्यतया संकेतग्र²हणमपि तत्रास्तीत्यभिधापुच्छभूतैव लक्षणा । त³स्मादिति उपसंहरति । यतोऽभिधा⁴पुच्छभूतैव लक्षणा, ततो हेतोः वाच⁵कत्वम् अभिधाव्यापारम् आश्रिता तद्बाधनेनोत्थानात्तत्पुच्छभूतत्वाच्च गुणवृत्तिः, गौणलाक्षणिकप्रकार इत्यर्थः, सा कथं ध्वनेर्व्यञ्जनात्मनो⁶ लक्षणं स्यात्, भिन्नविषयत्वादिति । एतदुपसंहरति—तस्मादिति ॥ यतोऽतिव्याप्तिरुक्ता, तत्प्रसङ्गेन च भिन्नविषयत्वम् तस्माद्धेतोरित्यर्थः । एवम् "अतिव्याप्ते-

कौमुदी

गमादित्यर्थः । पूर्वोक्तोपसंहाररूपत्वम् उत्तरकारिकाया वक्तुं वृत्तौ तस्मादित्यवतरणिकापदमुपात्तमित्याह—तस्मादितीति ॥ यदुक्तमभिधापुच्छभूतत्वं लक्षणायास्तद्ग्रन्थे तस्मादिति हेतुत्वेन परामृष्टमित्याह—यत इति ॥ वाचकत्वमित्यस्य व्याख्या—अभिधाव्यापारमिति ॥ तत्र हेतुः—तद्बाधनेनेति ॥ अनेन तदाश्रितत्वं नाम तन्निबन्धनत्वमुक्तम् । तत्परिणामत्वाच्च क्षीराश्रयदध्यादिवद्रूपरूपिभावमपि तदाश्रयत्वमित्याह—तत्पुच्छेति ॥ गुणवृत्तिरिति प्रागेव व्याख्यातम् । उत्तरार्धव्याख्याने सा इति तच्छब्दं प्रक्षिपता पूर्वार्धे यच्छब्दाक्षेपेण तदर्थस्यानुवादरूपत्वं दर्शितम् ॥ भिन्नविषयत्वादिति ॥ विरुद्धाश्रयत्वात्; अन्योन्यविलक्षणस्वरूपवाचकत्वव्यञ्जकत्वोपजीवित्वादिति यावत् । इतिशब्दः कारिकाव्याख्यानसमाप्तौ ॥ एतदिति ॥ भक्तिर्ध्वनेर्न लक्षणमिति यदुक्तम् एतदुपसंहरतीति, भिन्नविषयत्वोक्तेरिह संगतिः प्रासङ्गिक्येव; साक्षात्संगतिस्त्वतिव्याप्तेरेव इति दर्शयंस्तद्धेतुत्वपरामर्शकतया तस्मादित्येतद्व्याचष्टे—यत इति ॥ उत्तरग्रन्थस्य पूर्वग्रन्थेन सहैककारिकासंगृहीतक्रमिकार्थद्वयस्य क्रमेण प्रतिपादकत्वलक्षणसंबन्धमाह—एवमिति ॥

१. घ. 'च' नास्ति ।
२. घ. ङ. 'संकेतग्रहणमस्तीति' च. 'संकेतविधुरीकृताग्रहणमप्यस्तीति'
३. क. ख. 'तस्मात्...लक्षणा' नास्ति । ग. 'उपसंहरति—तस्मादिति ॥ ङ. 'तत्र' अधिकम् ।
४. ङ. च. 'अभिधाशेष'
५. घ. 'व्यापकत्वम्'
६. ङ. 'त्मको'

ध्वन्यालोकः

तस्मादन्यो ध्वनिः अन्या च गुणवृत्तिः । अव्याप्तिरप्य[1]स्य लक्षणस्य । न हि

लोचनम्

रथाव्याप्तेर्न चासौ लक्ष्यते तया" इति कारिकागतामतिव्याप्तिं व्याख्यायाव्याप्तिं व्याचष्टे[2]—**अव्याप्तिरप्य[3]स्येति** ।। अस्य गुणवृत्तिरूपस्येत्यर्थः । यत्र यत्र ध्वनिस्तत्र त[4]त्र य[5]दि भ[6]क्तिर्भवेन्न[7] स्यादव्याप्तिः ; न चैवम् । अविवक्षितवाच्ये ह्य[8]स्ति भक्तिः "सुवर्णपुष्पाम्" इत्यादौ[9] ; "शिखरिणि" इत्यादौ तु सा कथम् । ननु लक्षणा तावद्गौणम[10]पि व्याप्नोति । केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते 'सिंहो वटुः' इति । अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति । शब्दार्थौ वा

कौमुदी

व्याप्त्यभावरूपत्वादव्याप्तेः क्वचिद्व्याप्तिभावादेव निरवकाशत्वात् कथं क्वचिदभावमात्रात् अत्रोद्भावनमित्याशङ्क्य यावल्लक्ष्यवृत्तित्वनियमलक्षणत्वाद्व्याप्तेस्तदभावे सत्यभावात् इह ध्वनिविषये क्वचिद्भक्तेः संभवेऽपि क्वचिदभावादेव यथोक्तरूपव्याप्तिविरहरूपा तावदव्याप्तिः सुस्थितैवेत्याह—**यत्र यत्रेति** ।। हिः संप्रतिपत्तौ । तुशब्दो विवक्षितान्यपरवाच्यत्वकृतविशेषद्योतनार्थः । सा भक्तिः । कथम् न कथञ्चित् । इदानीं लक्षणाविभूतिमुद्भावयन्नुक्तविवक्षितान्यपरवाच्योदाहरणेऽपि लक्षणासद्भावादव्याप्त्यभावमाशङ्कते—**ननु लक्षणेति** ।। तावदिति संप्रतिपत्तौ । विवक्षितान्यपरवाच्य एव हि तद्व्याप्तिं प्रति विवादः, इह पुनरावयोर्न विमतिरित्यर्थः । 'सिंहो वटुः' इत्यादौ मुख्यार्थबाधनिमित्तप्रयोजनरूपलक्षणासामग्रीसंपत्तेः सिंहादिशब्दस्य वट्वाद्यर्थे लक्षणावृत्तेरसन्दिग्धमभ्युपेतत्वादित्यर्थः । नन्वेवं सति लक्षणाव्यवहार एव स्यात् न गौणव्यवहारः, लक्षणातो विशेषाभावस्य निश्चितत्वादित्याशङ्क्य विशेषं दर्शयति—**केवलमित्यादिना गौणस्य भेद इत्यन्तेन** ।।

१. क. ख. 'अपि' नास्ति ।
२. क. ख. 'आचष्टे'
३. क. ख. ग. 'अपि' नास्ति ।
४. ङ. 'तत्र' नास्ति ।
५. क. ख. 'यदि' नास्ति ।
६. च. 'भक्तिः' नास्ति ।
७. क. ख. ग. 'च' अधिकम् ।
८. क. ख. 'हि' नास्ति ।
९. घ. ङ. च. 'आदौ' नास्ति ।
१०. ग. 'गौणीमपि'

लोचनम्

युगपत्तं लक्षयित्वा अन्याभ्यामेव शब्दार्थाभ्यां मिश्रीभवतः इत्येवं लाक्षणिकाद्गौणस्य भेदः, यदाह—'गौणे शब्दप्रयोगः, न लक्षणायाम्' इति। तत्रापि तु लक्षणास्त्येवेति सैव सर्वत्र व्यापिका। सा च पञ्चविधा। तद्यथा—अभिधेयेन संयोगात्। द्विरेफशब्दस्य

कौमुदी

इह च त्रयः पक्षा दर्शिताः। तत्रान्विताभिधानवादिमतानुसारेणाद्यः पक्षः; द्वितीयस्तु अभिहितान्वयवादानुरोधेन; तृतीयः शाब्दप्रस्थानास्थानेन। आद्ये शब्दस्य स्वातन्त्र्यम्, द्वितीयेऽर्थस्य, तृतीये द्वयोरिति विभागो भावनीयः। शब्दः सिंहादिशब्दः; तं गौणमर्थम्। इयता लक्षणावृत्तिरुक्ता। तेन तस्य गौणस्य वाचकेन वट्वादिशब्देन। अयं लक्षणातोऽतिरेकः। इत्थमुत्तरत्रापि ज्ञेयम्। अर्थः सिंहादिः; अर्थान्तरं वट्वाद्यात्मकम्; स्ववाचकः सिंहादिशब्दः; तद्वाचको वट्वादिशब्दः; तमिति वट्वाद्यात्मकमर्थम्॥ **अन्याभ्यामिति**॥ प्रथममन्योन्यवार्तानभिज्ञतयानामिश्रतयैवावस्थिताभ्यामित्यर्थः। उक्तामेव गौणे लक्षणाव्याप्तिमवान्तरभेदकृतं विशेषं च संवादोक्त्या द्रढयति—**यदाहेति**॥ शब्दस्य लक्ष्यवाचिनो वट्वादिशब्दस्य मुख्यार्थवाचकेन शब्देन सह सामानाधिकरण्येन प्रयोगोऽस्ति गौणे प्रयोगे 'सिंहो वटुः' इति। तत्र हि शौर्यादि वाच्यप्रायतयैव प्रतिपिपादयिषितम; लक्षणायां तु गङ्गायां घोषः प्रतिवसति इत्यादौ तीरादिवाचिनः शब्दस्य न प्रयोगः, मुख्यां वृत्तिं परित्यज्येत्युक्तदिशा व्यङ्ग्यतयैव प्रयोजनस्य तत्र प्रतिपिपादयिषितत्वात्। इयानेव गौणलाक्षणिकयोर्विशेषः। त्रयसान्निध्यनिबन्धना लक्षणा पुनरुभयत्राविशिष्टैवेत्यर्थः। फलितमाह—**तत्रापीति**॥ तुशब्दः उक्तवैलक्षण्याङ्गीकारसूचकः। भवतु गौणे लक्षणा ततः किमित्यत्राह—**इति सैवेति**॥ न केवलं गौणे, यावदन्यत्र व्यवहारभूमावपीत्यर्थः। सर्वत्र व्याप्तिमेव साधयितुं तद्भेदमाह—**सा चेति**॥ **तद्यथेति**॥ तत् पञ्चविधत्वम् येन प्रकारेण व्यवस्थितं तेन प्रकारेण प्रदर्श्यत इत्यर्थः। तानेव प्रकारानुदाहरणमुखेन प्रदर्शयिष्यन्—

"अभिधेयेन संयोगात् सामीप्यात् समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा स्मृता॥"

इति श्लोकं खण्डश उपादाय व्याचष्टे—**अभिधेयेनेत्यादिना**॥ संयोगात् लक्षणा भवतीति

१. क. ख. ग. ङ. 'ताभ्याम्'
२. क ख. 'प्रयोगेण लक्षणाम्'
३. क. ख. ग. 'तु' नास्ति।
४. क. ख. 'सर्वत्र सैव'
५. ग. 'पञ्चधा'

ध्वन्यालोकः

ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः, अन्ये च बहवः तद्भेद[1]प्रकारा भक्त्या[2] व्याप्यन्ते । तस्माद्भक्तिरलक्षणम् ॥

लोचनम्

हि[3] योऽभिधेयो भ्रमरशब्दः, द्वौ रेफौ यस्येति कृत्वा, तेन[4] भ्रमरशब्देन यस्य[5] संयोगः संबन्धः षट्पदलक्षणस्यार्थस्य सोऽर्थो द्विरेफशब्देन लक्ष्यते अभिधेयसंयोगं[6] व्याख्यातरूपं निमित्तीकृत्य । सामीप्यात्[7] । 'गङ्गायां घोषः' । समवायत इति[8] । संबन्धादित्यर्थः[9] । 'यष्टीः प्रवेशय' इति यथा । वैपरीत्यात् । यथा—शत्रुमुद्दिश्य कश्चिद्[10]ब्रवीति—'किमिवोपकृतं न[11] तेन मे'[12] इति । क्रियायोगादिति । कार्यकारणयोगा[13]दित्यर्थः । यथा—

कौमुदी

शेषः । एवमुत्तरत्रापि । कथं भ्रमरशब्दस्य तदर्थत्वमिति तदाह—**द्वाविति** ॥ भकारसंयोग्येको रेफः मकारात् पर इतरः, एवं रेफद्वयवत्त्वं प्रसिद्धम् । तेनेति अभिधेयभूतेन । सम्बन्धस्य शब्दार्थनिष्ठत्वौचित्यादिह वाच्यवाचकभावात्मकत्वमभिसंहितम् । सोऽर्थः षट्पदात्मकः ॥ **निमित्तीकृत्येति** ॥ अस्य लक्ष्यत इति पूर्वेणान्वयः । समवायशब्देन वैशेषिकसमयसमभिमतो नित्यः सम्बन्धो न विवक्षितः, किन्त्वन्य एवेत्याह—**संबन्धादिति** ॥ अत एव तादृगुदाहरणमुन्मीलितम् यष्टीरिति ॥ **वैपरीत्यादिति** ॥ इह बहूपकारकरणरूपेणार्थेन शत्रुविषये प्रत्यक्षप्रतिहतेन तद्विरुद्धम् भावाभावयोः परस्परोपमर्दोपर्दकस्वभावत्वेनैकनिषेधस्यान्यविधिनान्तरीयकत्वनैयत्यनीत्या बह्वपकारकरणरूपमर्थान्तरं लक्ष्यते । क्रिया नामासतः सद्रूपतापादनरूपा तन्निमित्तो योगः कार्यकारणयोः संबन्ध इत्याह—**कार्यकारणयोगादिति** ॥ इत्थं लक्षणाप्रकारान् प्रदर्श्य तन्निदर्शनेन

१. क. ख. घ. ङ. च. 'तद्भेद' नास्ति ।
२. ग. 'वक्ष्यमाणभक्त्या'
३. क. ख. 'हि' नास्ति ।
४. क. ख. 'तेन' नास्ति ।
५. घ. 'यः संयोगः'
६. क. ख. ग. 'संबन्धम्'
७. च. 'सामीप्यम्'
८. क. ख. ग. घ. च. 'समवायादिति'
९. क. ख. 'स्वसंबन्धात्'
१०. घ. 'कश्चित्' नास्ति ।
११. घ. 'न' नास्ति ।
१२. क. ख. ग. 'मम'
१३. क. ख. ग. घ. ङ. 'कारणभावादित्यर्थः'

## लोचनम्

अन्नापहारिणि व्यवहारः 'प्राणानयं हरति' इति । एवमनया लक्षणया पञ्चविधया विश्वमेव व्याप्तम् । तथा हि—"शिखरिणि" इत्यत्रा[1]कस्मिकप्रश्नविशेषादिबाधकानुप्रवेशे[2] सादृश्याल्लक्षणास्त्येवं[3] । नन्वत्राङ्गीकृतैव मध्ये लक्षणा ? कथं तर्ह्युक्तं विवक्षितान्यपरेति । त[4]द्भेदोऽत्र मुख्योऽसंलक्ष्यक्रमात्मा विवक्षितः ; तद्भेदशब्दे[5]न च रसभावतदाभासतत्प्रशमभेदास्तदवान्तरभेदाश्च । न[6] च तेषु लक्षणाया उपपत्तिः । तथा हि—विभावानु-

## कौमुदी

सर्वव्यवहारेषु तदन्यतमाविनाभावरूपां तद्व्याप्तिं वदन्नुपसंहरति—**एवमिति** ॥ अनया* पञ्चविधया ॥ **विश्वमेवेति** ॥ व्यवहारभूमिपतितमित्यर्थः । भवत्वेवंविधा लक्षणाविभूतिः ततः किमित्यत आह—**तथा हीति** ॥ हिश्चार्थे । आकस्मिको यः प्रश्नविशेषः ; आदिशब्दाच्छुककर्तृकतपःप्रभृति च, तद्विषयो यो बाधकः अनुपपत्तिरूपः ; अनुपपत्तिमेवोज्जीवयितुमाकस्मिकपदम् । अविवक्षितवाच्य इव विवक्षितान्यपरवाच्येऽपि भक्तेः संभवान्नाव्याप्तिः वर्णनीयेति भावः । तदेतदभ्युपगमेन परिहरति—**नन्विति** ॥ यदि वेति पक्षान्तरं पक्ष्मलयद्भिरस्माभिरभिहितमायुष्मता किं विस्मृतमासीदित्यर्थः । ननु न व्यस्मारि, ग्रन्थानुपपत्तितस्तु पर्यनुयुञ्ज्महे इत्याह—**कथं तर्हीति** ॥ अव्याप्त्यभिधानमप्यकाण्डताण्डवितमिति भावः । अभिप्रायानभिज्ञताविजृम्भितमेतदित्युत्तरमाह—**तद्भेद इति** ॥ **अत्रेति** ॥ वृत्तिग्रन्थे । मुख्य इत्यनेन तस्यैव विवक्षितान्यपरवाच्यशब्दश्रवणे सति प्रथमग्रहणयोग्यतेति परं भवदनवबोधापराधनिबन्धनोऽयं पर्यनुयोग इति दर्शयति । मुखे भवो मुख्यः प्रथममुद्दिष्टः, अथ च प्रधानभूतः ; तस्यैव हि मुख्यतया काव्यात्मत्वमुद्घोष्यते, वस्तुप्रभृतिध्वनेस्तत्पर्यवसायित्वात् । तद्भेदेति वृत्तिग्रन्थे तच्छब्देनापि न विवक्षितान्यपरवाच्यमात्रग्रहणम्, किंत्वसंलक्ष्यक्रमस्यैव तद्विशेषस्येत्याह—**तद्भेदशब्देनेति** ॥ भेदशब्देन तदवान्तरभेदभूतहास्यवीरादीनां ग्रहणमित्याह—**तदवान्तरेति** ॥ विवक्षितान्यपरवाच्यत्वाविशेषादसंलक्ष्यक्रमध्वनिभेदेष्वपि लक्षणानुप्रवेशः किं न स्यादित्यत्राह—**न च तेष्विति** ॥ उपपत्त्यभावमुपपादयति—**तथा हीति** ॥

१. घ. ङ. 'इत्यत्रापि'
२. च. 'प्रवेशसादृ'
३. च. 'एवम्'
४. क. ख. 'न तद्भेदो हि मुख्यो'
५. घ. 'शब्दाच्च'
ङ. च 'शब्देन रस'
६. क. ख. ग. 'न तेषु'

*अनेन 'पञ्चविधया' इति मूले नास्तीति गम्यते ।

## लोचनम्

भावप्रतिपादके काव्ये[1] मुख्येऽर्थे तावद्बाधानुप्रवेशोऽप्यसंभाव्य इति को लक्षणावकाशः । ननु किं बाधया ? इयदेव[2] लक्षणायाः[3] स्वरूपम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणेष्यते'[4] इति । इह चाभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते ।

## कौमुदी

**बाधोऽपि तावदिति*** ॥ स खलु मुख्यं लक्षणाया निदानम्, तस्याप्यभावे कथमितरबीजावसर इति भावः । विभावानुभावप्रतिपादके इति हेतुगर्भं विशेषणम् । विभावादयो हि वर्णनागोचरतया काव्ये मुख्योऽर्थः, सम्यग्योजिता एव च सन्तस्ते काव्यार्थीभवन्ति ; तादृशी[शि] च तस्मिन्ननुपपत्तिकणिकापि कन्दलयितुं नोत्सहत इत्यर्थः । भाक्तवादी मुख्यार्थबाधाया लक्षणासामग्रीबहिर्भावमङ्गीकुर्वाणस्तदितरसामग्रीसद्भावाल्लक्षणानुप्रवेशमसंलक्ष्यक्रमव्यङ्ग्ये ध्वनिभेदेऽपि संभावयन्नाह—**ननु किमिति** ॥ अस्ति नास्ति वेति चिन्तितयेति शेषः ॥ **इयदेवेति** ॥ बाधामनन्तर्भाव्येत्यर्थः । भवतु काममेतावदेव लक्षणम्, तथापि कुतो लक्षणेत्यत आह—**इह चेति** ॥ **असंलक्ष्यक्रमव्यङ्ग्ये**

## उपलोचनम्

लक्षणायाः पञ्चविधत्वबोधिका कारिका कौमुद्यनुरोधेन लोचने ६३-तमे पुटे "अभिधेयेन सामीप्यात् सारूप्यात्" इत्यादिरूपेण पठिता । अस्मिन् प्रकरणे लक्षणाया व्यापकत्वप्रतिपादनावसरे "अभिधेयेन संयोगात् सामीप्यात्" इत्यादिरूपेण कारिकापाठो लोचनकारसंमतो दृश्यते । "अभिधेयेन संबन्धात् सादृश्यात्" इत्यादिरूपेण इयमेव कारिका आचार्यभर्तृमित्रस्येति मुकुलभट्टेन अभिधावृत्तिमातृकायां पठिता । अतिप्राचीनस्य भर्तृमित्रस्य कारिकायां संजातः पाठविपर्यासो लोचनकाराणामपि ज्ञातः स्यात् इति संभाव्यते ॥

"न हि विवक्षितान्यपरवाच्यलक्षणो ध्वनिप्रभेदः, अन्ये च बहवः तद्भेदप्रकारा भक्त्या व्याप्यन्ते" इति वृत्तिग्रन्थस्य द्विधा योजना लोचनकाराणामभिमता । सहृदयानुभवदृष्ट्या एका योजना—'विवक्षितान्यपरवाच्यलक्षणः शिखरिणीत्यादिः, अन्ये च बहवः तद्भेदप्रकाराः अलक्ष्यक्रमो रसादिभेदभिन्नः, शब्दार्थशक्तिमूलसंलक्ष्यक्रमभेदाश्च'—इति । दुर्दुरूढप्रत्यायननिर्भरेण प्रकारान्तरेण योजना—'अलक्ष्यक्रमात्मा विवक्षितान्यपरवाच्यलक्षणः ध्वनिप्रभेदः, उक्तात् शिखरिणीत्यादेरन्ये च बहवस्तस्यासंलक्ष्यक्रमस्य भेदाः'—इति ॥

१. क. ख. ग. 'काव्ये तत्रार्थे मुख्ये तावद् बाधकानु'
२. ङ. च. 'हि' अधिकम् ।
३. क. ख. ग. 'लक्षणास्वरूपम्'
४. क. ख. ग. 'लक्षणोच्यते'
* अनेन 'मुख्येऽर्थे बाधोऽपि तावदसंभाव्यः' इति व्याख्यादृतो लोचनपाठ इति गम्यते ।

## लोचनम्

विभावानुभावयोः कारणकार्यरूपत्वात्[1], व्यभिचारिणां च तत्सहकारित्वादिति चेत्[2], मैवम्; धूमशब्दाद्धूमे प्रतिपन्ने ह्यग्निस्मृतिरपि लक्षणाकृतैव स्यात्। ततोऽग्नेः शीतापनोदस्मृतिः इत्याद्यपर्यवसितः[3] शब्दार्थः स्यात्। धूमशब्दस्य स्वार्थविश्रान्तत्वान्न तावति व्यापार इति चेत्, आयातं तर्हि मुख्यार्थबाधो लक्षणाया जीवितमिति। सति हि[4] तस्मिन् स्वार्थ-

## कौमुदी

ध्वनौ रसादयोऽविनाभूता इति कृत्वा लक्ष्यन्त इति योजना। कथमविनाभूतत्वमिति तदुपपादयति—**विभावेति**॥ कारणं विभावः, कार्यमनुभावः, सहकारिणो व्यभिचारिण इति तावद्भवतां पटहघोषः, न चैषु संयोजितेषु सत्सु रसादेरनिष्पत्तिः असंयोजितेषु न वा निष्पत्तिः "विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः" इति मुनिवचनव्याकोपात्। अतो विभावादिलक्षणमुख्यार्थाविनाभावसमुदीयमाना रसादिप्रतीतिः संप्रतिपन्नलाक्षणिकार्थप्रतीतिवल्लक्षणाव्यापारानिबन्धनैव भवितुमर्हति, न भवदभिमतव्यापारान्तरानिबन्धनेति तत्रापि भक्तेरनुप्रवेशो दुर्वार इत्यर्थः। मुख्यार्थाविनाभावस्य लक्षणासामग्र्यन्तर्भावेऽपि मुख्यार्थबाधस्यैवान्तरङ्गत्वमिति परं बलात् स्वयमङ्गीकारयितुं प्रतिबन्दीग्रहणभङ्ग्यातिप्रसङ्गं दर्शयन्नाह—**मैवमिति**॥ हिर्हेतौ। मुख्यार्थाविनाभूतप्रतीतित्वं हि लक्षणालक्षणं भवतोऽभिमतम्; एतच्च धूमशब्दजनितधूमप्रतीत्युत्तरकालभाव्यग्निविषयस्मरणज्ञानेऽप्यस्तीति तदपि लक्षणाव्यापारानिबन्धनमेव स्यात्; तथा च धूमशब्दस्य स्वार्थविषयाभिधाव्यापाराभ्यधिको लक्षणाव्यापारोऽग्निविषय एव कश्चित् कल्पनीयः स्यात्; तत्प्रतीतेश्च प्रमितिरूपत्वम्, न स्मृतिरूपत्वम्। धूमशब्दस्य च धूमवदग्निरपि विषय इत्यलौकिकमनिष्टमनेकमापद्यमानमनिवार्यं स्यादित्यर्थः। तदङ्गीकरणं[कारिणं] प्रति ततोऽप्यधिकं दोषमापादयति—**तत इति**॥ अग्निस्मरणाद्धेतोः। एतदपि कथञ्चित् सहमानं प्रत्याह—**इत्यादीति**॥ शब्दार्थः धूमशब्दार्थः। उक्तातिप्रसङ्गमाशङ्कते—**धूमशब्दस्येति**॥ स्वार्थे धूमादौ। विश्रान्तिः पर्यवसितव्यापारत्वम्। शब्दस्य यदर्थप्रतिपादने सामर्थ्यमवधृतं तदर्थप्रतिपत्तिपर्यन्त एव व्यापारो युक्तः। सा चेदर्थप्रतीतिः प्रतिपत्तुरुपजाता उपरमेदेव व्यापाराच्छब्दः, धूमप्रतीतिश्च धूमशब्दकार्यं नान्यत्। तच्च निष्पन्नमेवेति न भूयः शब्दो व्याप्रियते इत्यग्न्यादौ तद्व्यापाराभावान्नापर्यवसितार्थत्वापत्तिरित्यर्थः। तर्हि जितमस्माभिरित्याह—**आयातमिति**॥ तस्मिन्

१. घ. ङ. च. 'कार्यभूतत्वात्' ३. क. ख. ग. 'स्मृतिरित्यादिरपर्य-'
२. घ. ङ. च. 'चेत्' नास्ति। ४. घ. ङ. च. 'हि' नास्ति।

## लोचनम्

विश्रान्त्यभावात् । न च विभावादिप्रतिपादने बाधकं किंचिदस्ति । नन्वेवं धूमावगमा-[1]नन्तराग्निस्मरणवद्विभावादिप्रतिपत्त्यनन्तरं रत्यादिचित्तवृत्तिप्रतिपत्तिरिति शब्दव्यापार एवात्र नास्ति । इदं तावदयं प्रतीतिस्व[2]रूपज्ञो मीमांसकः प्रष्टव्यः—किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः । न[3] चैवं भ्रमितव्यम् । एवं हि

## कौमुदी

मुख्यार्थबाधे । अत्रेदं वक्तव्यम्—समानेऽपि स्वार्थाभिधानसामर्थ्ये धूमशब्दः स्वार्थे विश्राम्यति ; गङ्गायां घोषः इत्यत्र तु गङ्गाशब्दो नेत्यत्र को हेतुरिति । गङ्गाशब्दस्य प्रमाणान्तरबाधितस्वार्थत्वात् स्वार्थविश्रान्तिविरहः धूमशब्दस्य तदभावादन्यत्राप्रसर इति चेत्, अहो प्रस्मरणशीलत्वमायुष्मतः ! मुख्यार्थबाध एव लक्षणाबीजमिति स्वकण्ठेनैवोक्तत्वात् ; तर्हीहापि मुख्यार्थबाधस्तन्मूला च लक्षणा स्यादिति, नेत्याह—**न चेति** ॥ रसादिप्रतीतेः धूमशब्दमूलाग्निस्मरणसमानयोगक्षेमतामुपश्रुत्यानिष्टापत्तिमाशङ्कते—**नन्वेवमिति** ॥ या तावद्विभावादिप्रतीत्यनन्तरं रत्यादिप्रतीतिः सा धूमादिप्रतीत्यनन्तराग्निस्मरणतुल्यैव । ततश्च न शब्दव्यापारजन्यापि सा भवति ; दूरे व्यञ्जनव्यापारगम्यत्वम् । विमता प्रतीतिः न शाब्दी शब्दजन्यार्थप्रतीतिजन्यत्वात् धूमशब्दोपजातार्थप्रतीतिजन्याग्निस्मरणवदित्यर्थः । किं परकीयरत्यादिचित्तवृत्तिप्रतिपत्तेरशब्दव्यापारजन्यत्वं सिसाधयिषितम् किं वा रसप्रतिपत्तेः । आद्ये सिद्धसाधनम् ; द्वितीये रसप्रतिपत्तेरितरसकलप्रतीतिविलक्षणस्वभावत्वात् दृष्टान्ताभावो दोष इत्यभिप्रायेण सोपहासं पृच्छति—**इदं तावदिति** ॥ प्रश्नो हि कस्यचिद्बुभुत्सोः कर्मापि प्रति संभवतीति प्रसिद्ध एवायं पन्था इति तावच्छब्देनाह । अयं इत्थंकारं वदन्निति तदुक्तेरसामीचीन्यस[सू]चन्युक्तिः ॥ प्रतीतिस्वरूपेति वैपरीत्याल्लक्षणा । मीमांसक इति रसास्वादमार्गवैदेशिकता । अत्रेति काव्ये । ननु किमस्मदभिमतप्रश्नेन ? उक्तं हि भवद्भिरेव रत्यादिस्थायिचित्तवृत्तय एव रसादय इति ; तदनुसारेणैवास्माभिरभिहितं न स्वमनीषिकयैवेति ; तत्राह—**न चैवमिति** ॥ **भ्रमितव्यमिति** ॥ भ्रमप्रतिषेधेन महतो भ्रमस्य स्थानमिदम्, भ्राम्यन्ति च केचन कुशाग्रीयधियोऽपीति दर्शितम् । रत्यादिचित्तवृत्तिरेव रस इति यदस्माभिरुच्यते न तद्यथाश्रुतमेव तत्त्वमिति ग्राह्यम् । कुत इत्यत आह—**एवं हीति** ॥ चित्तवृत्तेः लौकिक्या एव रसत्वोपगमे सतीत्यर्थः ॥

१. क. ख. ग. 'गमनानन्तर' घ. 'गमाग्नि'

२. क. ख. ग. 'स्वरूप' नास्ति ।

३. क. ख. ग. 'नैवम्'

## लोचनम्

लोकगतचित्तवृत्त्यनुमानमात्रमिति का रसता। यस्त्वलौकिकचमत्कारात्मा रसास्वादः काव्यगतविभावादिचर्वणाप्राणः, नासौ स्मरणानुमानादिसाम्येन खिलीकारपात्रीकर्तव्यः। किं तु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न

## कौमुदी

चित्तवृत्त्यनुमानमात्रम्। रसप्रतिपत्तिरिति शेषः ॥ **का रसतेति** ॥ रसनीयतासारतानिमित्तको हि रसशब्दः ; न चानुमानरूपायाः प्रतीते रसनीयत्वमस्ति प्रसिद्धानुमानेष्वनुपलम्भादेवेत्यर्थः। का तर्हि रसप्रतिपत्तिरित्यपेक्षायामनुमानादिविलक्षणं तत्स्वरूपं दर्शयति—**यस्त्विति** ॥ अत एव तुशब्दो विशेषार्थः। चमत्कारात्मत्वं प्रसिद्धसुखास्वादस्यापि समानमिति तद्व्यावृत्त्यर्थम्—**अलौकिकेति** ॥ अनेन स्वरूपमुक्तम्। अलौकिकत्वे हेतुं दर्शयंस्तस्य कारणमाह—**काव्यगतेति** ॥ काव्यशब्दसमर्पितत्वात् तद्गतत्वम्। अनेन यथा काव्यशब्दसमर्पितं तद्रूपम्, तथा बहिःसत्त्वाभावो दर्शितः। अत एव तादृशविषयविभावादिशब्दसंजल्पनेनोक्तिः। तत्र स्वरूपेणैव बहिरसन्त एव केचित् ; केचित्तु स्वरूपेण बहिःसत्तामनुभवन्तोऽपि विभावादिशब्दव्यपदेशविषयेण बहिरसता काव्यशब्दमहिमोपस्थापितेनैव रूपेण विशिष्टचर्वणोपयोगिन इति इयानेव विशेषः। चर्वणैव प्राणो जागरणहेतुरिति रसप्रतीतेर्निदानं दर्शितम्। तथाप्यग्न्यादिविषयानुमानादिप्रतीतिसोदरैवैषा प्रतीतिः शब्दजन्यार्थप्रतीत्यनन्तरभावित्वादित्यत्राह—**नासाविति** ॥ अलौकिकत्वादेव तावन्न लौकिकस्मरणादिसाम्यम्। यदि तु केवलशुष्कतर्ककार्कश्यापाश्रयेण काष्ठाधिष्ठितसहृदयभावसाम्राज्यपुरुषधौरेयविशिष्टहृदयद्रुतिसमास्वाद्यसारसंवेदनमात्रपरमार्था रसप्रतिपत्तिः स्मरणानुमानादिसाम्यभूम्यां समारोप्येत, तत् किं कुर्मः प्रतिपत्तिस्वरूपविप्रतिपत्तिषु प्रस्तूयमानासु परप्रत्यायनस्य शपथोक्तिमात्रशरणत्वादित्याशयेनोक्तम्—**न खिलीकारपात्रीकर्तव्य इति** ॥ यदि लौकिकस्मरणादिसाधारण्यसरण्यवतीर्णस्वरूपा चेयं न भवति रसप्रतीतिः, कीदृशी तर्हि तद्वार्तेत्याशयेन पृच्छति—**किं त्विति** ॥ इदानीम् अलौकिकचमत्कारात्मा काव्यगतविभावादिचर्वणाप्राणः इत्युक्तमेव विवृण्वन्नुत्तरमाह—**लौकिकेनेत्यादिना** ॥ लोकव्यवहारमार्गपतितेन कार्यकारणसहकार्यात्मकलिङ्ग-

१. क. ख. 'नुमानादिना' २. च. 'प्रतिपाद्यमानः'

## लोचनम्

ता[1]टस्थ्येन प्र[2]तिपद्यते ; अपि तु[3] हृदयसंवादापरपर्यायसहृदयत्वपरवशीकृततया पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया । न चासौ चर्वणा प्रमाणान्तरतो जाता पूर्वम् येनेदानीं स्मृतिः स्यात् । न चाधुना

## कौमुदी

सामर्थ्यजनितेन स्थायिभूतपरचित्तवृत्त्यनुमानेन, आदिशब्दगृहीतार्थापत्तिज्ञानेन च भूयो भूयः प्रवृत्तेन सता समुपजातानुमानझाटित्यपाटवातिशयहृदय इति रसप्रतिपत्तौ समुचितस्य प्रतिपत्तृविशेषस्योपक्षेपः । विभावादिकं प्रतिपद्यमान इति करणनिर्देशः । विभावादिकम् प्रमदादि ; प्रतिपद्यमानः काव्यनटव्यापारविशेषबलादिति शेषः । एवकारः प्रतिपत्त्युत्पत्त्यवस्थानतिवृत्तत्वार्थः ॥ **ताटस्थ्येनेति** ॥ 'अयं घटः' इत्यादिपदात्मना[वदात्मना] पृथग्भावेनेत्यर्थः । कथं तर्हि तत्प्रतिपत्तिः ? न ह्यन्यथाकारं प्रतिपत्त्युत्पत्तिरुपलब्धचरीत्याह—**अपि त्विति** ॥ अलौकिकत्वाल्लोकदृष्टवैपरीत्यमदोषावहमित्याह — **हृदयसंवादेति** ॥ अनेन प्रागुक्तं सहृदयलक्षणमिहानुसंहितम् । परवशीकृतत्वम् आक्रान्तत्वम् । अनेन तत्तादृशचर्वणार्थप्रयत्नविशेषानुपादानेऽपि प्रत्युत मात्रया तत्परिपन्थिप्रयत्नान्तरोपादानोद्यमेऽपि हठादाक्रम्यैव चर्वणाभिमुख्यमानीयत इति दर्शितम् । सहृदयत्वपरवशीकृतत्वम् अनुमानादिसरण्यनारोहश्च चर्वयितुः । अङ्कुरीभावस्तु चर्वणायाः । पूर्णीभविष्यन् अपूर्णः सन् पूर्णतामासादयितुमुपक्रान्तः ; तादृशस्य रसास्वादस्य महार्घस्य कल्पतरोश्चतुर्वर्गोपायव्युत्पत्तिं फलिष्यतोऽङ्कुरस्थानीयतया अवस्थिता या विभावादिचर्वणा तत्प्राणतयैव विभावादिकं प्रतिपद्यते, न ताटस्थ्येनेति संगतिः । कथमनुमानादिप्रतीतिसाम्यविरह इत्याशङ्क्य तदभिमतसामग्रीभूतव्याप्त्याद्यनपेक्षतयैव तदुत्पत्तेरित्याह—**अनुमानेति** ॥ परिपूर्णरसास्वादाङ्कुरस्थानीयतामुपपादयन् विभावादिचर्वणाया रसास्वादपर्यन्तता तन्मयीभवनक्रमेणेत्याह—**तन्मयीभवनोचितेति** ॥ अलौकिकत्वमेवोपपादयन् स्मृतित्वादिशङ्कां निराकरोति—**न चासाविति** ॥ स्मृतिर्ह्यनुभूतपूर्वविषयनियतोत्पत्तित्वेन व्याप्ता सती तदभावे स्मृतित्वाद्व्यावर्तमाना तद्विलक्षणस्वभावतामात्मनोऽवगमयेत् । तदभावश्च तद्विषयप्रमाणानुदयावसेयः । स चालौकिकत्वाद्रसस्यायत्नसिद्ध इति स्मरणसाम्यं तावद्रसस्य नाशङ्कनीयमित्यर्थः । तर्हि मा भूत् स्मृतिः ; प्रत्यक्षादिप्रमाणान्तरनिबन्धनं प्रतीत्यन्तरमेव किं न स्यादिति ? नेत्याह—**न चाधुनेति** ॥ अलौकिक-

१. घ. 'तादर्थ्येन'
२. ग. 'प्रतीयते'
३. घ. 'तु' नास्ति ।

## लोचनम्

कुतश्चित्प्रमाणान्तरादुत्पन्ना, अलौकिके प्रत्यक्षाद्यव्यापारात् । अत एवालौकिक एव विभावादिव्यवहारः[१] । "यदाह विभावो विज्ञानार्थः" । लोके तु कारणमेवाभिधीयते, न विभावः । अनुभावोऽप्यलौकिक एव । यदाह—"यदयमनुभावयति वागङ्ग-

## कौमुदी

विभावादियोजनबलोपस्थापितत्वात् अलौकिकत्वं तावदस्य सकललोकव्यवहारसिद्धि-प्रत्यर्थम् । न केवलं लौकिकप्रतीतिसामग्र्यजन्यत्वादेवालौकिकत्वसिद्धिः, कारणादिशब्द.... [शब्दागोचर]तया विभावाद्यलौकिकशब्दव्यपदेश्यत्वमपि स्वनिमित्ततया स्वकार्यभूतचर्वण-स्यालौकिकत्वं गमयतीत्याह—**अत एवेति** ॥ लौकिकस्य हेतोरलौकिकविभावादिशब्दाव्य-पदेश्यत्वे मुनिवचनं विभावशब्दप्रवृत्तिनिमित्तप्रदर्शकं संवादयति—**यदाहेति** ॥ इति-शब्दोऽत्राध्याहार्यः । ऋतुमाल्यादयो विभावशब्देन कथं व्यपदिश्यन्ताम् इति प्रश्नस्योत्तरमिदं वचनम् । विशिष्टतया भाव्यन्ते ज्ञायन्ते स्थायिव्यभिचारिणो वागाद्यभिनयसहिता येन स विभाव इति विशिष्टज्ञानहेतुत्वं विभावशब्दप्रवृत्तौ निमित्तम् ; न खल्वनुभावबलादेव विशिष्टविज्ञानलाभः, बाष्पादेरनुभावस्यानेकहेतुजत्वसंभवात् ; विभावस्य प्रतिनियतत्वा-निश्चित[त्वान्निश्चित]ज्ञानजनकत्वं संभवतीति भावः ॥

ननूक्तस्य प्रवृत्तिनिमित्तस्य लोकसिद्धत्वात् तत्कृतप्रवृत्तिः शब्दोऽपि लौकिक एव स्यादिति कथं तद्व्यवहारस्यालौकिकत्वमित्याशङ्क्य तथा प्रयोगरूढ्यभावादेवालौकिक-त्वमित्याह—**लोके त्विति** ॥ चित्तवृत्त्युद्भवहेतुः ऋतुमाल्यादिरूपोऽर्थो लोके कारणशब्देनैव व्यवह्रियमाणो दृश्यते, न विभावशब्देन कथंचिदपि ; यदि कश्चिद्धैयात्यादेव तथा प्रयुञ्जीत, असन्देहमसौ न तावल्लौकिकः, न च परीक्षकः "सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः" इति प्रेक्षावद्भिः पुरुषधौरेयैः अनवधेयवचनोऽसावित्युन्मत्तवदुपेक्षणीयत्वपक्ष एव प्रक्षिप्येतेति कारणादिशब्दवन्न विभावशब्दस्य लौकिकत्वमित्यर्थः । विभावव्यवहारस्या-लौकिकत्वं प्रदर्श्यानुभावव्यवहारस्यापि तदाह—**अनुभावोऽपीति** ॥ अनुभावयतीत्यत्र कर्मतया स्थायिसञ्चारिण इत्यध्याहार्यम् । नन्वनुभवनं नाम स्थायिव्यभिचारिचित्तवृत्ति-विषयं विज्ञानमेव ; तच्च लौकिकमनुमानादिप्रायमिति कथं तदवगमहेतोरलौकिकत्वमित्यत्राह

१. क. ख. 'एव' अधिकम् ।

२. क. ख. ग. 'यदाह...अलौकिक एव' नास्ति ।

## लोचनम्

सत्त्वकृतोऽभिनयस्तस्मादनुभावः" इति । [1]तच्चित्तवृत्तितन्मयीभवनमेव ह्यनुभवनम् । लोके तु कार्यमेवोच्यते नानुभावः । अत एव परकीया न चित्तवृत्तिर्गम्यत इत्यभिप्रायेण "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति [2]सूत्रे स्थायिग्रहणं न कृतम् । [3]कृतं तत्प्रत्युत शल्यभूतं स्यात् । स्थायिनस्तु रसीभाव औचित्यादुच्यते । तद्विभावानुभावोचितचित्त-

## कौमुदी

—तच्चित्तवृत्तीति ॥ न परकीयचित्तवृत्तिप्रतीतिमात्रमिहानुभवनम्, येनास्य लौकिकत्वप्रसक्तिः ; अपि तु तासां स्थायिसञ्चारिभूतानां गुणप्रधानभावेन व्यवस्थितानां सम्बन्धी यः सामाजिकानां तन्मयीभावः हृदयसंवादजनितः तद्रूप[पम्]एव, न ज्ञानमात्रमित्यलौकिकत्वसिद्धिरित्यर्थः ॥ लोके त्विति ॥ व्याख्यातप्रायम् । ननु भवतैवेदमिदानीमुत्प्रेक्षितमेव, न तु प्रमितमिति शङ्कित्वा कथितमर्थं मुनिवचनसंमत्या द्रढयति—अत एवेति ॥ यस्मादनुभवनं चित्तवृत्तितन्मयीभवनमेव न परकीयचित्तवृत्त्यवगममात्रम् ; तत एव हेतोरिति यावत् । यद्यपि रससूत्रे स्थायिग्रहणमपि व्यभिचारिग्रहणवत् प्राप्तमेव, प्रत्युत तस्यैव मुख्यत्वादावश्यकमेव तद्ग्रहणं विभावानुभावसमभिव्यञ्जितैरेकोनपञ्चाशता भावैः सामान्यत एव गुणप्रधानभावेन संयोजितै रसाभिनिष्पत्तेरुक्तत्वात्, तथापि मुनिना स्थायिग्रहणं न कृतम् ; इतरग्रहणादेव स्थायिनोऽर्थसिद्धत्वात् । स्थायिचित्तवृत्तिसूत्रस्यूतत्वेन सञ्चारिणां तन्मुखप्रेक्षितावष्टब्धप्रवृत्तिकत्वात् । अर्थसिद्धस्यापि वा प्राधान्यात् ग्रहणे स्थायिन एवेति[तर]चित्तवृत्तिसहकृतस्य रसीभावापत्तौ परकीयचित्तवृत्त्यप[व]गममात्रमेव रस इति शङ्कुकादिसंकल्पितसरणिसञ्चारिणां केषांचित् प्रतीतिः स्यात् ; तन्मा भूदित्यभिप्रायेण विभावानुभावव्यभिचारिणां गुणभावेन प्रधानभूतेन स्थायिना संयोगे रसनिष्पत्तिरिति मुनिना सूत्रं न कृतमिति तदनुरोधेनैवास्माभिरिदमुक्तमित्यर्थः । नन्वेवं सति "विभावानुभावव्यभिचारिपरिवृतः स्थायी भावो रसनाम लभते" इति मुनिनैव यत् स्थायिनो रसत्वमभिहितं तत्कथंकारं घटतामित्यत्राह—स्थायिन इति ॥ औचित्यमेव स्फोरयति—तद्विभावेति ॥ तस्मिन् स्थायिभावे एव नियता ये विभावानुभावास्तदुचितायाश्चित्तवृत्तेर्यः संस्कारस्तेन सुन्दरतयैव रसचर्वणाया निष्पत्तेरित्यर्थः । प्रागपि चैतदुक्तम् "शोको हि स्थायिभावः" इत्यादि । न केवलं रसचर्वणाया स्थायि-

१. ङ. 'तत्' नास्ति ।
२. घ. ङ. च. 'इत्यत्र'
३. क. ख. ग. ङ. च. 'कृतम्' नास्ति ।

## लोचनम्

वृत्तिसंस्कारसुन्दरचर्वणोदयात्। हृदयसंवादोपयोगिलोकचित्तवृत्ति[1]परिज्ञानावस्थायामुद्यानपुलकादिभिः स्थायिभूतरत्याद्यवगमाच्च । व्यभिचारी तु चित्तवृत्त्यात्मत्वेऽपि मुख्यचित्तपरवश एव च[2]र्व्यत इति विभावानुभावमध्ये गणितः । अत एव रस्यमानताया एषैव निष्पत्तिः य[3]त् प्रबन्धप्रवृत्तबन्धुसमागमा[4]दिकारणोदितहर्षादिलौकिकचित्तवृत्ति[5]न्यग्भावनेन चर्वणारूढत्वम् ।

## कौमुदी

चित्तवृत्तिप्राणत्वमेव स्थायिनो रसत्वव्यपदेशनिमित्तम्, स्थायिप्रतीतिहेतुजन्यत्वं चेत्याह—**हृदयसंवादोपयोगीति** ॥ रसचर्वणा हि नाम हृदयसंवादपुरस्सरा ; तदभावे सति श्रोत्रियतार्किकादे रसचर्वणावार्तावन्ध्यत्वदर्शनात् । तत्र च निदानं लोकचित्तवृत्तिपरिज्ञानमेव तद्विरहितस्य हृदयसंवादानुदयात् । तस्यां चावस्थायामुद्यानादिभिः कारणैः पुलकोद्गमादिभिः कार्यैर्भूयोभूयोऽवधार्यमाणस्वकारणव्याप्तिकैः स्थायिरत्यादिभावावगमः ; त एव चाधुना चर्वणायां प्रस्तूयमानायामलौकिकविभावानुभावव्यपदेश[देश्य]भावं भजमानास्तत्तादृङ्निरतिशयचर्वणापर्वक्रमावतीर्णाः सन्तः तां प्रसुवत इत्यतोऽपि हेतोः स्थायिनो रसत्वोक्तिरित्यर्थः । नन्वेवं सति स्थायिग्रहणवद्व्यभिचारिग्रहणमपि सूत्रे न वक्तव्यम् अर्थलब्धत्वात्, शल्यभावस्यापि तुल्यत्वादित्यत्राह—**व्यभिचारी त्विति** ॥ स्थायिचित्तवृत्तिगुणत्वेन तस्य विभावादिप्रायत्वादित्यर्थः । तथापि न रसस्यालौकिकत्वम् कारकव्यापारनिष्पाद्यत्वात् ; तच्च विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिसूत्राक्षरबलादवगम्यत इत्याशङ्क्य तदुक्तेरौपचारिकत्वाददोष इत्याह—**अत एवेति** ॥ एषेति सूत्राभिधानाभिनयः । तथा च भारत्याम् "कथं तर्हि सूत्रे निष्पत्तिः इति । नेयं रसस्य, अपि तु तद्विषयरसनायाः ; तन्निष्पत्त्या यदि तदेकायत्तजीवितस्य रसस्य निष्पत्तिरुच्यते, न कश्चिदत्र दोषः" इति । ननु विशिष्टकारणोद्भूतहर्षादिचित्तवृत्तिरेव रस्यते लोके ; तेन न तदतिरिक्तरसविषयरस्यमानतोपपत्तिरित्याशङ्क्य तासामानुकूल्यप्रतीतिविषयत्वातिरेकेण चर्वणीयतायोग्यत्वलक्षणरस्यमानत्वाभावात् अदोष इत्याह—**यत्प्रबन्धेति** ॥ अथ कैषा चर्वणा विभावादिसंयोगनिबन्धना ? यदारूढत्वं

१. क. ख. 'लोकवृत्ति' घ. ङ. 'लोकवृत्त'
२. क. 'चोच्यते'
३. क. ख. 'निष्पत्तिर्या' ग. 'निष्पत्तिर्यत् प्रबलप्रवृत्तत्वं बन्धु'
४. घ. 'आदि' नास्ति ।
५. क. ख. ग. ङ. च. 'न्यग्भावेन चर्वणारूपत्वम्'

## लोचनम्

अतः[1] चर्वणात्राभिव्यञ्जनमेव, न तु ज्ञापनम् प्रमाणव्यापारवत्; नाप्युत्पादनम् हेतु[2]व्यापारवत्। ननु यदि[3] नेयं[4] ज्ञप्तिः न वा निष्पत्तिः, तर्हि किमेतत्। नन्वेयमसावलौकिको[5] रसः। ननु[6] विभावादयोऽत्र[7] किं ज्ञापको हेतुरुत कारकः? न ज्ञापको न कारकः; अपि तु चर्वणोपयोगी। ननु क्वैतत् दृष्टमन्यत्र? यत एव न दृष्टम्, तत एवालौकिकमित्यु-

## कौमुदी

रस्यमानत्वम्; किं ज्ञापनरूपा आहोस्विन्निष्पादनात्मिका? उभयथापि नालौकिकत्वमित्याशङ्क्य नोभयमपि, किन्तु आनन्दघनसंवेदनमात्रस्वरूपेति दर्शयति—**अत इति**॥ चित्तवृत्तिविलक्षणत्वादलौकिकत्वम् अतःशब्देन परामृश्यते। सिद्धस्य कस्यचित् प्रमेयभूतस्य नीलपीतादिप्रायस्य रसस्व[त्वा]भावान्न ज्ञापकत्वम्। न च निष्पत्तिशब्दानुग्रहार्थं निष्पाद्यत्वमङ्गीक्रियतामिति वाच्यम्; विभावाद्यपगमेऽपि रससंभवप्रसंगात्। ज्ञापनोत्पादनव्यापारनिषेधेऽर्थाद्रसस्य ज्ञप्तिनिष्पत्त्यभावे नृशृङ्गगगनपङ्कजादिवत् असत्त्वं चोदयति—**ननु नेयमिति**॥ इयमिति चर्वणा। एतदिति सामान्येन निर्देशः। प्रसिद्धत्वादनपह्नवनीयताम् अभिसन्धायोत्तरमाह—**नन्वयमिति**॥ ज्ञप्त्युत्पत्त्ययोग्यत्वम् अलौकिकत्वात् भूषणभावं भजत इति भावः॥

ननु ज्ञापकत्वकारकत्वयोरन्यतरत्वा[रा]भावे विभावादीनां रसप्रतीत्यर्थमुपादानानर्थक्यम्, अकिञ्चित्करत्वात्। तथाभावे च संप्रतिपन्नवन्नालौकिकत्वात् इति चोदयति—**नन्विति**॥ न तावदकिञ्चित्करत्वं विभावादीनां शक्यापादनम्, अनुभवविरोधात्। ज्ञापकत्वकारकत्वान्यतरनियमस्तु लौकिक एवेति परिहरति—**न ज्ञापक इति**॥ ननु दृष्टानुसारित्वात् कल्पनायाः हेतुव्यापारस्य च द्वैराश्यनियमदर्शनात् कथमन्यत्रादृष्टचरं चर्वणोपयोगित्वं कल्प्यतामिति शङ्कते—**नन्विति**॥ भूषणमेतदस्माकम् अलौकिकस्याप्रत्यूहमेव सिद्धेः इत्याह—**यत एवेति**॥

१. घ. च. 'अतश्च चर्वणा'
२. ग. 'स्वव्यापार'
३. घ. 'यदि' नास्ति।
४. क. ख. 'नैवम्'
५. क. ख. 'न त्वयम्'
६. क. ख. 'ननु विभा....न कारकः' नास्ति।
७. ग. 'विभावादिरत्र'

## लोचनम्

क्तम् । नन्वेवं रसोऽप्रमाणं[1] स्यात् ? अस्तु ; किं ततः ? तच्चर्वणात एव प्रीतिर्व्युत्पत्ति-[2]सिद्धेः किमन्यदर्थनीयम्[3] । नन्वप्रमाणकमेतत् ? न, स्वसंवेदनसिद्धत्वात्[4] ज्ञानविशेषस्यैव चर्वणात्मत्वात् इत्यलं बहुना । अतश्च रसोऽयमलौकिकः, येन ललितपरुषाद्यनुप्रास-[5]

## कौमुदी

ननु रसस्य शुभाशुभप्राप्तिपरिहारोपायव्युत्पत्तिहेतुत्वेन प्रमाणत्वाभ्युपगमादलौकिकत्वमशक्याङ्गीकारमिति चोदयति—**नन्वेवमिति** ।। अप्रमाणरूपत्वेऽपि स्वसौभाग्यमहिम्नैव प्रमाणभूतशास्त्रादिकार्यजनकत्वमात्रेण चरितार्थत्वादित्याह—**अस्तु किं तत इति** ।। प्रीतेर्व्युत्पत्तेश्च सिद्धेरिति शास्त्रादिभ्योऽतिशयद्योतनार्थं प्रीतिफलत्वोक्तिः । यदि वा प्रमिति[प्रीति]पुरःसराया व्युत्पत्तेरिति व्यतिरेकः ।।

नन्वेवमलौकिकत्वे सति तत्साधकप्रमाणाभावादाकाशकुशेशयसदृशतापात इति शङ्कते—**नन्विति** ।। परिहरति—**नेति** ।। ननु रसस्य विशिष्टचर्वणारूढत्वाभ्युपगमात् कथं स्वसंवेदनसिद्धिरपि इत्याशङ्क्याह—**ज्ञानविशेषस्येति** ।। इह चर्वणा नाम **आनन्दघनं संवेदनमेव परमार्थतः** ; चर्वणापदनिर्वक्तव्यं तु तस्य लौकिकोपायविलक्षणभूतविभावाभ्यु[द्यु]पायविशेषजन्यत्वविशेषकृतज्ञानान्तरवैलक्षण्यमेवेति **साधूक्तं स्वसंवेदनसिद्धत्वमित्यर्थः** । यदुक्तं भारत्याम् "**रसना च बोधरूपैव, किन्तु बोधान्तरेभ्यो विलक्षणैव** उपायानां विभावादीनां लौकिकवैलक्षण्यात्" इति ।।

ननु चर्वणा चेत् ज्ञानविशेषरूपा पुनरपि ज्ञाप्यत्वं रसस्यापतितम्, तच्चानभिमतम् । अथ बोधान्तरवैलक्षण्याददोषं ब्रूषे, न तर्हि रसस्य प्रमाणसिद्धत्वसिद्धि[द्धिः;]बोधात्मना हि न बोधवैलक्षण्यमबोधरूपत्वापत्तेः । रूपान्तरेण चेत्, लौकिक[का]बोधाभिमतस्यापि बोधत्वापत्तिः ; न चाविद्याकल्पितत्वं रसस्य भवद्भिरभ्युपगतम्, अलौकिकत्वमात्राङ्गीकारात् ; अतो विवेकिलोकदुःसञ्चरोऽयं रसमार्ग इत्याशङ्क्य अविगीताविर्भवदात्मप्रतीतिसाक्षिकरसस्वरूपसद्भावं प्रति विप्रतिपद्यमानं प्रति तूष्णींभाव एव शोभतेतमामित्याह—**इत्यलमिति** ।। पुनरपि रसस्यालौकिकत्वं साधयति—**अतश्चेति** ।। वाचकशब्दैकगम्यत्वेऽपि [हि] **रसस्य**

१. ग. 'अप्रमेयम्'
२. ख. 'प्रीत्युत्पत्ति'
ग. 'प्रतीतिर्व्युत्पत्ति'
३. ग. 'अन्यत्' नास्ति ।
४. क. ख. 'स्व' नास्ति ।
५. क. ख. ग. 'आदि' नास्ति ।

## लोचनम्

स्यार्थाभिधानानुपयोगिनोऽपि[1] रसं प्रति व्यञ्जकत्वम्। का तत्र लक्षणायाः शङ्कापि। काव्यात्मकशब्दनिष्पीडनेनैव[2] च[3] तच्चर्वणा दृश्यते। दृश्यते हि तदेव काव्यं[4] पुनः पुनः पठ्यमानं चर्व्यमाणश्च[5] सहृदयैर्लोकः[6]। न तु काव्यस्य तत्र "उपादायापि[7] ये हेयाः" इति न्यायेन कृतप्रतीतिकस्यानुपयोग एवेति शब्दस्यापि ध्वननव्यापारः[8]। अत[9] एवालक्ष्यक्रमता।

## कौमुदी

वाच्यवत् कथञ्चिल्लौकिकत्वं शक्यशङ्कम्, अनुप्रासादेरपि वाचकत्ववन्ध्यस्य रसव्यञ्जकत्वमस्त्येव; न चानुप्रासव्यङ्ग्यं वस्तु लोके दृष्टचरमिति रसस्यालौकिकत्वसिद्धिरित्यर्थः॥

यद्यप्यलौकिकसिद्ध्यर्थमेवावाचकादिव्यङ्ग्यत्वं रसस्य प्रदर्शितम्, तथापि तदुपजीवनेनालक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदे लक्षणानुप्रवेशविरहं प्रस्तुतमेवानुवर्तयति—**का तत्रेति**॥ अभिधावृत्तेरेवाभावे तत्पृष्ठपातिन्या लक्षणायास्तावत् प्रसङ्ग एव नास्तीत्यर्थः। शब्दस्वरूपस्यैवाभिधास्वरूपानपेक्षस्य व्यञ्जकत्वेऽनुभवं प्रमाणयति—**काव्यात्मकेति**॥ परुषललिताद्यनुप्रासपरिकर्मितत्वं काव्यशब्देनोक्तम्। शब्दनिष्पीडनप्रणाड्यार्थनिष्पीडनस्यैव तत्र प्रमाणत्वमिति मन्यमानं प्रति तद्व्यतिरेकं दर्शयितुमाह—**दृश्यते हीति**॥ [**तदेवेति**] यदेव प्रथमं पठितं चर्वितं च तदेव पुनरपि पठ्यते चर्व्यते चेत्यर्थः। तदेतदर्थविषयां प्रतीतिमुद्भाव्य निवृत्तव्यापारस्य अत एव चरितार्थस्यासमञ्जसमिति तदुपलम्भबलाच्छब्दस्वरूपमात्रस्यापि धेनूधोभारवद्रससुधानिःष्यन्दित्वमवगम्यत इत्याह—**न त्विति**॥ कृतप्रतीतिकस्य काव्यस्य काव्यशब्दस्य; तत्र रसचर्वणे विषये; केवलस्य शब्दस्वरूपस्यापीत्यर्थः। अलक्ष्यक्रमत्वं यद्व्यङ्ग्यस्य, तदपि शब्दस्वरूपस्यैवार्थाभिधानानपेक्षतया व्यञ्जकत्वं गमयतीत्याह—**अत एवेति**॥ यद्यर्थप्रतीतिव्यवधानापेक्षयैव शब्दस्य व्यञ्जकत्वं भवेत्, तदावश्यं क्रमो लक्ष्येतैव; तदलक्षणात्तु स्वरूपेणैव शब्दस्य व्यञ्जकभावोऽध्यवसीयत इत्यर्थः। एवमभिधावृत्त्यनपेक्षणेनैवानुप्रासादीनां व्यञ्जकत्वप्रदर्शनेन लक्षणावृत्त्यनुप्रवेशाशङ्काकलङ्कः संक्षालितः।

---

१. ग. 'अनुपयोगेऽपि'
२. ग. 'निष्पादनेनैव'
३. क. ख. ग. 'च' नास्ति।
४. क. ख. 'कार्यम्'
५. क. ख. 'चर्वमाणः'
६. क. ख. 'सहृदयः'
७. घ. 'देया अपि'
८. ग. 'इह ध्वननम्'
   घ. 'इह ध्वनन-'
९. घ. 'अत एवालक्ष्यम्'

लोचनम्

यत्तु वाक्यभेदः स्यादिति केनचिदुक्तम्, तदनभिज्ञतया । शास्त्रं हि सकृदुच्चारितं[1] समयबलेनार्थं प्रतिपादयद्युगपद्विरुद्धानेकसमयस्मृत्ययोगात्कथमर्थद्वयं प्रत्याययेत्[2] । अविरुद्धत्वे वा तावानेको वाक्यार्थः स्यात् । क्रमेणापि[3] विरम्यव्यापारायोगः[4] । पुनरुच्चारितेऽपि[5][6]

कौमुदी

अमुनैव प्रसङ्गेन काव्यस्य वाच्यव्यङ्ग्यात्मकार्थद्वयप्रतिपादकत्वाभ्युपगमे सत्येकवाक्यत्वाभिमतस्य तद्वाक्यस्य अर्थभेदाद्वाक्यभेदः इति न्यायात् भिन्नवाक्यत्वमापद्यमानमनिवार्यमिति कस्यचिदनिष्टापादनं लाघविकतया मध्ये निराकरोति—**यत्त्विति** ॥ अनभिज्ञत्वं वाक्यत्वसामान्यमर्थत्वसामान्यं च केवलमाश्रित्य तत्प्रतिपादनप्रकारभेदानालोचनात् । अनभिज्ञत्वमेव दर्शयितुं विषयान्तरे वाक्यभेददूषणप्राप्तिं दर्शयति—**शास्त्रं हीत्यादिना वाक्यभेदो दूषणमित्यन्तेन** ॥

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

इत्युक्तदिशा पुंसामाक्रम्य नियोजनात्मकनियोगरूपशासनप्रमाणं वाक्यमिह न शास्त्रशब्देन विवक्षितम्, किन्तु काव्यव्यतिरिक्तं वाक्यमात्रम्, यत्र समयादेरुपयोगः । तत्र किं सकृदुच्चारितं वाक्यमर्थद्वयप्रतिपादकम्, किं वा पुनरुच्चारितम् ? आद्येऽपि युगपत् क्रमेण वा ? युगपच्चेत् किमर्थद्वयमन्योन्यं विरुद्धमविरुद्धं वा ? तत्राद्यं दूषयति—**शास्त्रं हीति** ॥ अनवधारितसमयस्य प्रस्मृतसमयस्य च श्रोतुर्वाक्यश्रवणसमनन्तरमभिधेयप्रतीत्युत्पत्त्यदर्शनात् अर्थप्रतिपादनस्य पूर्वगृहीतसमयस्मरणसापेक्षतायामवश्याभ्युपेयायां विरुद्धार्थविषयत्वेन समययोरपि विरोधात् युगपत्तद्विषयस्मरणद्वयोत्पत्त्यसंभवात् तत्सापेक्षतया अर्थद्वयप्रतिपादकत्वमेकस्य वाक्यस्यानुपपन्नमेवेत्यर्थः ।। द्वितीयं दूषयति—**अविरुद्धत्वे वेति** ॥ अर्थयोरविरुद्धत्वे सति यावानर्थो यत्र वाक्ये प्रतीयते तावानेक एवार्थ इति नार्थद्वयसंभवः, येन वाक्यभेदसंभावनेत्यर्थः । क्रमपक्षं दूषयति—**क्रमेणापीति** ॥ प्रतिपादने सतीति शेषः । विरम्य यो व्यापारः शब्दस्य तस्यायोगः असंभव इत्यर्थः । शब्दबुद्धिकर्मणां विरम्यव्यापारस्य पदार्थविद्भिः प्रतिषिद्धत्वादिति भावः । पुनरुच्चारितं वाक्यमर्थद्वयप्रतिपादकमिति पक्षं दूषयति—**पुनरुच्चारित इति** ॥ तत्रापि किं समया-

१. क. ख. ग. 'उच्चारितम्'
२. ग. 'प्रत्यापयेत्'
३. क, ख. 'अपि' नास्ति ।
४. ग. 'व्यापारयोगः'
५. ङ. 'उच्चरिते'
६. ग. 'अपि' नास्ति ।

## लोचनम्

वाक्ये स एव समयादि[1]प्रकरणादेस्तादवस्थ्यात् । प्रकरणसमयप्राप्य[2]ार्थतिरस्कारेणार्थान्तर[3]प्रत्यायकत्वे[4] नियमाभाव इति । तेन 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति श्रुतौ खादेच्च न[5] [देत् श्व] मांसमित्येष नार्थ इ[6]त्यत्र का प्रमेति प्रसज्यते । तत्रा[7]पि न क्वा[8]चिन्नियततेत्यनाश्वास इत्येवं वाक्यभेदो दूषणम् । इह तु विभावाद्येव प्रतिपा[9]द्यमानं चर्वणाविष[10]यतोन्मुखमिति समयाद्युपयोगाभावः । न च 'नियुक्तोऽहमत्र करवाणि कृतार्थोऽहम्' इति शा[11]स्त्रीयप्रतीति-

## कौमुदी

द्यपेक्षयार्थान्तरप्रतिपादकत्वम् तदनपेक्षया वा ? आद्ये स एव विरम्यव्यापारायोगप्रयुक्तो दोषस्तदवस्थः, प्रथमापेक्षितस्यैव समयादेरुपजीवनेनार्थान्तरप्रतिपादनव्यापारानुपपत्तेः । द्वितीयं प्रत्याह—**प्रकरणसमयप्राप्यार्थतिरस्कारेणेति** ॥ यस्य प्रकरण इदं पठितम्, यस्मिन्नर्थेऽस्य शब्दस्य संकेतः स एवा अस्यार्थ इति नियमो न स्यात् इत्यर्थः । ततः किमित्यत आह—**तेनेति** ॥ तत्रापि अर्थान्तरेऽपि ॥ **अनाश्वासतेति** ॥ अनिश्चितार्थत्वादबोधकत्वलक्षणमप्रामाण्यं स्यादिति यावत् । उपसंहरति—**इत्येवमिति** ॥ यथोक्तविधाप्रामाण्यापत्तिप्रयुक्तं वाक्यभेदलक्षणं दूषणमित्यर्थः । नन्विहा[हापि]तदापत्तिबलादेव तद्दूषणापत्तिस्तुल्यैवेति चेन्नेत्याह—**इह त्विति** ॥ काव्यवाक्ये हि विभावाद्येव समयाद्यपेक्षया प्रतिपाद्यते । प्रतिपाद्यमानं तु तदेव स्वसौन्दर्यविशेषमहिम्ना परिपूर्णरसास्वादात्मकविशिष्टचर्वणोपयोगीति रसादिव्यङ्ग्यप्रतीतिजननं प्रति समयादिसव्यपेक्षत्वं काव्यवाक्यस्य नास्त्येवेति न तत्र यथोक्तदोषावतार इत्यर्थः । शास्त्रजन्यप्रतीतिविलक्षणवृत्तान्तत्वाच्च काव्यीयरसादिप्रतीतेः शास्त्रकाव्यवाक्यप्रवृत्तिभेदः सुखाध्यवसान इत्याह—**न चेति** ॥ बोधावस्थायाम् 'अस्मिन् कर्मणि नियुक्तोऽहम्' इति, अनुष्ठानदशायाम् 'करवाणि' इति, तदुत्तरकालं तु 'कृतार्थोऽहम्' इति प्रतीतिर्यथा लोकव्यवहारे प्रतीयमाना दृश्यते, तथैव "अग्निहोत्रं जुहुयात्" इत्यादिशास्त्रीयव्यवहारेऽपीति लौकिकत्वं प्रसिद्धमेवेत्यर्थः । तदेव विशदयति—

१. घ. ङ. च 'समयादिः प्रक'
२. क. 'प्राप्तार्थ' ख. 'प्राप्त्यार्थ' च. 'प्राच्यार्थ'
३. ग. 'अर्थान्तरत्व'
४. क. ख. ग. 'हि' अधिकम् ।
५. ङ. 'न' नास्ति ।
६. घ. 'इत्येषणार्थमित्यत्र का प्रसज्येत'
७. ग. 'अपि' नास्ति ।
८. क. ख. ग. 'काचिदियत्तेत्यना'
९. छ. 'प्रतिपद्यमानम्'
१०. क. ख. 'विषयोन्मुखम्'
११. क. ख. ग. 'शास्त्रप्र'

## लोचनम्

सदृशमदः । तत्रोत्तरकर्तव्यौन्मुख्येन लौकिकत्वात् । इह तु विभावादिचर्वणाद्भुतपुष्पवत्तत्कालसारैवोदिता न* तु पूर्वापरकालानुबन्धिनीति* लौकिकादास्वादाद्योगिविषयाद्वा[1]न्य एवायं रसास्वादः । अत एव 'शिखरिणि' इत्यादावपि मुख्यार्थबाधादिकमनपेक्ष्यैव सहृदया[2] वक्त्रभिप्रायं चाटुप्रीत्या[3]त्मकं संवेदयन्ते । अ[4]त एव ग्रन्थकारः सामान्येन विवक्षितान्यपरवाच्ये ध्व[5]नौ भक्ते[6]रभावमभ्यधात् । अस्माभिस्तु दु[7]र्दुरूढं प्रत्याययितुमुक्तम्—भवत्वत्र लक्षणा ; अलक्ष्यक्रमे तु कुपितोऽपि किं करिष्यसीति ! यदि तु न कु[8]प्यते 'सुवर्णपुष्पाम्' इत्यादावविवक्षितवा[9]च्येऽपि मुख्यार्थबाधादिलक्षणा[10]सामग्री[11]मनपेक्ष्यैव व्यङ्ग्यार्थ-

## कौमुदी

**तत्रेति** ॥ शास्त्रीयप्रतीतिर्हि[र्हि]न स्वरूपेण पुरुषार्थः, किं तु फलवदनुष्ठानशेषतयैवेत्यर्थः ॥ **इह त्विति** ॥ काव्ये । उदिता रसादिप्रतीतिरिति शेषः । सः वर्तमान एव कालः सारो यस्याः । तद्व्यवच्छेद्यमाह—**न त्विति** ॥ अतश्च रसादिप्रतीतेरलौकिकत्वं सिद्धमित्याह—**इति लौकिकादिति** ॥ तर्हि योगिविषयविशुद्धात्मानन्दास्वादसोदरसौभाग्यभाजनभावं भजतामिति नेत्याह—**योगिविषयादिति** ॥ उक्तमेव रसादेरनितरसाधारणं सौभाग्यम् "शिखरिणि" इत्युदाहरणे प्राथमिक्यां व्याख्यायां मुख्यार्थबाधादिप्रतीत्यनपेक्षयैव व्यङ्ग्यप्रतीतिरिति यदुक्तं तत्र हेतूकरोति—**अत एवेति** ॥ अत्र ग्रन्थकारवचनमपि संवादयति—**अत एवेति** ॥ नन्वेतदास्ताम्—असंलक्ष्यक्रमव्यङ्ग्य इव संलक्ष्यक्रमव्यङ्ग्येऽपि क्रमप्रतीतिमनपेक्ष्यैव व्यङ्ग्यप्रतीतिमभिप्रेत्य ग्रन्थकारस्य सामान्योक्तिरिति ; भवतैव हि समनन्तरमेव स्वकण्ठेनोक्तमात्रमात्रमपि[क्तम् 'अत्रापि]मध्ये लक्षणास्ति' इति द्वितीयं व्याख्याप्रकारमुन्मीलयता ; अस्माभिश्च पर्यनुयुज्यमानेन 'तद्भेदोऽत्रासंलक्ष्यक्रमव्यङ्ग्यात्मा ग्रन्थकृता विवक्षितः' इति । तत्किमिदानीमन्यथाकारं कथ्यत इत्याशङ्क्य अभ्युपगमवादत्वादनुवाद इत्याह—**अस्माभिस्त्विति** ॥ **अत्रेति** ॥ लक्ष्यक्रमव्यङ्ग्ये । ननु कस्य नाम कोपः, पारमार्थिकमेव कथ्यताम् ; न हि वास्तवोपवर्णने कोपो नाम भवितुमर्हतीत्यत्राह—**यदि त्विति** ॥ **अविवक्षितवाच्येऽपि** ॥ तत्खलु तस्य क्षेत्रमिति भावः ॥

* सर्वमातृकासु तुशब्दरहित एव पाठः ।

* इदं व्याख्यानुसारेण मुद्रितम् । सर्वमातृकासु 'लौकिकास्वादात्' इति समास एव पठ्यते ।

१. क. ख. ग. 'विषयाच्चान्य'
२. ग. 'सहृदयाः' नास्ति ।
३. क. ख. ग. 'प्रतीत्या'
४. क. ख. ङ. च. छ. 'तत एव'
५. क. ख. घ. ङ. च. छ. 'ध्वनौ' नास्ति ।
६. क. ख. 'रसभावम्'
७. क. ख. ग. 'द्वन्द्वरूढम्' ङ. 'ददुरुटम्' च. 'दुर्दुरभम्'
८. घ. 'कव्यते'
९. घ. 'वाच्यमपि'
१०. घ. ङ. च. छ. 'लक्षणां साम'
११. घ. 'अनवेक्ष्यैव'

## ध्वन्यालोकः

## कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।

### लोचनम्

विश्रान्तिरित्यलं बहुना । उपसंहरति—**तस्माद्भक्तिरिति**[1] ॥

ननु मा भूद्भक्तिरिति[2] ध्वनिरिति[3] चैकं रूपम् । मा च भूद्भक्तिर्ध्वनेर्लक्षणम् । उपलक्षणं तु[4] भविष्यति[5] यत्र ध्वनिर्भवति तत्र भक्तिरप्यस्तीति[6] भक्त्युपलक्षितो ध्वनिः । न तावदेतत्सर्वत्रास्ति । इयता च किं परस्य सिद्धम् ; किं वा नः[7] त्रुटितम्[8] तदाह—**कस्यचिदिति**[9] ॥ ननु अत्र[10] भक्तिस्तावच्चिरन्तनैरुक्ता । तदुपलक्षणमुखेन च ध्वनिमपि

### कौमुदी

एवं भक्तिर्लक्षणं ध्वनेरिति द्वितीयं पक्षं प्रतिक्षिप्य संप्रत्युपलक्षणपक्षं प्रतिक्षिपति—**ननु मा भूदिति** ॥ कथमुपलक्षणत्वमिति तदाह—**यत्रेति** ॥ यथा काको देवदत्तगृहस्य न स्वरूपम्, न धर्मतया लक्षणम् ; किन्तु कदाचित् संभवमात्राद्व्यावृत्तिप्रतिपत्तिहेतुः तद्वदियमपीत्यर्थः । अस्योत्तरत्वेन कारिकामवतारयति—**न तावदिति** ॥ परस्यापि संप्रतिपन्नमिति भावः । एतदित्युपलक्षणम् । तथा सत्युपलक्षणत्वमेव भज्येतेति भावः । ननु संभवमात्रादेव सन्तुष्याम इति नेति सोत्प्रासमाह—**इयतेति** ॥ भक्तिरेव ध्वनिरिति भवत्पक्षस्तावन्न सिद्ध इत्यर्थः ॥ **त्रुटितमिति** ॥ न्यग्भावितशब्दार्थयुगळं काव्यजीवितं ध्वनिरित्यस्माकमस्य मतस्य न काचित् क्षतिरित्यर्थः । ननूपलक्षणत्वाभ्युपगन्तृभिः न भक्तिव्यतिरेकेण ध्वनिस्वरूपाभाव एव सिषाधयिषितः, किं तु भक्तितो व्यतिरेकेण संभवन्नयं ध्वनिर्न लक्षणीयो भवितुमर्हति । भक्त्यैवोपलक्षणभूतया सजातीयविजातीयव्यावृत्ततया स्वयमवगम्य तयैव द्वारा तत्प्रतिपित्सवोऽपि

१. ङ. 'तस्मादिति'
२. क. ख. 'भूद्भक्तिर्ध्वनिरिति'
   ग. 'भूदध्वनिरिति भक्तिरिति'
३. घ. 'ध्वनिरिति' नास्ति ।
४. क. ख. 'तु' नास्ति ।
५. क. ख. 'भविष्यति'
६. घ. 'अस्त्विति'
७. क. ख. ग. 'नु'
८. क. ख. ग. 'इति' अधिकम् ।
९. क. ख. ग. 'इत्यादि'
१०. क. ख. ग. घ. 'अत्र' नास्ति ।

## ध्वन्यालोकः

सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षणतया संभा[1]व्येत । यदि च गुणवृत्त्यैव ध्वनेर्लक्ष्यत इत्युच्यते तदभिधाव्यापारेण त[2]दितरोऽलंकारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलंकाराणां लक्षणकरण[3]वैयर्थ्यप्रसङ्गः । किं च

## लोचनम्

समग्रभेदं लक्षयिष्यन्ति ज्ञा[4]स्यन्ति च । किं तल्लक्षणेनेत्याशङ्क्याह—**यदि चेति** ॥ अभिधानाभिधेयभावो ह्यलंकाराणां व्यापक[5]ः । ततश्चाभिधावृत्ते वैयाकरणमीमांसकैर्निरूपिते कुत्रेदानीमलंकाराणां [कारकाराणां] व्यापारः ! त[6]था हेतुबलात्कार्यं जायत इति तार्किकैरुक्ते किमिदानीमीश्वरप्रभृतीनां कर्तॄणां ज्ञातॄणां वा कृत्यमपूर्वं स्यादिति सर्वो निरालम्बः स्यात् । तदाह—**लक्षणक[7]रणवैयर्थ्यप्रसङ्ग इ[8]ति** ॥ मा भूद्वापूर्वोन्मीलनम् ; पूर्वोन्मीलितमे-

## कौमुदी

प्रतिबोधयितुं शक्या इति निरर्थकस्तल्लक्षणकरणप्रयास इति एतदाशङ्कते—**नन्वत्रेति** ॥ कथमभिधाव्यापारेणैव समस्तालंकारसिद्धिरुक्तेति तत्राह—**अभिधानेति** ॥ अभिधानाभिधेयभावस्य शब्दार्थालंकारभेदभिन्नसमस्तालंकारव्यापकत्वात्तस्य चाभिधाव्यापारजीवितत्वात्तन्निरूपणे कृतेऽलंकारनिरूपणमनर्थकमेव स्यात् । तत्र पदगतो व्यापारः पदविद्भिर्निरूपितः ; वाक्यगतस्तु वाक्यविद्भिरपि । अभिधाशब्देनात्र तात्पर्यशक्तिरपि संगृह्यते अन्विताभिधानसमयानुसारेण । सति चैवमलंकारकाराः कृतकर्तृताखलीकृतवृत्तयस्तूष्णीमेव स्वैरमासतामित्यर्थः । अतिप्रसङ्गान्तरमात्माव्याघातकमुद्घाटयति—**तथेति** ॥ **सर्व इति** ॥ ईश्वरप्रभृतिः कर्तृज्ञातृरूपो निमित्तकारणवर्गः । यथोक्तातिप्रसङ्गविषयत्वं ग्रन्थस्यानुद्भिन्नमिति तदुद्भेदनार्थमाह—**तदाहेति** ॥ लक्षणस्य करणस्य च वैयर्थ्यप्रसङ्ग इति विभज्य व्याख्येयमिति भावः ॥

ननु कृतकरणं व्यर्थम् इति कथं लक्षणस्य पूर्वकृतत्वाभ्युपगम इत्याशङ्क्य लक्षितस्यापि सम्यक्त्वनिर्णयार्थत्वादानर्थक्याभाव इत्याशयेनाह—**मा भूदिति** ॥ वस्तु-

१. क. ख. 'संभाव्यते'
२. ग. 'इतरालङ्कार'
३. क. ख. घ. ङ. च. 'करणे'
४. क. ख. 'ज्ञास्यन्ति च' नास्ति ।
५. क. ख. 'व्यापकः . . . . अलंकाराणाम्' नास्ति ।
६. क. ख. ग. 'यथा'
७. क. ख. घ. ङ. च. 'करणे'
८. क. ख 'इति' नास्ति ।

ध्वन्यालोकः

**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ २२ ॥**

कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः, यस्माद्ध्वनिरस्तीति नः पक्षः । स च प्रागेव संसिद्ध इत्ययत्नसंपन्नसमीहितार्थाः संपन्नाः स्मः । येऽपि

लोचनम्

वास्माभिः सम्यङ्निरूपितम्, तथापि को दोष इत्यभिप्रायेणाह—**किं च** लक्षणेऽन्यै-रिति ॥ **प्रागेवेति**[3] ॥ अस्मत्प्रयत्नादिति शेषः । एवं त्रिप्रकारमभाववादम्, भाक्तान्तर्भूतत्वं च निराकुर्वतालक्षणीयत्वमेतन्मध्ये निराकृतमेव । अत एव मूलकारिका साक्षात्तन्निरा-करणार्था न श्रूयते । वृत्तिकृत्तु निराकृतमपि प्रमेयशय्यापरिपूरणाय स्वकण्ठेन तत्पक्षमनूद्य निराकरोति—**येऽपीत्यादिना** ॥ उक्तया नीत्या 'यत्रार्थः शब्दो वा—' इति

कौमुदी

स्वरूपविषयविवादाभावे सति केवलं लक्षणकरणविवादे दौर्जन्यमुद्रामात्रमार्जयन्ति । लक्षणस्य कृतत्वे तत्सम्यक्त्वसिद्धिः, अकृतत्वे पुनस्तदुन्मीलनमेव तावत् प्रयोजनपदवी-मधिशेते । सर्वथा तु जितमेवास्माभिरित्यर्थः ॥

ननु कारिकायामितरपक्षद्वयवदलक्षणीयत्वपक्षः किमिति न प्रत्यक्षेपीत्याशङ्क्य प्रतिक्षेपाभावोऽसिद्ध इत्याह—**एवमिति** ॥ ध्वनिस्वरूपप्रदर्शनमुखेन हि पक्षान्तरनिरा-करणमत्र कृतम् । न च तदलक्षणीयत्वे तस्य संभवतीति तन्निराकरणनान्तरीयकत्वे-नालक्षणीयत्वपक्षोऽपि निराकृत इत्यर्थः । यद्यपृथग्यत्नसिद्धत्वात् कारिकायां तन्निरा-करणाभावः तर्हि वृत्तिकृतोऽपि तन्निरासो व्यर्थ इति आह—**वृत्तिकृत्त्विति** ॥ प्रमेयशय्या प्रमेयसन्निवेशविशेषः । 'उक्तया नीत्या' 'वक्ष्यमाणया' इति च द्वयं क्रमेण सामान्यविशेष-लक्षणविषयमिति दर्शयन्नदसीयं क्षेत्रमाह—**यत्रेति** ॥ भविष्यतीति कथनरूपक्रिया-विशेषपरतया व्याख्येयम् । यदि वा लक्षणशब्दस्तद्विषयवचनलक्षणपरः ॥

१. क. ख. 'वादिनः'
२. क. ख. ग. 'किञ्चेति'
३. घ. 'इति' नास्ति।
४. ग. घ. 'अस्मात्'
५. क. ख. ग. 'भक्त्यन्तर्भूततां'
६. घ. 'भूततां'
७. घ. 'एव तन्मध्ये'
८. ग. 'निराकुर्वत एव'
९. ङ. च. 'तन्मूल'
१०. घ. 'साक्षात्' नास्ति।
११. क. ख. 'संख्यापूरणाय'
ग. 'संख्यापरिपूरणाय'
१२. क. ख. 'स्व' नास्ति।
१३. क. ख. 'यत्रार्थः....नीत्या' नास्ति।

ध्वन्यालोकः

सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुः, तेऽपि न परीक्ष्यवादिनः ; यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि

लोचनम्

सामान्यलक्षणं प्रतिपादितम् । वक्ष्यमाणया तु[1] नीत्या विशेषलक्षणं भविष्यति 'अर्थान्तरे संक्रमितम्' इत्यादिना । तत्र[2] प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम् । द्वितीयोद्द्योते[3] तु कारिकाकारोऽवान्तरविभागं[4] विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्[5] । तदाशयानुसारेण तु[6] वृत्तिकृदत्रैवोद्द्योते[7] मूलविभागमवोचत्[8]

कौमुदी

नन्वविवक्षितवाच्यविवक्षितान्यपरवाच्यप्रभेदद्वयस्यापि सोदाहरणस्यात्र प्रदर्शितत्वात् 'उक्तया नीत्या सामान्यलक्षणं प्रतिपादितम्' इत्युक्तमयुक्तमित्याशङ्क्य, सत्यम् वृत्तिकृता हि तत्कृतम् ; कारिकाकाराभिप्रायेण त्वियमुक्तिरित्याह—**तत्र प्रथमोद्द्योत इति** ॥ द्वितीयोद्द्योतस्यातिसन्निहितत्वात्तत्रस्थस्यैवायमाचार्यस्य प्रथमोद्द्योते इति व्यपदेशः । तर्हि कारिकाकारानुक्तस्य मूलविभागस्य प्रथमोद्द्योते सामान्यलक्षणसन्निधौ वृत्तिकृतोऽभिधानमयुक्तमित्यत आह—**द्वितीयोद्द्योते त्विति** ॥

"अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥"

इति कारिकयावान्तरविभागः नाम्नोऽन्वर्थतया विशेषलक्षणं च विहितम् । तत्र च अविवक्षितवाच्यस्येत्ययमंशोऽनुवादरूपः, योऽयमविवक्षितवाच्यविवक्षितान्यपरवाच्ययोर्मध्येऽविवक्षितवाच्यो नाम प्रभेदस्तस्येत्येवं वचनव्यक्तिसमुन्मेषात् ; तेन च प्रथमोद्द्योत एव सामान्यलक्षणवन्मूलविभागस्यापि तत्सन्निधावेव प्रसिद्धतां कारिकाकारोऽभिसंहितवानेवेत्यवगच्छामः, पूर्वत्रासिद्धस्य पश्चादनुवादासंभवात् ; तदभिप्रायप्रदर्शनार्थोऽयं वृत्तिकृतोऽत्र द्वैविध्योपन्यास इति नासङ्गतिरित्यर्थः । सर्वशब्दस्य काव्यव्यतिरिक्तलोकशास्त्रविषयमसंकोचमाह—

१. ङ. च. 'तु' नास्ति ।
२. ङ. च. 'तेनात्र'
३. घ. ङ. च. 'द्वितीये तूद्द्योते'
४. च. 'अवान्तरभागम्'
५. क. ख. 'सूचितम्'
६. घ. 'तु' नास्ति ।
७. क. ख. 'वृत्तिर्यदत्र'
८. ग. 'मूलभागम्'

ध्वन्यालोकः

यद्यनाख्येयत्वं तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम् । यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायि तैः स्वरूपमाख्यायते तत्तेऽपि युक्ताभिधायिन एव ॥

## इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके प्रथम उद्द्योतः ॥

---

लोचनम्

'स च द्विविधः' इति ॥ **सर्वेषामेवेति**[२] ॥ लौकिकानां[३] शास्त्रीयाणां चेत्यर्थः ॥ **अतिशयोक्त्येति** ॥ यथा[४] 'तान्यक्षराणि हृदये किमपि स्फुरन्ति' इति[५] । अतिशयोक्त्या अनाख्येयतोक्त्या[६], साररूपतां[७] प्रतिपादयितुं दर्शितम्[८] । इति शिवम् ॥

कौमुदी

**लौकिकानामिति** ॥ अतिशयोक्तेरुदाहरणमाह—**यथेति** ॥ अतिशयोक्तिरत्रालङ्कार इति [इति न] मन्तव्यमित्याह—**अनाख्येयतोक्त्येति** ॥ अतिशयो वचनगोचरातिवर्तित्व-रूपोऽत्र विवक्षितः । तस्योक्तिरतिशयोक्तिः[१] । नन्वनाख्येयत्वमसत्त्वात् नृशृङ्गादिवदपि संभावनास्पदमिति, कथं काव्यान्तरातिशायित्वं युक्ताभिधायित्वं वेत्याशङ्क्याह—**साररूपतामिति** ॥ काव्यात्मत्वेनास्मदभिमतस्य ध्वनेः साररूपत्वमेव प्रतिपादयितुमियमनाख्येयतोक्तिरिति "यदि पुनः" इति वृत्तिग्रन्थेन पराभिप्रायानुभाषणपरेण प्रदर्शितमिति योजना । इदानीमात्मीयं प्रथमोद्द्योतव्याख्यानरूपं विशिष्टवाङ्मनसव्यापारं परशिवस्वरूप एव समर्पयन्नुपसंहरति—**इति शिवमिति** ॥ यदेतत्काव्यालोकव्याख्यानं तद्वस्तुतः शिवात्मकमेव, तत्प्रसृतत्वात् शिवस्वरूपाभिन्नत्वात्, परम्परया तत्प्राप्तिहेतुत्वाच्च ॥

संप्रति संभावनाप्रत्ययसंपादनेन श्रोतृजननिराशङ्कप्रवृत्तिसिद्धये निजनामधेय-निगदनपूर्वकं पौर्विककाव्यालोकव्याख्यानविशेषातिशयाल्लसौभाग्यभाजनतया विद्वज्जनो-

१. ग. 'अतिशयितम्'
२. क. ख. ग. 'एव' नास्ति ।
३. क. ख. 'लौकिकीयानां शब्दानां' शास्त्रीयाणां'
४. क. ख. ग. 'तथा'
५. ग. 'इतिवदतिशय'
६. क. ख. ग. 'तोक्ता'
७. क ख. 'सारभूततां'
८. क. ख. ग. घ. 'दर्शितम्' नास्ति ।

लोचनम्

किं लोचनं विनालोको भाति चन्द्रिकयैवं[1] हि ।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥
यदुन्मीलनयुक्त्यैव[2] विश्वमुन्मीलितं क्षणात् ।

कौमुदी

पादेयतामाह—किमिति ॥ क्षेपे किंशब्दः । लोचनम् स्वकीयमेतदेव व्याख्यानम् । आलोकः व्याख्येयत्वेन प्रस्तूयमानः काव्यालोकग्रन्थः । चन्द्रिका अस्यैवान्यकृतं व्याख्यानान्तरम् । अथ च लोको भुवनम्; लोचनेन नयनेन विना केवलं चन्द्रिकया किं भातीत्यप्रस्तुतमप्यर्थान्तरं स्फुरति । अनेन च—

"ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं
धीः पश्यति श्रान्तिमवेदयन्ती ।
फलं तदाद्ये परिकल्पितानां
विचारसोपानपरम्पराणाम् ॥"

इत्युक्तनीत्या स्वयमेव साधकत्वाभावे सत्यपि काव्यालोकार्थसतत्त्वावगमे निजलोचनसंपाद्ये कियानप्युपकारोऽस्त्येव, प्रधानोपायत्वमात्रं तु विघटते; न चैतावता सर्वत्रानुपकारकत्वमवगम्यताम् । न खलु तिमिरनिचयावकुण्ठितकुम्भादिनिभालने चन्द्रिकायाः सहकारित्वमपि विघटमानमुपलभ्यत इति दर्शितम् । हिर्यस्मादर्थे । अत्र काव्यालोके । अनुन्मीलितस्य लोचनस्याकिञ्चित्करत्वादभिहितम्—लोचनोन्मीलनमिति ॥ लोचनस्य स्वकीयस्य ज्ञानस्य उन्मीलनं प्रकाशनम् । विचारपूर्वकज्ञानस्य साक्षात्कारकल्पत्वाच्चेतसि लोचनत्वाध्यवसायः । नामग्रहणस्य प्रयोजनं तु प्रागेव दर्शितम् । अथोपक्रमवदुपसंहारेऽपि मङ्गलाचरणकर्तव्यतामभिसन्दधानः प्रथमोद्द्योतप्रतिपाद्यमर्थसर्वस्वं संक्षिप्य दर्शयन्नेतच्छास्त्रप्रतिपाद्याभीष्टदेवताभिवन्दनलक्षणं मङ्गलं संपादयति श्लोकेन—यदुन्मीलनेति ॥ शिवाशब्देन विश्वसारभूतस्य परमात्मशब्दवाच्यस्य परमेश्वरस्य महीयसी शक्तिपरादिशब्दाभिधेया स्वयंप्रकाशाद्वैतरूपा तदव्यतिरिक्तस्वरूपतया तदीयकृत्यसर्वस्वनिर्वहणधुरंधरा कापि देवताभिधीयते । तस्या एव वन्दनीयत्वे हेतुमुत्सूत्रयन् स्तौति—यदुन्मीलनेति ॥ यस्याः परिपूर्णस्वयंप्रकाशचैतन्यलक्षणायाश्चितिशक्तेः; उन्मीलनयुक्त्या स्पन्दनयोगेनैव; "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इत्यादिसूत्रोक्तनीत्या विश्वमुन्मीलति प्रकाशते, जडात्मकस्य स्वतोऽन्यतो वा प्रकाशासंभवात् ॥ क्षणादिति ॥ अन्यानपेक्षयेति यावत् । एवमविद्यावस्थाश्रयेणोक्तम् ।

१. क. ख. ग. 'चन्द्रिकयापि हि' २. ख. घ. ङ. च. 'शक्त्यैव'

लोचनम्

स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम् ॥

## ॥ इति महामाहेश्वराचार्याभिनवगुप्तोन्मीलिते[1] सहृदयालोक-लोचने ध्वनिसंकेते प्रथमोद्द्योतः ॥[2][3]

---

कौमुदी

अथ विद्यावस्थामाश्रित्याह—**स्वात्मायतनविश्रान्तामिति** ॥ स्वस्यात्मा स्वरूपं स्वप्रकाशपरिपूर्ण[र्णता]शालिचैतन्यलक्षणम्, तदेवायतनं स्थानं नान्यत्, तस्मिन्नेव विश्रान्तामवस्थितां परमार्थतः । एतदन्यापोहदृशोक्तम्; तत्स्वरूपमाह—**प्रतिभामिति** ॥ विगलितविविधविषयोपरागकलितकालुष्यसतताविर्भवदतिविमलविततप्रकाशमात्ररूपामित्यर्थः । अथवा तां प्रसिद्धां शिवां रसावेशवैशद्यनिरवद्यसुन्दरतया सुभगां प्रतिभां कवीनां सहृदयानां च तद्वर्णनीयवस्तुनिष्ठां विशिष्टपुण्यपरिपाकलभ्यां प्रज्ञाविशेषलक्षणां वन्दे यस्या उन्मीलनयोगेनैव बहिस्तत्तादृशसन्ताना[त्तान]पेक्षयैव प्रतिक्षणमेव नवनवतया विश्वमवभासते "यथास्मै रोचते विश्वं तथेदं परिवर्तते" इत्युक्तेः । स्वात्मन्येवायतने विश्रान्तां वासनात्मना निलीय सर्वदोपसंहृतस्वरूपाम् । यदि वा रसस्यैव वस्तुतः काव्यात्मत्वात् तस्य चात्मानन्दामृताम्भोधिलहरीविप्रुण्मात्रत्वादात्मनि विश्रान्तत्वमभिहितम् ॥

अनेनैव प्रथमोद्द्योतार्थोऽपि लेशतो दर्शित एव, ध्वनिसामान्यलक्षणं ह्यत्र प्राधान्येनाभिहितम्; तेन च तस्य क्रोडीकृतसकलावान्तरभेदं स्वरूपमुन्मीलितम्; तदुन्मीलने च तदवान्तरभेदोन्मीलनं सुसंपादं विशेषावधारणस्य सामान्यावधारणाधीनत्वात्, सामान्योपाधौ च विशेषाणामन्तर्भावात्; अतश्चात्र प्रतिभेति काव्यात्मभूतध्वनिस्वरूपावधारणं गृहीतम् । तस्य च प्रतिभाशब्दवाच्यत्वं विचारजन्यज्ञानस्य परिनिश्चितस्वरूपतया साक्षात्कारप्रायत्वात्; शिवात्मकत्वं च निरतिशयानन्दरूपत्वात् । वन्दे इत्यनेन सर्वोत्कृष्टत्वमिति ॥

१. क. ख. 'आचार्यवर्य' घ. ङ. च. 'आचार्य' नास्ति ।　२. ग. 'विरचिते'　३. ग. 'काव्यालोकलोचने प्रथमः'

एवमुद्द्योतान्ते तत्प्रतिपाद्यार्थसंक्षेपः श्रोतृव्याख्यातृसुखग्रहार्थं मङ्गलाचारात्मक एवास्मिन् पद्ये लाघविकतया ग्रन्थकारेण मनागुन्मीलित इति सकलमतिमङ्गलम् ॥

यत्पादाब्जकुटुम्बिनीपरिणता भक्तिद्रुसद्वल्लरी
हस्तादेयमिव प्रसौति चतुरः पूर्णान् पुमर्थान् फलम् ।
अध्यासीनमधःस्थलीं वटतरोर्मध्ये महायोगिना-
मुद्भूतानतमोहमस्तु सततं तद्धाम हृद्धाम नः ॥

इत्थं मोहतमोनिमीलितदृशां ध्वन्यर्थमार्गे यतां
व्याख्याभासमहोष्मसंज्वरजुषां प्रेक्षावतां प्रीतये ।
उत्तुङ्गादुय[दुदय]क्षमाभृत उदेयुष्याममुष्यामयं
कौमुद्यामिह लोचनस्य विवृतावुद्योत आद्यो गतः ॥

## इति श्रीकेरलीयसहृदयशिखामणि-श्रीमदुत्तुङ्गोदयराज-कृतायां लोचनव्याख्यायां कौमुद्यां प्रथम उद्द्योतः

ओम्

---

THE M. L. J. PRESS, MYLAPORE, MADRAS.

# सूच्यः[1]

## ध्वन्यालोकमूलकारिकासूची



---

१. इमाः सूच्यः डाक्टर् वे. राघवेण संपादिताः ।

## वृत्तिगतश्लोकसूची



## वृत्त्युदाहृतश्लोकसूची

# लोचनस्थोदाहरणादिसूची

## लोचनस्मृतग्रन्थग्रन्थकृतां सूची



## कौमुद्युदाहृतश्लोकादिसूची

## कौमुदीस्मृतग्रन्थग्रन्थकृतां सूची



---

* अलंकारसर्वस्वसूत्रतद्वृत्त्योः कर्तृविषये विसंवादो दृश्यते । अनन्तशयनमुद्रितपुस्तके समुद्रबन्धव्याख्यायां मूलसूत्राणां रुय्यकः, वृत्त्याः तच्छिष्यो मङ्खुकः कर्तेति दृश्यते । कौमुद्यां तु अनेकत्र सूत्राणि मङ्खुकनामोदाहरणपूर्वं निर्दिष्टानि, वृत्तिश्च २०१ पृष्ठे तथैव मङ्खुकनाम्ना उदाह्रियते ॥

## उपलोचनोदाहृतग्रन्थग्रन्थकृतां सूची

# JOURNAL OF ORIENTAL RESEARCH, MADRAS.

---

## PUBLICATIONS

| | | |
|---|---|---|
| 1. | **Vibhrama-Viveka** of Maṇḍana Miśra —edited by Mahāmahopādhyāya Vidyāvācaspati Prof. S. Kuppusvami Sastriar, M.A., I.E.S. (Retd.) and Śāstraratnākara Prof. T. V. Ramachandra Dikshitar, Sanskrit College, Mylapore, Madras .. | 0 12 0 |
| 2. | **Vīṇāvāsavadatta** (an old Sanskrit drama)—edited by Mahāmahopādhyāya Vidyāvācaspati Prof. S. Kuppusvami Sastriar, M.A., I.E.S. (Retd.) and Dr. C. Kunhan Raja, M.A., D.Phil. (Oxon.), Reader in Sanskrit, University of Madras. | 0 8 0 |
| 3. | **Tolkāppiyam** with an English translation—by Dr. P. S. Subrahmanya Sastri, M.A., L.T., Ph.D., Head of the Sanskrit Dept., Annamalai University. (Vol. I) ... | 1 0 0 |
| 4. | **Tolkāppiyam** Do. Do. Vol. II, Part I. | 1 0 0 |
| 5. | **History of Grammatical Theories in Tamil,** by Dr. P. S. Subrahmanya Sastri, M.A., L.T., Ph.D., Head of the Sanskrit Dept., Annamalai University. | |

*Copies can be had of :—*

***The Kuppuswami Sastri Research Institute,***

***Mylapore, Madras.***